KÂVYAMÂLÂ. 83.

# THE RÂMÂYAṆA-MAÑJARÎ

OF

KSHEMENDRA.

EDITED BY

PAṆḌIT BHAVADATTA S'ÂSTRÎ,

2nd Paṇḍit, Government College, Ajmer,

Son of

IAHÂMAHOPÂDHYÂYA PAṆḌIT S'IVADATTA,

ead Paṇḍit and Superintendent, Sanskṛit Department,

Oriental College, Lahore,

AND

KÂS'ÎNÂTH PÂṆDURANG PARAB.

PRINTED AND PUBLISHED

BY

TUKÂRÂM JÂVAJÎ,

PROPRIETOR OF JÂVAJÎ DÂDÂJÎ'S 'NIRṆAYA-SÂGARA' PRESS.

BOMBAY.

1903.

*Price 3¼ Rupees.*

काव्यमाला. ८३.

श्रीक्षेमेन्द्रविरचिता

# रामायणमञ्जरी ।

जयपुरमहाराजाश्रितमहामहोपाध्यायपण्डितदुर्गाप्रसादतनय-
साहित्योपाध्यायकेदारनाथकृपाङ्गीकृतशोधनकर्मणा
महामहोपाध्यायपण्डितशिवदत्तशर्मतनूजपण्डितभवदत्तशास्त्रिणा,
मुम्बापुरवासिपरबोपाह्वपाण्डुरङ्गात्मजकाशीनाथशर्मणा च
संशोधिता ।

सा च
मुम्बय्यां निर्णयसागराख्ययन्त्रालये तदधिपतिना मुद्राक्षरैरङ्कयित्वा
प्राकाश्यं नीता ।

१९०३



मूल्यं सपादं रूप्यकत्रयम् ।

# रामायणमञ्जर्या विषयानुक्रमणिका ।

# काव्यमाला।

## काश्मीरिकमहाकविश्रीक्षेमेन्द्रविरचिता
## रामायणमञ्जरी।

वालकाण्डम्।

जितं भगवता तेन हरिणा लोकधारिणा।
अजेन विश्वरूपेण निर्गुणेन गुणात्मना॥ १॥
ज्येष्ठो जयति वाल्मीकिः सर्गबन्धे प्रजापतिः।
यः सर्वहृदयालीनं काव्यं रामायणं व्यधात्॥ २॥
स्वच्छप्रवाहसुभगा मुनिमण्डलसेविता।
यस्मात्स्वर्गादिवोत्पन्ना पुण्या प्राची सरस्वती॥ ३॥
नुमः सर्वोपजीव्यं तं कवीनां चक्रवर्तिनम्।
यस्येन्दुधवलैः श्लोकैर्भूषिता भुवनत्रयी॥ ४॥
पुरा मुनिः सभासीनः स यदृच्छागतं मुनिम्।
कथाप्रसङ्गे पप्रच्छ प्रणयादिव नारदम्॥ ५॥
लोकेऽस्मिन्सांप्रतं वीरः श्रीमान्कः सुकृतोज्ज्वलः।
कीर्तिर्विराजते यस्य ज्योत्स्नेव रजनीपतेः॥ ६॥
भूषिता सत्त्वशुभ्रेण जगती गुणशालिना।
केन लक्ष्मीविहारेण हारेणेव वराङ्गना॥ ७॥
प्रजानां जीवितं को नु लतानामिव माधवः।
कुरुक्षेत्रं गुणानां च रत्नानामिव सागरः॥ ८॥
इति पृष्टो मुनीन्द्रेण नारदः प्रत्यभाषत।
मुक्तामणिर्मनोर्वंशे [1]चरितै रघुनन्दनः॥ ९॥

---

१. 'सद्वृत्तः सद्गुणोचितः' इत्यपि पाठः केनापि पूरितः.

गुणाभिरामः श्रीरामो विरामो वैरिसंपदाम् ।
जगद्येन हरेर्वक्षः कौस्तुभेनेव राजितम् ॥ १० ॥
जायासमयबद्धस्य पितुर्दशरथस्य यः ।
शिरसा विषमामाज्ञां हेममालामिवाग्रहीत् ॥ ११ ॥
दारापहारकोपाग्नौ मुखैर्दशमुखस्य यः ।
ददौ रक्ताज्यसंसिक्तै रसाक्ताः श्रीफलाहुतीः ॥ १२ ॥
तस्याद्य दोष्णि विन्यस्य भरं विश्वंभरापतेः ।
शेषः कुवलयं मूर्ध्ना धत्ते कुवलयं यथा ॥ १३ ॥
उक्त्वेति याते देवर्षौ हर्षनिर्भरमानसः ।
मुनीन्द्रोऽपि ययौ क्षिप्रं विस्मयावेशवश्यताम् ॥ १४ ॥
स गत्वा तमसातीरं तीर्थे स्नात्वा कृतार्चनः ।
चचार शिष्यसहितः पुण्यासु वनभूमिषु ॥ १५ ॥
तस्याग्रे क्रौञ्चमिथुनादेकं मन्मथमोहितम् ।
स ददर्श निषादेन निहतं निशितेषुणा ॥ १६ ॥
ततः श्लोकच्छलात्तस्य शोकानलसमीरितः ।
दयया हृदयालीनो निर्गतः करुणो रसः ॥ १७ ॥
अहो निष्करुणेनेदं निषादेन विषादकृत् ।
कृतं कुकृतशीलेन कर्म मर्मविदारणम् ॥ १८ ॥
मा निषाद प्रतिष्ठां त्वमालभ्धाः शाश्वतीः समाः ।
यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम् ॥ १९ ॥
इत्युक्त्वा करुणासिन्धुः समीपस्थं पुनः पुनः ।
श्लोकं पठन्मुहुः शोकादिति शिष्यमभाषत ॥ २० ॥
ततस्तत्र नदीतीरे स्थितः शिष्ययुतो मुनिः ।
ददर्श श्लोकसंतोषात्स्वयं ब्रह्माणमागतम् ॥ २१ ॥
मुनिनाभ्यर्चितस्तत्र पाद्यपूजासनादिभिः ।
सोऽवदत्पुण्यपीयूषं दन्तकान्त्या किरन्निव ॥ २२ ॥

अहो सारस्वतः कोऽपि तरुणः करुणावतः ।
अवतीर्य तव मुने प्रसरः सरसः स्वयम् ॥ २३ ॥
रामस्य चरितं चारु काव्यबन्धो विधीयताम् ।
अस्तु चैवं सुधाधौता कृतकृत्या सरस्वती ॥ २४ ॥
लोकेष्वनेककल्पान्तस्थायि कर्णामृतं सताम् ।
कुरु रामायणं पुण्यं यशो निजमिवोज्ज्वलम् ॥ २५ ॥
इत्युक्त्वान्तर्हिते क्षिप्रं प्रजासृजि मुनीश्वरः ।
कर्तुं प्रचक्रमे रामचरितं ज्ञानलोचनः ॥ २६ ॥
उपस्पृश्योदकं मौनी योगी रामकथां पुनः ।
प्राचीनाग्रेषु दर्भेषु हृदि कर्तुं समादधे ॥ २७ ॥
प्राप्तराज्यस्य रामस्य वृत्तं वृत्तपदोचितम् ।
भविष्यच्चरितोपेतं सर्गबन्धे विधाय सः ॥ २८ ॥
मुनीन्द्रः पाठयामास रामपुत्रौ वनेचरौ ।
[1]गीतस्वराविष्टपदौ विभक्तमधुरस्वरौ ॥ २९ ॥
कुशो लवश्च तौ ख्यातौ पुरो मुनिमनीषिणाम् ।
अगायतां मुनेः काव्यं भूमिपालसभासु च ॥ ३० ॥
कदाचिद्गूढवेशौ तौ ह्यश्वमेधमखे पितुः ।
रामायणं रसोदारं [2]राघवस्यापि गायताम् ॥ ३१ ॥
कोसलाख्ये जानपदे सरयूतीरसंश्रये ।
अस्त्ययोध्येति नगरी [3]रम्या [4]कर्मावधिर्विधेः ॥ ३२ ॥
स्फारस्फटिकसौधांशुहासिनी निर्मिता स्वयम् ।
मनुना मनुजेन्द्रेण मूर्ता कीर्तिरिवात्मनः ॥ ३३ ॥
मणिमन्दिरसंभारप्रभावलयमालिता ।
कीर्तिकल्लोलिनी कूले बिम्बितेवामरावती ॥ ३४ ॥

---

१.'गीतस्वराविष्टपरौ' ग. २. 'रामस्याग्रेऽपि' ग; परंतु अटो लङि दुर्वारत्वेन 'ऽ
यताम्' इति स्यात्. ३. 'रसा' क. ४. 'कर्म्या' ग.

सानन्दसुन्दरीवृन्दवदनैः कृतचन्द्रिका ।
राजधानीव चन्द्रस्य पुत्रपौत्रशतैर्वृता ॥ ३५ ॥
तस्यां दशरथो नाम बभूवेक्ष्वाकुनन्दनः ।
भुजेन भूमिवलयं वलयं च बभार यः ॥ ३६ ॥
भिन्नेभमुक्तातारासु स्फारस्वरणरात्रिषु[1] ।
यशश्चन्द्रः स्वयं भेजे राज्यश्रीरभिसारिका ॥ ३७ ॥
गम्भीरः सत्त्वरत्नाढ्यः पुरुषोत्तमसेवितः[2] ।
समुद्रसदृशोऽप्यासीद्विमुद्रो यः सदार्थिषु ॥ ३८ ॥
गजेन्द्रदानसलिलप्रवाहैर्यस्य दिग्जये ।
यमुनालिङ्गनप्रीतिमवाप सरितां पतिः ॥ ३९ ॥
क्व हारः क्व च कर्पूरं क्व च मन्दारमालिका ।
इति यद्यशसा व्योम्नि शुभ्रे स्वर्गाङ्गना जगुः ॥ ४० ॥
युधि पीतमरातीनां यत्खड्गेनानिशं यशः ।
तद्वान्तं लग्नभिन्नेभकुम्भमुक्ताफलच्छलैः ॥ ४१ ॥
त्रैलोक्यजयिनः शक्रः कथं तस्योपमास्पदम् ।
अमात्या मुनयो यस्य वशिष्ठश्च पुरोहितः ॥ ४२ ॥
संधिविग्रहकालज्ञाः सर्वप्रकृतिचिन्तकाः ।
भूभारदिग्द्विपाधीरा बभूवुस्तस्य मन्त्रिणः ॥ ४३ ॥
[3]संधिर्जयन्तो विजयः सिद्धार्थो राष्ट्रवर्धनः ।
अशोको धर्मपालश्च सुमन्त्रश्चेति[4] संमतः ॥ ४४ ॥
पुत्रार्थिनं कदाचित्तं चिन्तासक्तमथाब्रवीत् ।
अश्वमेधकृतोद्योगं सुमन्त्रो मन्त्रिणां वरः ॥ ४५ ॥
देव चिन्तापरिस्पन्दमन्दीकृतवपुः कथम् ।
उत्ताम्यसि, भविष्यन्ति सर्वथा तनयास्तव ॥ ४६ ॥

---

१. 'स्फारासु' स्यात्. २. विष्णुः, पुरुषेषूत्तमश्च. ३. 'धृष्टिर्जयन्तो विजयः सुराष्ट्रो राष्ट्रवर्धनः । अकोपो धर्मपालश्च सुमन्त्रश्चाष्टमोऽर्थवित् ॥' इति रामायणे. ४. 'श्चाति' स्यात्; 'श्चेति संमताः' स्व.

सनत्कुमारो भगवान्पुरा मुनिसभास्थितः ।
भाविनीं त्वत्कथामूचे विमलज्ञानलोचनः ॥ ४७ ॥
राजा दशरथः पुत्रान्पवित्रचरितव्रतान् ।
ऋष्यशृङ्गस्य यागेन संप्राप्स्यति कुलोचितान् ॥ ४८ ॥
विभाण्डकस्य स मुनेः [1]कश्यपस्यात्मजो मुनिः ।
ऋष्यशृङ्गो नृसङ्गानामनभिज्ञो मृगीसुतः ॥ ४९ ॥
स ब्रह्मचारी विपिने हरिणानामकल्मषः ।
ब्रह्मचारी चचारोग्रं [2]तपस्तपनसंनिभः ॥ ५० ॥
अस्मिन्नवसरे राज्ञो लोमपादस्य चाभवत् ।
अवृष्टिरङ्गविषये विप्रशापसमुद्भवा ॥ ५१ ॥
वि[3]पत्तिशमनं तत्र स ज्ञात्वा ब्रह्मणाज्ञया ।
[4]ऋष्यशृङ्गो बभूवाशु तदानयनसादरः ॥ ५२ ॥
अदृश्यं तेजसा ज्ञात्वा तमपृच्छन्नसंभृतः ।
दिदेश चास्यानयने प्रगल्भा वारयोषितः ॥ ५३ ॥
विलासहासकुसुमास्ता लोलालकषट्पदाः ।
ययुस्तपोवनं तस्य रुचिराधरपल्लवाः ॥ ५४ ॥
विभाण्डकमुनेर्भीत्या लताजालान्तरेषु ताः ।
तस्थुस्तद्रहितं कालं तत्सुतं च समाययुः ॥ ५५ ॥
तान्विलोक्यानभिज्ञोऽपि स जहर्ष जितेन्द्रियः ।
सहजैवाभिलाषेषु जन्तूनां जन्मवासना ॥ ५६ ॥
सानन्दस्तान्स विज्ञाय साधून्मुनिकुमारकान् ।
तत्केलिविभ्रमकलाविलासरसिकोऽभवत् ॥ ५७ ॥
अयत्नालिङ्गनैस्तुङ्गकुचकुम्भपुरःसरैः ।
ह्रियमाणः स शनकैर्नीतस्ताभिर्निजां पुरीम् ॥ ५८ ॥

---

१. 'काश्यपस्या' स्यात्. २. 'तपः पवन' ग. ३. 'विपत्प्रश' ग. ४. पुस्तकत्रयेऽपि त्रुटिचिह्नं न दृश्यते, तथापि त्रुटितं प्रतीयते. यद्वा 'लोमपादो' इति पाठो भवेत्.

प्राप्तेऽङ्गविषये तस्मिन्नवृष्टिप्रभवा विपत् ।
प्रशशामामृतासारधारैरिव पयोधरैः ॥ ५९ ॥
तत्प्रीत्या लोमपादोऽस्मै शान्तां दुहितरं ददौ ।
अपुत्रस्तत्सुतां पुत्रतुल्यां जग्राह तां पुनः ॥ ६० ॥
स राज्ञस्तस्य जामाता मुनिस्तव च धर्मतः ।
प्रसाद्य भवता नीतः कुशलं ते विधास्यति ॥ ६१ ॥
सुमन्त्रेणेति कथिते वशिष्ठानुमतो नृपः ।
आनिनायाङ्गविषयमृष्यशृङ्गं वधूसखम् ॥ ६२ ॥
इति ऋष्यशृङ्गोपाख्यानम् ॥ १ ॥
तत्प्रसादादथ श्रीमानश्वमेधो महीपतेः ।
आवर्तत महारम्भसंभारो भूरिदक्षिणः ॥ ६३ ॥
तस्मिन्यज्ञे नरेन्द्राणां मुनीन्द्राणां च संघशः ।
हृष्टानां त्रिदशानां च समाजः सुमहानभूत् ॥ ६४ ॥
विधिना परिपूर्णेऽथ क्रतौ राजशतक्रतोः ।
पुंत्र्यामिष्टिमप्यकरोदृष्यशृङ्गस्तदर्थिनः ॥ ६५ ॥
अत्रान्तरे दशास्येन विप्रवासितसंपदः ।
ययुश्चतुर्मुखमुखाः सुराः शरणमच्युतम् ॥ ६६ ॥
ते तमूचुः सुराराति वरदानेन वेधसः ।
करोति देवानसुरान्दुर्जयो देव रावणः ॥ ६७ ॥
अवध्यः सर्वभूतानां स मनुष्यादृते युधि ।
तस्माद्दशरथस्याद्य भगवन्व्रज पुत्रताम् ॥ ६८ ॥
चतुर्धा योगमास्थाय विभज्यात्मानमात्मना ।
अवतीर्य धरां विष्णो जहि त्रैलोक्यकण्टकम् ॥ ६९ ॥
इत्युक्ते त्रिदशैर्भीतैस्तथेत्युक्ते च विष्णुना ।
पुत्रेष्ट्यां परिपूर्णायां राज्ञो दशरथस्य च ॥ ७० ॥

---

१. 'पुण्या' क-ख-ग. २. देवाधिकाराधिपानित्यर्थः; यद्वा देवान् देवाधिकारच्युतानित्यर्थः.

उदतिष्ठन्महद्भूतं पावकात्कृष्णपिङ्गलम् ।
हेमपात्रं समाधाय दोर्भ्यां पायसपूरितम् ॥ ७१ ॥
प्राजापत्यः स पुरुषो मुनेर्वाक्यान्नृपाय तम् ।
पुत्रीयपायसं पात्रं प्रतिपाद्य तिरोदधे ॥ ७२ ॥
तदादाय च भूपालः पायसं मुनिशासनात् ।
देवीभ्यः प्रददौ दिव्यं मूर्तं हर्षमिवात्मनः ॥ ७३ ॥
ततोऽर्धं प्राप कौसल्या चतुर्भागं च कैकयी ।
चतुर्भागं सुमित्रा च स्वयं तेन द्विधा कृतम् ॥ ७४ ॥
विसृष्टाखिलभूपेन पूजितः पृथिवीभुजा ।
कान्तां शान्तां समादाय राजपुत्रीं ययौ मुनिः ॥ ७५ ॥
अथ कालेन कौसल्या प्रागसूत सुतं सती ।
रामं विरामं द्विषतां देवं सूर्यमिवादितिः ॥ ७६ ॥
सुषुवे भरतं देवी कैकेयी तनयोत्तमम् ।
प्राप लक्ष्मणशत्रुघ्नौ सुमित्रा पुत्रकावपि ॥ ७७ ॥
क्रीडासु विद्याविनये विस्रम्भे चानुगोऽभवत् ।
रामस्य लक्ष्मणो नित्यं शत्रुघ्नो भरतस्य च ॥ ७८ ॥
दन्तैरिवेन्द्रद्विरदो वरुणः सागरैरिव ।
तैः सुतैः शुशुभे भूपः कैटभारिर्भुजैरिव ॥ ७९ ॥
शस्त्रास्त्रग्रामशिक्षाणां विद्यानां विशदाशयः ।
कलानां च बभूवुस्ते संक्रान्तिमणिदर्पणाः ॥ ८० ॥

इति रामादिपुत्रोत्पत्तिः ॥ २ ॥

अथ राजसभासीनं प्रविश्य प्रणता नृपम् ।
तूर्णमूचुः प्रतीहारा हेमवेत्रांशुमालिनः ॥ ८१ ॥
देव तीव्रतपस्तेजःपुञ्जपिञ्जरिताम्बरः ।
विश्वामित्रो दिदृक्षुस्त्वामागच्छन्दृश्यते मुनिः ॥ ८२ ॥

---

१. रामायणसप्तदशसर्गे वानरावतरणकथा कविनात्र नोपनिबद्धा.

तच्छ्रुत्वा सहसा राजा वशिष्ठसहितः स्वयम् ।
प्रत्युद्ययौ[1] मुनिवरं हर्षपीयूषनिर्भरः ॥ ८३ ॥
स पूज्यः पूजितस्तेन प्रविश्यालंकृतासनः ।
सभायां नृपतिं प्रीत्या पप्रच्छानामयं शनैः ॥ ८४ ॥
ततो जगाद दशनप्रभाकुसुमितां पुनः ।
कुर्वाणः सफलां वाणीं विनयेन नरेश्वरः ॥ ८५ ॥
भगवन्भवतः पुण्यहर्षपीयूषवर्षिणः ।
दर्शनं ताण्डवायैव सत्यं मित्रशिखण्डिनाम् ॥ ८६ ॥
त्वद्दर्शनसुधासारसिक्ता सुकृतवल्लरी ।
पुण्यपुष्पोज्ज्वला सूते प्रहर्षमतुलं फलम् ॥ ८७ ॥
इयमेव भवाम्भोधिविरतस्यामृतच्छटा ।
यद्विवेकोदयस्फीतं दर्शनं च भवादृशाम् ॥ ८८ ॥
तपस्तीर्थाभिषेको वा महद्भिर्वा समागमः ।
एतास्ता जन्मरजसः परिमार्जनभूमयः ॥ ८९ ॥
उच्यतां भगवन्यत्ते कृत्यं तत्करवाण्यहम् ।
त्वदाज्ञानुग्रहेणैव कृतकृत्यस्त्वयं जनः ॥ ९० ॥
उक्तो दशरथेनेति विश्वामित्रस्तमब्रवीत् ।
दन्तत्विषा निशानाथं दर्शयन्निव सोमपः ॥ ९१ ॥
जन्म वंशे सहस्रांशोर्गुणाश्च विनयोज्ज्वलाः ।
रुचिराचार भवतामेतत्समुचितं वचः ॥ ९२ ॥
दीक्षितस्य महीपाल बाधन्ते मम राक्षसाः ।
यज्ञं पिहितदिक्चक्राः शोणितासारवर्षिणः ॥ ९३ ॥
तेषां विघ्नकृतां यज्ञे विघातायोग्ररक्षसाम् ।
रामं प्रयच्छ मे वीरं बालं बलवतां वरम् ॥ ९४ ॥
तपोवनेषु शमिनां मुनीनां विदधे विधिः ।
तपःक्रतु[2]परित्राणे राजन्क्षत्रियविक्रमम्[3] ॥ ९५ ॥

१. 'अभ्युद्ययौ' ग. २. 'क्रान्त' ख. ३. 'जानीहि' इति शेषः.

बालोऽयमिति रामस्य जये मा संशयं कृथाः ।
वसिष्ठमुख्या मुनयः प्रभावज्ञाः सुतस्य ते ॥ ९६ ॥
इति श्रुत्वा मुनिवचो भूपतिः कम्पिताशयः ।
उवाच भगवन्बालः कथं रक्षःक्षयक्षमः ॥ ९७ ॥
अक्षौहिणीपरिवृते स्थिते मयि सकार्मुके ।
शिशौ संभावना केयं घोरे समरकर्मणि ॥ ९८ ॥
सज्जोऽहं क्रतुरक्षायै दीक्षितस्य तव स्वयम् ।
नैववर्षसहस्राणि व्यतीतानि ममायुषः ।
चिन्तासंतप्तमनसः पुत्रलाभमनोरथैः ॥ ९९ ॥
सुचिरादुचितः पुत्रो जातो वयसि पश्चिमे ।
नेश्वरोऽहं परित्यक्तुं रामं राजीवलोचनम् ॥ १०० ॥
इति ब्रुवाणमसकृद्भूपालं पुत्रवत्सलम् ।
उवाच कौशिकः किंचिदसूयारचितस्मितः ॥ १०१ ॥
अहो नु कातरस्येव स्नेहमोहहता मतिः ।
तव राजन्न जानीषे यत्पुत्रस्य पराक्रमम् ॥ १०२ ॥
स्वयं किं कृत्यमित्युक्त्वा कार्यकाले विमुह्यति ।
यथागतं व्रजाम्येष तव सत्यच्युतः सुखी ॥ १०३ ॥
इत्युक्त्वा विरते कोपात्कम्पमाने महामुनौ ।
विचचाल तदा पृथ्वी भेजिरे च भयं सुराः ॥ १०४ ॥
ततो जगाद भगवान्वशिष्ठः शमिनां वरः ।
इक्ष्वाकुवंशजो राजन्प्रतिज्ञां मा वृथा कृथाः ॥ १०५ ॥
बहुप्रभावः पुत्रस्ते न शङ्कां कर्तुमर्हसि ।
दुष्टक्षयात्क्षितित्राणात्क्षत्रियः किल जायते ॥ १०६ ॥
गुप्तः स्वयं कौशिकेन मुनिना प्राज्यतेजसा ।
ब्रह्मणेवासुरपतिर्दुर्जयोऽयं हि राघवः ॥ १०७ ॥

---

१. 'षष्टिवर्षे' रामायणे.

मुनेरस्य प्रभावेण रामः कुशलमाप्स्यति।
आश्रयः पुण्ययशसां तपसां तेजसां च यः॥ १०८॥
प्रजापतिर्भृशाश्वाख्यो[1] दाक्षायिण्यौ वरात्पुरा।
तेजोनिधिः प्राप भार्ये जयाख्यां सुप्रभां तथा॥ १०९॥
तयोः पुत्रशतं तस्य जातं विविधविग्रहम्।
यदस्त्रमण्डलं दिव्यं दीप्तमस्त्रविदो जगुः॥ ११०॥
विश्वामित्राय निखिलं संघर्षाख्यं तमुत्कटम्।
अस्त्रग्रामं महावीर्यं स ददौ यशसां निधिः॥ १११॥
सोऽयं विभुः सहस्राणां नेतुमर्हसि राघवम्।
वशिष्ठेनेति कथिते तथेत्यूचे महीपतिः॥ ११२॥
ततः कृतस्वस्त्ययनं राघवं लक्ष्मणानुगम्।
कौशिकाय ददौ राजा निमित्तैः शुभशंसिभिः॥ ११३॥
धन्विनौ काकपक्षाङ्कौ बद्धखड्गौ मुनीश्वरः।
आदाय प्रययौ वीरस्तौ राघवकुमारकौ॥ ११४॥
गत्वा योजनसंख्यार्धं[2] दक्षिणे सरयूतटे।
स रामाय ददौ विद्ये श्रमातङ्कजरापहे॥ ११५॥
बलामतिबलाख्यां च जयरूपबलप्रदे।
ते प्राप्य तृप्तिसौभाग्यज्ञानदे ब्रह्मसंभवे॥ ११६॥
महार्हतां परां प्राप्तः काकुत्स्थो हृष्टमानसः।
स्थित्वा तत्र निशां प्रातः सानुजोऽनुययौ मुनिम्॥ ११७॥
स दृष्ट्वा संगमे गङ्गासरय्वोः पुण्यमाश्रमम्।
कस्येदं तापस क्षेत्रमिति पप्रच्छ कौशिकम्॥ ११८॥
सोऽब्रवीन्मूर्तिमान्कामः पुरा देवमुमापतिम्।
लक्ष्यीकर्तुं कृतोद्वाहं चचार सुचिरं तपः॥ ११९॥
तपोवनेऽस्मिन्भगवान्वीक्ष्य तं त्रिपुरान्तकः।
दृशा चकार सहसा विशीर्णाङ्गमसंगधीः॥ १२०॥

---

१. 'तिः कृशाश्वा' रामायणे. २. 'अध्यर्धयोजनं गत्वा' रामायणे.

विन्ध्यशैलान्तिके तस्य पतितेऽङ्गचये पृथक् ।
स्फीतोऽभूदङ्गविषयो विषयः सर्वसंपदाम् ॥ १२१ ॥
तस्यै तत्संयमे धाम कामस्याभूत्तपोवनम् ।
योऽङ्गनापाङ्गसंयोगादनङ्गोऽपि जगज्जयी ॥ १२२ ॥
इत्युक्तं मुनिना श्रुत्वा रामः कामाश्रमे सुखम् ।
अतिवाह्य निशामेकां प्रतस्थे मुनिपूजितः ॥ १२३ ॥
नावाथ तीर्त्वा सरयूं शब्दं श्रुत्वा घनस्वरम् ।
किमेतदिति पप्रच्छ मुनिं पृष्टः स चाभ्यधात् ॥ १२४ ॥
मनसा मानसं नाम सरः कैलासशेखरे ।
ब्रह्मणा निर्मितं तस्मात्प्रसूता सरयूः पुरा ॥ १२५ ॥
जाह्नवीसंगतस्यायं तत्प्रवाहस्य निःस्वनः ।
वन्द्योऽसाविति तेनोक्तो रामोऽपि प्रणनाम तम् ॥ १२६ ॥
ततो दक्षिणतीरे[1]स्य वनमासाद्य सानुजः ।
पप्रच्छ कौशिकं घोरसत्त्वसंपातविस्मितः ॥ १२७ ॥
कस्येदमिति रामेण पृष्टस्तमवदन्मुनिः ।
करूषमाल[2]वाभिख्यौ श्रुतौ जनपदौ भुवि ॥ १२८ ॥
यत्र वृत्रवधादिन्द्रो वृत्रहत्यामलावृतः ।
मुनिभिः पुण्यसलिलैः क्षुत्क्षामः क्षालितः पुरा ॥ १२९ ॥
मलं स दृष्ट्वा पतितं कारूषाख्यं शरीरजम् ।
स्वस्थः श्रीमान्वरं प्रादाद्देशयोर्धन्य[3]तावहम् ॥ १३० ॥
पुरा सुकेतोर्यक्षस्य ताटका कामरूपिणी ।
नागायुतबला पुत्री बभूव ब्रह्मणो वरात् ॥ १३१ ॥
तरुणीमसुरेन्द्राय सुतां सुन्दाय सुन्दरीम् ।
ददौ तस्यां बभूवास्य मारीचो दुर्जयः सुतः ॥ १३२ ॥

---

१. 'तीरस्थं' स्यात्. २. 'मलदा' रामायणे. ३. 'धृष्यतावशम्'; 'वश्यतावहम्' इति च पाठः.

स्वपुत्राय कृतं रूपं सा कृत्वा दुन्दुभिस्वना।
अगस्त्यग्रामे चक्रे स मतिं मोहात्प्रधर्षणे॥ १३३॥
सा तच्छापादभून्नित्यं विकृताकारदुःसहा।
राक्षसत्वं च मारीचो जगाम जनकण्टकः॥ १३४॥
मालवानां करूषाणां कुर्वाणास्मिन्वने क्षयम्।
स्थिता प्रसारितभुजा सा भूतभयदा सदा[1]॥ १३५॥
गोत्रजान्तकरीं घोरां जहि तां जनताहिताम्।
स्त्रीविचारं परित्यज्य जगतां कार्यगौरवात्॥ १३६॥
श्रूयते किल शक्रेण विलोचनसुता पुरा।
राक्षसी दीर्घजिह्वाख्या हता विश्वक्षयोदिता॥ १३७॥
अशक्रं लोकमिच्छन्ती दैत्यमाता बलोत्कटा।
हता सुरशरण्येन विष्णुना प्रभविष्णुना॥ १३८॥
त्वमप्येवं जगद्बन्धुर्मुनित्राणकृतक्षणः।
पत्रिणा वज्रधारेण तां निपातय ताटकाम्॥ १३९॥
इत्युक्ते मुनिना रामः क्षणं ध्यात्वा तमब्रवीत्।
प्रमाणं सर्वधर्माणां निश्चये भवतां वचः॥ १४०॥
अहं हि भगवन्पित्रा नियुक्तस्तव शासने।
भवता तस्य वचसा कार्यं सर्वात्मना मया॥ १४१॥
इत्युक्त्वाधिज्यमादाय धनुर्वीरपराक्रमः।
ज्याघोषमकरोद्वज्रशैलनिष्पेषनिःस्वनम्॥ १४२॥
त्रैलोक्यरक्षाप्रारम्भमङ्गलोऽकारकारिणा।
ननृतुर्धनुर्घोषेण तेन त्रिदशबर्हिणः॥ १४३॥
अथादृश्यत तत्कोपात्प्रलयाम्भोधरच्छविः।
कल्पितेव निरालोकैः कल्पान्तरजनीशतैः॥ १४४॥
दीप्तजिह्वाकरालेन विवृतास्येन भीषणा।
लोलनीलाचलेनेव ज्वालाचक्र[2]गुहागता॥ १४५॥

---

१. 'मुदा'; 'पुरा' इति च पाठः. २. 'गर्भे' ग.

जगद्गेहार्गलादीर्घप्रसारितभुजंद्रुमा।
कृतान्ततोरणस्तम्भसंभारभ्रान्तिकारिणी॥ १४६॥
महाद्रिकटकाकारकरालोरःकटीतटा।
ताटका विकटारावघटिताशेषदिक्तटा॥ १४७॥
तामापतन्तीं क्रोधाग्निज्वालायितशिरोरुहाम्।
बाणेन घननिर्घोषां जघान रघुनन्दनः॥ १४८॥
सा रामस्य शरैर्भिन्ना निपपात महीतले।
तमालवनमालेव छिन्ना कूलंकषैर्जलैः॥ १४९॥

इति ताटकावधः॥ ३॥

तस्यां हतायां सहसा प्रसन्ने भुवनत्रये।
रामस्य विक्रमं शक्रः प्रशंसन्मुनिमब्रवीत्॥ १५०॥
प्रयच्छ स्वच्छयशसे रामायास्त्राणि कौशिक।
स्वगुणैः पात्रतां नीताः किं नार्हन्ति हि साधवः॥ १५१॥
इत्युक्तस्त्रिदशेन्द्रेण मुनीन्द्रः प्रयतात्मना।
भृशाश्वास्त्रादि[1] रामाय ददौ सर्वायुधैः सह॥ १५२॥
ब्रह्मास्त्रं दण्डमस्त्रं च धर्मचक्रमशेषगम्।
कालचक्रं विष्णुचक्रं शाक्रं वज्रं च दारुणम्॥ १५३॥
शूलं शार्वं गदे द्वे च कौमोदकशिवोदके।
उग्रं ब्रह्मशिरश्चास्त्रमैशीकं शङ्खमद्भुतम्॥ १५४॥
त्रिनेत्रास्त्रं धर्मपाशं कालपाशं सवारुणम्।
शुष्कार्द्रे पाचने देव नागास्त्रं वैष्णवं तथा॥ १५५॥
आग्नेयं शिखरं नाम वायव्यं क्रौञ्चमद्भुतम्।
अस्त्रं हयशिरश्चोग्रशक्ती शक्रकुमारयोः॥ १५६॥
घोरं कङ्कालमुसलं कापालं किङ्किणीमपि।
दिव्यास्त्रं नन्दकं खड्गं गन्धर्वास्त्रं च मोहनम्[2]॥ १५७॥

१. 'कृशाश्वा' रामायणे. २. 'मादनम्' इति 'शत्रूणां मदजनकम्' इति व्याख्यातं तिलके.

प्रस्वापनं प्रमथनं वर्षणं च सशोषणम्।
संतापनं विलापास्त्रं दमनं च मनोभुवः ॥ १५८ ॥
नैषादं मानवं नाम वामनं च संशामनम्[1]।
संवर्तं सौमलं सत्यं मायास्त्रं मोघतेजसम् ॥ १५९ ॥
सोमास्त्रं शैशिरं त्वाष्ट्रं दारुणास्त्रं भगस्य च।
रौद्रास्त्रं चेति दिव्यानि जग्राह रघुनन्दनः ॥ १६० ॥
पुरः प्रत्यक्षरूपाणि प्राप्तानि च ततो मुनेः।
सजृम्भकरहस्यानि ससंहाराण्यशेषतः ॥ १६१ ॥
संस्पृश्य पाणिना तानि प्रतिपूज्य विसृज्य च।
व्रजन्काननमालोक्य रामः पप्रच्छ कौशिकम् ॥ १६२ ॥

इत्यस्त्रप्राप्तिः ॥ ४ ॥

इदं मरकतश्यामतालतालीनिरन्तरम्।
बृहत्फुल्लताकुञ्जमञ्जुगुञ्जद्विहङ्गमम् ॥ १६३ ॥
मनोनयननिर्वाणं संतोषविषयं रतेः।
क्षेत्रं निर्विघ्नविश्रान्तेर्भगवन्कस्य काननम् ॥ १६४ ॥
इति रामेण विनयात्पृष्टो मुनिरभाषत।
सिद्धाश्रमोऽयं देवस्य विष्णोर्वामनरूपिणः ॥ १६५ ॥
योगेन वामनो भूत्वा यः क्रान्त्वा भुवनत्रयम्।
जहार जगतीं कृत्स्नां त्रैलोक्यजयिनो बलेः ॥ १६६ ॥
तदाश्रमपवित्रेऽस्मिन्कानने सिद्धसेविते।
यज्ञभूर्मम तद्भक्तिसुधाप्लावितचेतसः ॥ १६७ ॥
इत्युक्ते मुनिनाभ्येत्य सिद्धाश्रमनिवासिनः।
सज्जोऽयं यज्ञसंभारस्तवेत्यूचुस्तमग्रतः ॥ १६८ ॥
अथ राघववाक्येन दीक्षां कौशिकनन्दनः।
विवेश वीतविघ्नेन मनसा व्यस्तविप्लवः ॥ १६९ ॥

---

१. 'समौसनम्'; 'ससौमनम्' इति च पाठः.

ततो मुनिगिरा रामः क्रतुत्राणाय सानुजः।
निर्निद्रः षडहोरात्रं तस्थौ स्थाणुपराक्रमः ॥ १७० ॥
षष्ठेऽहनि मुनेर्वेद्यां ज्वलिते जातवेदसि।
अभवद्भीमनिर्घोषैर्व्याप्तं नक्तंचरैर्नभः ॥ १७१ ॥
रक्तास्थिवर्षिणां तेषां मेघौघविपुलैर्बलैः।
ग्रस्ता इवोग्रतिमिरैर्बभूवुरभितो दिशः ॥ १७२ ॥
तेषां नभसि गम्भीरसंरम्भैर्घोरैर्विक्रमैः।
अभवद्भूतभयदैर्भ्रान्तेव भुवनत्रयी ॥ १७३ ॥
तान्वीक्ष्य लक्ष्मणं रामः स्मितधौताधरोऽवदत्।
सौमित्रे यज्ञविघ्नानामिमास्ता सैन्यसंपदः ॥ १७४ ॥
पश्य क्षपाचरव्यूहैर्मोहैरिव विकारिभिः।
नीतं मलिनतां व्योम मनस्तनुभृतामिव ॥ १७५ ॥
इत्युक्त्वा मारुतं रामः प्राहिणोदस्त्रमद्भुतम्।
दोलाविलासं यत्पक्षपवनैर्लेभिरे दिशः ॥ १७६ ॥
येन मारुतवेगेन क्षिप्तो मूर्छितमानसः।
पपात योजनशतस्यान्ते मारीचराक्षसः ॥ १७७ ॥
आग्नेयेन चलज्ज्वालाजटिलाग्रेण राघवः।
ददाह सर्वदाहं च सुबाहुं रक्षसां पतिम् ॥ १७८ ॥
हत्वा तदनुगान्सर्वान्वातास्त्रेण प्रमाथिना।
निर्विघ्नं राघवश्चक्रे यज्ञक्षेत्रं महामुनेः ॥ १७९ ॥
पतिते सुन्दतनये मारीचे जलधेस्तटे।
उपसुन्दसुते भग्ने सुबाहौ बलशालिनि ॥ १८० ॥
बभूव सिद्धगन्धर्वगणकिंनरयोषिताम्।
नवे रामस्य चरिते मिथः कोऽपि कथारसः ॥ १८१ ॥

इति सुबाहुवधः ॥ ९ ॥

---

१. 'भीम' क. २. 'सुर' क.

ततः पूर्णे महायज्ञे राममूचुर्महर्षयः ।
मखोऽयं कौशिकेनाप्तस्त्वत्पराक्रमरक्षितः ॥ १८२ ॥
मिथिलाधिपतेर्यज्ञः शतक्रतुसमश्रियः ।
राज्यकल्पद्रुमफलं जनकस्य भविष्यति ॥ १८३ ॥
चन्द्रचूडधनुस्तत्र दिव्यं सदसि दृश्यते ।
संकल्पेऽपि न धर्तुं यत्प्रगल्भास्त्रिदशा अपि ॥ १८४ ॥
तदेहि मिथिलां राम गच्छामः क्ष्मापतेर्मखे ।
दुर्धर्षं द्रक्ष्यसि धनुस्तत्र त्रिपुरवैरिणः ॥ १८५ ॥
इत्युक्ते मुनिभिः प्रीत्या सहितैस्तैः सलक्ष्मणः ।
विश्वामित्रं पुरस्कृत्य प्रतस्थौ मिथिलां ततः ॥ १८६ ॥
ते व्रजन्तः समासाद्य शोणं शोणांशुमालिनि ।
संध्यायां तत्तटे तस्थुर्जपहोमकृतक्षणाः ॥ १८७ ॥
रामस्तत्र सुखासीनं विश्वामित्रं पुरस्थितः ।
पप्रच्छ देशः कस्यायमिति रम्यतयाहृतः ॥ १८८ ॥
तमब्रवीन्मुनिवरः पुत्रोऽभूद्ब्रह्मणः कुशः ।
कुशनाभः कुशाम्बाख्यमसूर्तरजसं वसुम् ॥ १८९ ॥
स प्राप तनयान्वीरान्भुजस्तम्भितभूमिपान् ।
व्यधात्कुशाम्बः कौशाम्बीं कुशनाभो महोदयम् ॥ १९० ॥
प्राग्ज्योतिषमसूर्ताख्यो वसुश्चक्रे गिरिव्रजम् ।
घृताच्यां सुरसुन्दर्यां कन्यानामभवच्छतम् ॥ १९१ ॥
कुशनाभस्य राजर्षेर्हरिणीहारिचक्षुषः ।
ता यौवनवसन्तेन भूषिताः स्तबकस्तनैः ॥ १९२ ॥
बभुर्विलासललिता लता इव सविभ्रमाः ।
उद्यानकेलिसंसक्तास्ता विलोक्य समीरणः ॥ १९३ ॥

---

१. 'मुनेर्यज्ञे' क. २. 'शोभते' क. ३. 'असूर्तरजसो नाम धर्मारण्यं महामतिः' रामायणे.

ययाचे संगमं रागान्न चामन्यन्त कन्यकाः ।
सर्वान्तश्चारिणो धैर्यं नाभवत्तस्य रागिणः ॥ १९४ ॥
अभग्नप्रणया शक्तिर्महत्स्वपि मनोभुवः ।
कुलाभिमानात्कन्याभिः स निषिद्धः पितुर्भयात् ॥ १९५ ॥
प्रविश्य सर्वगात्राणि क्रुद्धः कुब्जीचकार ताः ।
प्रभञ्जनेन भग्नास्ताः पितुरेत्य न्यवेदयन् ॥ १९६ ॥
कुब्जत्वात्कन्यकानां तत्कान्यकुब्जमभूत्पुरम् ।
अत्रान्तरे ब्रह्मचारी सूरि[1]र्नाम महामुनिः ॥ १९७ ॥
[2]ऊर्णायुपुत्र्या गन्धर्व्या तोषितः परिचर्यया ।
वरादात्मोपमं नाम तस्मात्पुत्रमवाप सा ॥ १९८ ॥
ब्रह्मदत्तं महीपालं प्रथितं विपुलैर्गुणैः ।
तस्मै ताः कन्यकाः प्रादात्कुशनाभो महीपतिः ॥ १९९ ॥
विवाहे तत्करस्पर्शपात्रस्वस्थाखिलाङ्गकाः ।
कुशनाभोऽथ पुत्रेष्ट्यां गाधिं पुत्रमवाप्तवान् ॥ २०० ॥
तस्याहं तनयो राम स्वसा सत्यवती च मे ।
[3]ऋषीकाय पुरा दत्ता साभवत्कौशिकी नदी ॥ २०१ ॥
तयैव पुण्यसरिता देशोऽयं कल्मषापहः ।
विभाति धाम धर्मस्य मनोनयननन्दनः ॥ २०२ ॥
अथावशेषा रजनी नीतास्माभिः कथारसात् ।
निस्पन्दास्तरवोऽप्येते निद्रयेवाभिमुद्रिताः ॥ २०३ ॥
स्नेहस्नुतवधूकेशपाशसंकाशरोचिषः ।
गर्जद्गजमदौघस्य तमसः पश्य यौवनम् ॥ २०४ ॥
उदितेयं शशाङ्कस्य शनकैर्दृश्यते कला ।
तमोमत्तवराहस्य दंष्ट्रेव समरच्युता ॥ २०५ ॥

---

१. 'चूलीनाम' रामायणे. २. 'तपस्यन्तमृषिं तत्र गन्धर्वी पर्युपासते । सोमदा नाम भद्रं ते ऊर्मिलातनया तदा ॥' रामायणे. ३. 'ऋचीकाय' रामायणे.

सेयं शशिकला शर्वमौलिमैत्रीपवित्रिता।
राजते ध्वस्ततिमिरा ध्वस्तमोहेव धीः सताम् ॥ २०६ ॥
कथयित्वेति विरते मुनौ सा यामिनी शनैः।
जगाम कुमुदाबन्धुभीतेव भ्रमरावली ॥ २०७ ॥

इति कौशिकवंशः ॥ ६ ॥

ततः शोणं समुत्तीर्य जाह्नवीं च शनैर्वनम्।
ते प्राप्य गङ्गापुलिने दिनान्ते चक्रिरे स्थितिम् ॥ २०८ ॥
गङ्गावतरणं तत्र पृष्टो रामेण कौतुकात्।
मुनिमध्ये सुखासीनो बभाषे कौशिको मुनिः ॥ २०९ ॥
बभूवतुर्दुहितरौ पुरा हिमवतो गिरेः।
गङ्गा च देवतटिनी गौरी च भववल्लभा ॥ २१० ॥
उग्रेण तपसा देवी वरं प्राप्य पिनाकिनम्।
विजहार चिरं दिव्यकैलासगिरिसानुषु ॥ २११ ॥
तत्र स्पर्धानुबन्धेन प्रवृत्ते रतिसंगरे।
अश्रान्तमेवेश्वरयोर्दिव्यं वर्षशतं ययौ ॥ २१२ ॥
अथ ब्रह्ममुखा देवास्त्रस्तास्त्रैलोक्यविप्लवात्।
अतो भूतं समुद्भूतं धर्तुं शक्ष्यति को न्विति ॥ २१३ ॥
ते गत्वा शरणं सर्वे मेघव्यवहिताः पुरा।
महारतस्य विरतिं प्रणिपत्य ययाचिरे ॥ २१४ ॥
तानुवाच हरः प्रीत्या भगवान्भूतभावनः।
क्षुभितं मे निजपदात्कस्तेजो धारयिष्यति ॥ २१५ ॥
इत्युक्ते चन्द्रचूडेन जगदुः प्रणताः सुराः।
दुःसहं भवतस्तेजो धर्तुं देवी क्षमा क्षितिः ॥ २१६ ॥
सेयं भूतपरित्राणं भूतधात्री करिष्यति।
इत्युक्ते त्रिदशैर्देवः क्षितौ वीर्यमिवासृजत् ॥ २१७ ॥

---

१. रेतः.

तेन व्याप्तां महीं दृष्ट्वा सुराः सगिरिसागराम् ।
तत्संग्रहाय दहनं सानिलं समचोदयत् ॥ २१८ ॥
तत्तेजो वह्निना व्याप्तं बभूव श्वेतपर्वतः ।
जातरूपमयं दीप्तं तथा शरवणं महत् ॥ २१९ ॥
ततः सुरान्गिरिसुता शशाप कुपिता पुरः ।
अपत्यं वः स्वदारेषु न कदाचिद्भविष्यति ॥ २२० ॥
अपत्यप्रीतिरहिता बहुभोज्या च भूरियम् ।
यास्यत्यनेकरूपत्वमित्युक्त्वा लज्जिताभवत् ॥ २२१ ॥
ततो देव्या सह तपश्चक्रे हिमगिरौ हरः ।
परकार्यसुखाः सन्तः स्वसुखेषु पराङ्मुखाः ॥ २२२ ॥
अत्रान्तरे सुरा ब्रह्मवाक्यात्सेनाधिपार्थिनः ।
गङ्गायां जनयापत्यमित्यूचुर्जातवेदसम् ॥ २२३ ॥
तेनाथ गर्भाधानाय प्रार्थिता व्योमवाहिनी ।
दिव्यरूपाभवद्देवी प्रीतये त्रिदिवौकसाम् ॥ २२४ ॥
सा वीक्ष्य दुःसहं तेजो व्यकीर्यत समन्ततः ।
वीर्येणापूरयत्तां च विकीर्णः सर्वतोऽनलः ॥ २२५ ॥
पूर्णेषु सर्वस्रोतःसु सा बभाषे हुताशनम् ।
तेजस्ते नोत्सहे धर्तुं घोरं व्यथितमानसा ॥ २२६ ॥
इत्युक्त्वा जाह्नवी वह्निवचसा हिमवत्तटे ।
तत्याज सर्वस्रोतोभिर्गर्भमाभासुरं जवात् ॥ २२७ ॥
धरण्यां हेम तदभूत्ताम्रं कृष्णायसं मुखात् ।
मलं त्रपुसनागादिधातुजं विविधं[1] तथा ।
तत्र गर्भे च्युतं सर्वं जातरूपमभूद्धनम्[2] ॥ २२८ ॥
स कुमारः शरवणे कृत्तिकाक्षीरवर्धितः ।
कार्तिकेयकोऽभवद्वह्निसहस्रांशुसमद्युतिः ॥ २२९ ॥

---

१. 'त्रिदिवं' ग. २. 'वरम्' क.

षण्णां स पुत्रको धीरः कृत्तिकानां षडाननः।
बभूव सुरसेनासु नायकस्तारकान्तकः ॥ २३० ॥

इति कुमारोत्पत्तिः ॥ ७ ॥

बभूव सगरो नाम मनुवंश्यो महीपतिः।
अयोध्यायां सुधासिन्धुरिव जन्मावधिः श्रियः ॥ २३१ ॥
बभूव केशिनी नाम वैदर्भी तस्य वल्लभा।
सुमतिश्च सुपर्णस्य भगिनी विनतात्मजा ॥ २३२ ॥
भार्याद्वयमुपाकृत्य पूर्णं वर्षशतं तपः।
भृगोर्वरा[1]दभिमतं स संतानमवाप्तवान् ॥ २३३ ॥
षष्टिपुत्रसहस्राणि पुत्रं चैकमवाप्य सः।
तमेकमसमञ्जाख्यं प्रजाद्विद्विष्टमत्यजत् ॥ २३४ ॥
अंशुमन्तं सुतं तस्य पौत्रमादाय पुत्रवत्।
स बभूवाश्वमेधाय दीक्षितः पृथिवीपतिः ॥ २३५ ॥
हिमवद्विन्ध्ययोर्मध्ये प्रवृत्ते यज्ञकर्मणि।
हृतः केनापि भूतेन तस्याश्वोऽदृश्यतां ययौ ॥ २३६ ॥
षष्टिपुत्रसहस्राणि शासनात्तस्य वाजिनम्।
उपलब्धुं दिशो जग्मुर्दारिताखिलभूतलाः ॥ २३७ ॥
वध्यमानेषु भूतेषु तैरश्वाहरणक्रुधा।
दारिते च महीपीठे नादृश्यत हयः क्वचित् ॥ २३८ ॥
पुनः पुत्राः स[2]मादिष्टास्ते निर्भिन्नमहीतलाः।
ददृशुर्दिग्गजान्मूर्ध्ना धृतविश्वंभराभरान् ॥ २३९ ॥
विरूपाख्यं महापद्मं भद्रं सुमनसं तथा।
ते तान्प्रदक्षिणीकृत्य गजान्कैलाससंनिभान् ॥ २४० ॥
पाताले ददृशुर्देवं कपिलं वैष्णवं महः।
कर्तारं घोरतपसां प्रवरं सर्वतेजसाम् ॥ २४१ ॥

---

१. 'वरेणा' क. २. 'समाधाय' ग.

ते तमश्वहरं ज्ञात्वा संरम्भात्समभिद्रुताः।
तद्दृष्टिनष्टाः प्रययुर्भस्मकूटावशेषताम्॥ २४२॥
सगरेण विसृष्टोऽथ पौत्रः साधुरथांशुमान्।
प्रविश्य पातालतलं दिग्द्विपेन्द्रगिरा वशी॥ २४३॥
ज्वलत्कपिलकोपेन निर्दग्धान्सगरात्मजान्।
तन्मातुलस्य च गिरा ज्ञात्वा तार्क्ष्यस्य दुःखितः॥ २४४॥
पापापनुत्तये तेषां ज्ञात्वा मन्दाकिनीपयः।
चरन्तं हयमासाद्य गत्वा पित्रे न्यवेदयत्॥ २४५॥
समाप्ते विधिवद्यज्ञे सगरो भूभृतां वरः।
त्रिंशद्वर्षसहस्राणि राज्यं कृत्वा दिवं ययौ॥ २४६॥
ततोंऽशुमानभूद्राजा सुचिरं तेजसां निधिः।
राज्यं दत्त्वा दिलीपाय पुत्राय गुणशालिने॥ २४७॥
द्वात्रिंशत्स[1] सहस्राणि वर्षाणां तुहिनाचले।
तपः कृत्वा ययौ दिव्यं धाम धुर्यो महीभृताम्॥ २४८॥
दिलीपोऽब्दसहस्राणां राज्यं कृत्वापि विंशतिम्।
भगीरथाय पुत्राय श्रियं दत्वा दिवं ययौ॥ २४९॥
श्रुत्वा सगरपुत्राणां पूर्ववृत्तं भगीरथः।
ऊर्ध्वबाहुस्तपश्चक्रे गोकर्णे स्थाणुनिश्चलः॥ २५०॥
ततो वर्षशतस्यान्ते तमभ्येत्य प्रजापतिः।
वरं गृहाणेत्यवदत्तच्छ्रुत्वा स नृपोऽभ्यधात्॥ २५१॥
अवतीर्णेन भगवन्गाङ्गेन नभसोऽम्भसा।
आप्लावयितुमिच्छामि भस्मीभूतान्पितामहान्॥ २५२॥
सदा निरवसादं च कुलमिक्ष्वाकुभूभृताम्।
उक्ते भगीरथेनेति तमूचे चतुराननः॥ २५३॥
राजन्गङ्गावतारोऽस्तु कुलं वोऽस्तु सदोदितम्।
धर्तुं सुरापगावेगं किं तु शर्वः प्रसाद्यताम्॥ २५४॥

---

१. 'द्वात्रिंशच्छतसाहस्रं' रामायणे.

दिवः सा वेगनिर्घातनिपातक्षुभितं क्षणात् ।
दारयत्येव गङ्गायाः पातालं सप्तमं पयः ॥ २५५ ॥
सहेत कस्तदन्यत्र देवदेवान्महेश्वरात् ।
इत्युक्त्वा पद्मभूर्गङ्गामादिदेश तदीप्सिताम् ॥ २५६ ॥
अथ राजा निराहारनिरुद्धप्राणधारणः ।
वर्षं तपश्चचारैकचरणाङ्गुष्ठनिष्ठितः ॥ २५७ ॥
ततस्तुष्टस्तमभ्येत्य भगवान्भूतभृद्भवः ।
त्वद्वाञ्छितं करोमीति बभाषे शशिशेखरः ॥ २५८ ॥
अधिरुह्याथ शिखरं स तुषारमहीभृतः ।
विप्रकीर्णजटाजूटं जीमूतपटलोपमम् ॥ २५९ ॥
देवदेवश्च प्रोवाच देवस्त्रिदशवाहिनीम् ।
दन्तांशुभिस्तत्प्रवाहः सूत्रपातमिवाचरन् ॥ २६० ॥
ततस्तरङ्गसंघातसंघट्टविकटा सरित् ।
पपात मूर्ध्नि देवस्य स्फीतफेनाट्टहासिनी ॥ २६१ ॥
सा बभ्राम जटाजूटे चिरं देवस्य धूर्जटेः ।
गम्भीरग्रन्थविज्ञाने मुग्धस्येवाल्पिका मतिः ॥ २६२ ॥
अप्राप्तमार्गा सा तत्र ग्राम्येव नगराङ्गना ।
न ससादार्थमत्यन्तभ्रान्तिश्रान्तेव मूर्छिता ॥ २६३ ॥
ततः संवत्सरे पूर्णे तपसा प्रार्थितो भवः ।
भगीरथेन तत्याज जटां निष्पीड्य जाह्नवीम् ॥ २६४ ॥
सा शंकरशिरःशृङ्गविभ्रष्टा जगतीं ययौ ।
वन्द्यमाना जगद्वन्द्यैः सिद्धैः संविदितात्मभिः ॥ २६५ ॥
स्फुटस्फटिकशैलाभैरदभ्रशुभ्रपातिभिः ।
बभौ क्ष्मां क्षालयन्ती सा निर्घोषोद्वेलितैर्जलैः ॥ २६६ ॥
चलत्कुटिलकल्लोलविलाससलिलेन सा ।
चक्रे बालानिलालोलदुकूलकलनां भुवम् ॥ २६७ ॥

परमेष्ठिमुखैर्देवैरनुयाता महर्षिभिः।
व्यधाद्वीचिचयैः स्वर्गसोपानपदवीं नृणाम् ॥ २६८ ॥
तस्या विग्रहवान्हर्ष इव राजा भगीरथः।
पुरो ययौ मुनिगणैः सह पूर्णमनोरथः ॥ २६९ ॥
स पातालतलं नीत्वा गङ्गां सगरजन्मनाम्।
तत्पुण्यसलिलस्पृष्टभस्मनां स्वर्गतिं व्यधात् ॥ २७० ॥
स्वर्गगान्ब्रह्मणो ज्ञात्वा सकलान्सगरात्मजान्।
क्रियां तत्सलिलैस्तेभ्यः कृत्वान्तर्निर्वृतो नृपः ॥ २७१ ॥
सागराश्च बभूवुस्ते खाताः सगरसूनुभिः।
एवं त्रिपथगा प्राप भुवं भागीरथी नदी ॥ २७२ ॥
इति गङ्गावतरणम् ॥ ७ ॥

ततः प्रभाते शनकैर्व्रजन्तस्ते सकौतुकाः।
विशालां नगरीं प्रापुर्गङ्गापुलिनमेखलाम् ॥ २७३ ॥
पुरीं दृष्ट्वा विशालाख्यां कान्तां सुमतिभूपतेः।
पप्रच्छ तत्कथां रामः कौशिकं सोऽप्यभाषत ॥ २७४ ॥
पुरा कृतयुगे पुत्रा दितेर्दैत्या महाबलाः।
अदितेश्च सुराः सर्वे ममन्थुः क्षीरसागरम् ॥ २७५ ॥
दण्डं मन्दारमादाय दीर्घनेत्रं च वासुकिम्।
क्षिप्त्वा सर्वौषधीस्तस्मिन्नाक्रान्ते तैः सुधार्थिभिः ॥ २७६ ॥
षष्टिकोट्यो मृगाक्षीणां दिव्यानामुदितो गणः।
सरसास्वप्सु जातत्वात्ताः स्वर्गेऽप्सरसः श्रुताः ॥ २७७ ॥
ताः साधारणतां प्रापुरगृहीताः सुरासुरैः।
ततः समुदभूद्दिव्या कन्यका वारुणी सुरा ॥ २७८ ॥
तत्त्यागादसुरा दैत्या देवास्तत्संगमात्सुराः।
उच्चैःश्रवाः कौस्तुभश्च पीयूषं चोदितं ततः ॥ २७९ ॥

१. सर्वत्र. २. 'मालिनीम्' ग. ३. 'तापित' क; 'सुमित' ग. ४. 'नीडं' ग.
५. 'स्तत्र संप्राप्ते तैः' ग.

अथो धन्वन्तरिर्जातः सुधापूर्णकमण्डलुः।
सर्वौषधिगणैः कान्तैः सिद्धिदो भिषजां वरः॥ २८०॥
ततोऽभूदुत्कटाटोपः कलाकूटः समुत्प्लवः।
अतीवायासितस्येव कोपस्तीक्ष्णो महोदधेः॥ २८१॥
अमृतार्थे बभूवोग्रः संग्रामस्त्रिदिवौकसाम्।
दैत्यानां च चिरं सर्वलोकक्षयपरिश्रमः॥ २८२॥
शतक्रतुस्ततः प्राप्य निहताशेषदानवः।
सुधां राज्ये स्थितः प्राप विजयव्यञ्जनं यशः॥ २८३॥
हतपुत्रा दितिर्दुःखाद्भर्तारं कश्यपं सती।
शक्रहन्तारमिच्छामि पुत्रमित्यब्रवीत्क्रुधा॥ २८४॥
तामुवाच कृपाविष्टः कश्यपः शास्त्रलोचनाम्।
तनयं शक्रहन्तारं बलज्येष्ठं त्वमाप्स्यसि॥ २८५॥
अत्यन्तशुचियुक्ता चेद्गर्भे वार्षसहस्रके।
इति तच्छासनं प्राप्य गर्भं च प्रयता दितिः॥ २८६॥
तपश्चचार सुचिरं वीरासुरजिगीषया।
छलप्रेक्षी बभूवास्याः परिचर्यापरः सदा॥ २८७॥
समित्कुशाग्निकुसुमाहारी तत्र शतक्रतुः।
ततो वर्षसहस्रान्ते कृत्वा पादपदे शिरः॥ २८८॥
निद्रां विमोहिता भेजे दितिः पुण्यैर्मरुत्पतेः।
गर्भं प्रविश्य शक्रोऽपि चक्रे वज्रेण सप्तधा॥ २८९॥
प्रबुद्धां रोदनेनास्य दितिं ज्ञात्वा सुराधिपः।
मा रोदीरिति तं गर्भं वदन्पुनरदारयत्॥ २९०॥
ततः प्रभृति शक्रोऽभूद्विश्रुतः पाकशासनः।
स निर्गत्य दितिं दीनां प्रसाद्य मुदितोऽभवत्॥ २९१॥
तं सप्तधाकृतं बालं वातस्कन्धेषु सप्तसु।
विदधेऽधिपतिं शक्रो दितेः प्रणयशासनात्॥ २९२॥

१. 'विभुः' ग.

मा रोदीरिति शक्रोक्त्या मरुतस्ते महौजसः ।
बभूव त्रितयो येषां वि[1]शुद्वायुरिति श्रुतः ॥ २९३ ॥
वि[2]शालस्तत्सुतो राजा यस्येयं विपुला पुरी ।
इहाद्य सु[3]मतिर्नाम विशालकुलजो नृपः ॥ २९४ ॥

इति मरुदुत्पत्तिः ॥ ८ ॥

इत्युक्तं मुनिना श्रुत्वा व्रजन्रामः सलक्ष्मणः ।
संपूजितः सुमतिना ददर्श विपुलं वनम् ॥ २९५ ॥
पुराणैरङ्कितं दृष्ट्वा तत्तपोवनलक्षणैः ।
विश्वामित्रं स पप्रच्छ मुनिं विस्मितमानसः ॥ २९६ ॥
शून्योऽपि रुचिरः कोऽयं दरिद्रो गुणवानिव ।
देशस्तपोवनप्रायस्तपस्विजनवर्जितः ॥ २९७ ॥
राघवेनेति विनयात्पृष्टः प्रोवाच कौशिकः ।
अत्राभवत्पुरा राम गौतमस्याश्रमो मुनेः ॥ २९८ ॥
अहल्या नाम तस्यासीत्तपःश्रीरिव रूपिणी ।
[4]भार्या नवाभिलाषस्य पदं सुरपतेरपि ॥ २९९ ॥
तां भर्त्रा रहितां दृष्ट्वा कदाचित्पाकशासनः ।
रतियाच्ञाप्रणयि[5]तो ययौ गौतमरूपभृत् ॥ ३०० ॥
शक्रोऽयमि[6]त्यविज्ञाय तमहल्या कुतूहलात् ।
चक्रे संपूर्णसंकल्पं तं सौभाग्यवशीकृतम् ॥ ३०१ ॥
शीलांशुकापहरणप्रगल्भानिलविभ्रमम् ।
अभिलाषलताबीजं ललनानां कुतूहलम् ॥ ३०२ ॥
गौतमोऽथ समभ्येत्य शक्रं स्वसदृशं पुनः ।
ददर्श तूर्णं गच्छन्तं लज्जाविलुलितैः पदैः ॥ ३०३ ॥

---

१. 'विश्वग्वायुः' ग-पुस्तके शोधितपाठः; 'दिव्यवायुः' इति रामायणे. २. 'इक्ष्वाकोस्तु नरव्याघ्र पुत्रः परमधार्मिकः । अलम्बुषायामुत्पन्नो विशाल इति विश्रुतः ॥' इति रामायणदर्शनेन पाठोऽत्र त्रुटितः प्रतीयते. ३ 'प्रतिपन्नाम' ग. ४. 'भाजनं वा' ग. ५. 'तां' ग. ६. 'मिति' ग.

लज्जालतापरशुतां यशःशीतांशुमेघताम् ।
मोहश्यामातिमिरतां(?) यातः कस्य न मन्मथः ॥ ३०४ ॥
ततः शक्रस्य सहसा मुनिशापाभिभाषणात् ।
पेततुर्दुनयावस्थासुहृदौ वृषणौ भुवि ॥ ३०५ ॥
गौतमोऽथं समभ्येत्य शीलरत्नविनाकृताम् ।
अहल्यामशपत्कोपाद्भुजङ्गीभावदूषिताम् ॥ ३०६ ॥
चिरमस्मिन्निरालम्बा कानने भस्मशायिनी ।
अदृश्या प्राप्स्यसि शुचं रामसंदर्शनावधि ॥ ३०७ ॥
इत्युक्त्वा गौतमः प्रायादपरं तपसे वनम् ।
सुरेन्द्रो मेषवृषणो मेषादाकृष्य चाभवत् ॥ ३०८ ॥
शापात्संतारयैनां त्वमहल्यां रघुनन्दन ।
चिरगूढपरिक्लेशविनाशः सत्समागमः ॥ ३०९ ॥
कौशिकेनेति कथिते रामोऽभ्येत्य सलक्ष्मणः ।
ददर्श सर्वभूतानामदृश्यां गौतमाङ्गनाम् ॥ ३१० ॥
नीहारजालसंछन्नां कलामिव निशापतेः ।
विद्यामिव निराभासामपि नान्तरविस्मिताम् ॥ ३११ ॥
सा दृष्ट्वा राघवौ प्रीता प्रणामानतशेखरौ ।
लेभे चिन्तानलच्छेदसुचिरोच्छ्वासनिर्वृतिम् ॥ ३१२ ॥
तावभ्यर्च्य गताशङ्का त्यक्तशापा मुनेर्वधूः ।
बभौ कुसुमवर्षेण च्छाद्यमाना सुरैर्दिवि ॥ ३१३ ॥

इत्यहल्याशापमुक्तिः ॥ ९ ॥

ततो जनकराजस्य मिथिलां पृथुलश्रियम् ।
ते प्रविश्य मखक्षेत्रं ददृशुर्मुनिसेवितम् ॥ ३१४ ॥
मुनीनां दीप्ततपसां राज्ञां च भुजशालिनाम् ।
ब्रह्मक्षेत्रमयी काचित्तत्र लक्ष्मीरदृश्यत ॥ ३१५ ॥

---

१. 'पि' ग. २. 'निराभ्यासां' ग.

फुल्लपद्मपलाशाक्षौ धन्विनौ रघुनन्दनौ ।
जनः किरीटिनौ वीक्ष्य ययौ विस्मयवश्यताम् ॥ ३१६ ॥
विलोक्य जनसंबाधं मखस्य महतीं श्रियम् ।
एकान्ते कौशिकमुनिः स्थितिं चक्रे स राघवः ॥ ३१७ ॥
विश्वामित्रं स्वयं प्राप्तं ज्ञात्वा जनकभूपतिः ।
प्रत्युद्ययौ पुरस्कृत्य शतानन्दं पुरोहितम् ॥ ३१८ ॥
स पूजयित्वा विधिवन्मुनिं मान्यं मनीषिणाम् ।
धन्यताभरणां प्रीतिमवाप बहुमानतः ॥ ३१९ ॥
अनामयं मुनिः पृष्ट्वा तमूचे विनयानतम् ।
अहो विराजसे राजन्सदाचारविभूषणः ॥ ३२० ॥
यज्ञदानोपकाराणां संपत्सूते यशस्तव ।
पुण्यं त्रिभुवनस्यापि शुभ्रं गाङ्गमिवोदकम् ॥ ३२१ ॥
अच्छिन्नदानाभरणः सदा धर्मफलोदयः ।
महात्मनां भवन्त्येव पुण्याः पुण्यविभूतयः ॥ ३२२ ॥
अहो बत विदग्धेन भवता समुपार्जितम् ।
कान्ताकटाक्षचटुलैरक्षयं विभवैर्यशः ॥ ३२३ ॥
इति ब्रुवाणं जनकः कौशिकं तमभाषत ।
दन्तांशुभिर्मुखासक्तं सत्यं संदर्शयन्निव ॥ ३२४ ॥
भगवन्यज्ञसंभारो विभवाडम्बरः परम् ।
सर्वयज्ञफलप्राप्तिः पवित्रं तव दर्शनम् ॥ ३२५ ॥
मनोरथावतीर्णोऽपि धन्यतामादधाति यः ।
स साधुसंगमः कस्य न प्रियः कुशलोदयः ॥ ३२६ ॥
कस्येमौ धीरगम्भीरव्यञ्जनोर्जितमानसौ ।
विक्रान्तलक्षणाकारौ सुकुमारौ कुमारकौ ॥ ३२७ ॥
किमप्युत्सिक्ततामेति दर्शनेनानयोर्मनः ।
ययोर्विजयवृत्तान्तं शंसतीव भुजद्वयम् ॥ ३२८ ॥

१. 'पुण्यमर्जितम्' ग.

सादरं जनकेनेति पृष्टः प्रोवाच कौशिकः ।
राज्ञो दशरथस्यैतौ सुतौ सुकृतशालिनः ॥ ३२९ ॥
शिशू लोकपरित्राणपवित्रचरिताकृती ।
गुणानां धाम रामोऽयं लक्ष्मणश्चास्य चानुजः ॥ ३३० ॥
अस्यं मन्मखरक्षायै राक्षसक्षयकारिणः ।
याता पुष्पोज्ज्वला कीर्तिर्लोककर्णावतंसताम् ॥ ३३१ ॥
महावंशभवं वीरं त्वामिवैष गुणोचितम् ।
आयातस्त्वत्कृतौ द्रष्टुं धनुर्धीरं पिनाकिनः ॥ ३३२ ॥
इत्युक्तं मुनिना श्रुत्वा जगाद जनकः पुनः ।
धन्योऽहं यस्य मे रामः समायातः स्वयं गृहम् ॥ ३३३ ॥
पूज्यः समस्तया लक्ष्म्या ममायं रघुनन्दनः ।
अब्धेरिव गृहायातः प्रणयात्पुरुषोत्तमः ॥ ३३४ ॥
इत्युक्ते मिथिलानाथः पूजयन्राघवौ मुदा ।
समागमं मुनीन्द्रेण प्रशशंस पुनः पुनः ॥ ३३५ ॥
विश्वामित्रगिरा ज्ञात्वा शापाद्रामेण मोक्षिताम् ।
अहल्यां जननीं प्रीतः शतानन्दोऽवदन्मुनिः ॥ ३३६ ॥
धन्यो दशरथः श्रीमान्राजा पूर्णमनोरथः ।
यस्य त्वं तनयो राम पुण्यकल्पतरोः[1] फलम् ॥ ३३७ ॥
विश्वामित्रमखत्राणपवित्रेण महीयसा ।
यशसा तव शुभ्रेण भान्ति स्तवकिता दिशः ॥ ३३८ ॥
त्रैलोक्यविजयोदारा कियती तस्य शक्तता ।
श्रेयःस्ववहितः साक्षाद्भगवान्यस्य कौशिकः ॥ ३३९ ॥
कुशसूनोः कुशाख्यस्य[2] पौत्रोऽयं गाधिनन्दनः ।
विश्वामित्रः शशासोर्वीं पुरा सप्ताब्धिमेखलाम् ॥ ३४० ॥

---

१. 'पूर्णपुण्यतरोः' ग. २. 'कुशस्य पुत्रो बलवान्कुशनाभः सुधार्मिकः । कुशनाभसुतस्त्वासीद्गाधिरित्येव विश्रुतः ॥' इति रामायणसंवादेनोत्तरपदलोपोऽवगन्तव्यः,

स कदाचिदयं श्रीमान्सैन्येन महता वृतः।
विचरन्काननान्तेषु वशिष्ठाश्रममाययौ ॥ ३४१ ॥
पूज्येन पूजितस्तेन प्रणयाच्च निमन्त्रितः।
कृच्छ्रादिव तथेत्यूचे कौशिकः प्रीतियन्त्रितः ॥ ३४२ ॥
[1][वशिष्ठोऽपि समभ्येत्य कामधेनुमभाषत।
ससैन्योऽद्य मया राजा विश्वामित्रो निमन्त्रितः] ॥ ३४३ ॥
तस्मै प्रयच्छ विविधां भोज्यरत्नांशुकश्रियम्।
इत्युक्ता [2]बहुला तेन ददौ सर्वं तदर्थितम् ॥ ३४४ ॥
अथ राजोचितैर्भोगैस्तृप्तः सबलवाहनः।
रत्नैश्च विविधैः प्रीतः क्ष्मापतिर्विस्मयं ययौ ॥ ३४५ ॥
स ज्ञात्वा शबलां धेनुं कारणं सर्वसंपदाम्।
उवाच प्रीतिमासाद्य वशिष्ठं तपसां निधिम् ॥ ३४६ ॥
कामधेनुः परं रत्नं रत्नानां भाजनं नृपः।
गवां शतसहस्रेण तस्मादेतां प्रयच्छ मे ॥ ३४७ ॥
तमुवाच वशिष्ठोऽपि नाहं कोटिशतैर्गवाम्।
राशिभिर्वा सुवर्णस्य दास्यामि शबलां क्वचित् ॥ ३४८ ॥
संत्यक्तुं नोत्सहे पुण्यां तपःसिद्धिमिवोत्तमाम्।
हव्यकव्याग्निहोत्राणां प्राणानां च समाश्रयम् ॥ ३४९ ॥
मत्वैतत्कौशिकोऽवादीद्गजानां हेमशालिनाम्।
हयानां चेन्दुशुभ्राणां चायुतैः कोटिभिर्गवाम् ॥ ३५० ॥
देहि मे शबलां ब्रह्मन्निर्बन्धोऽनुशयप्रदः।
इत्युक्तो भूमिपालेन वशिष्ठः पुनरभ्यधात् ॥ ३५१ ॥
राजञ्जीवितसर्वस्वं शबलां न ददामि ते।
सैव मे परमं रत्नं सैव यज्ञक्रियाफलम् ॥ ३५२ ॥
इति ब्रुवाणो न यदा कामधेनुं ददौ मुनिः।
तदा जहार बलवान्बलात्कुशिकनन्दनः ॥ ३५३ ॥

---

१. ग-पुस्तके त्रुटितः. २. 'वहुधा' ग.

ह्रियमाणा वने धेनुर्भूपालेन बलीयसा ।
दुःखिता साश्रुनयना शरणं मुनिमाययौ ॥ ३९४ ॥
सावदद्भगवन्कसादकसादनपायिनी ।
निर्दोषाहं त्वया त्यक्ता हव्यकव्योपयोगिनी ॥ ३९५ ॥
एतच्छ्रुत्वा मुनिवरस्तामुवाच कृपानिधिः ।
न मया त्यज्यसे देवि ह्रियसे प्रसभं मम ॥ ३९६ ॥
बलवान्कौशिको राजा दुर्बला ब्राह्मणा वयम् ।
पश्यामि वाहिनीं शस्त्रवीचीवलयसंकुलाम् ॥ ३९७ ॥
दुःखादिति ब्रुवाणं तं शबला प्रत्यभाषत ।
क्षात्रं बलं नातिबलं ब्रह्मतेजो महद्बलम् ॥ ३९८ ॥
शौर्याधिकः क्षत्रियोऽयं तपस्तेजश्च तेऽधिकम् ।
त्वदनुप्राणितबलं पश्य मामधुना विभो ॥ ३९९ ॥
इत्युक्त्वा ससृजे वीरान्हुंकारेणै[1]व पल्हवान् ।
तान्युद्धे क्षपितान्दृष्ट्वा विश्वामित्रस्य सैनिकैः ॥ ३६० ॥
योनिजान्यवनान्म्लेच्छाञ्छकृतश्चासृजच्छकान् ।
काम्बोजान्दरदाञ्छूरान्वाह्लिकान्सकिरातकान् ॥ ३६१ ॥
[2]तुरुष्कान्सासृजद्वीरान्घोरान्हेमाचलत्विषः ।
ज्वलितानिव दिव्यास्त्रैर्विश्वामित्राभिमन्त्रितैः ॥ ३६२ ॥
(तिलकम्)

तैर्म्लेच्छैर्विकृताकारैः प्रदीप्तविविधायुधैः ।
क्षणेनाभूत्क्षितिपतिर्निहताशेषसैनिकः ॥ ३६३ ॥
ततः शतं नरपतेः पुत्राणां भुजशालिनाम् ।
अभ्याद्रवत्सुसंरब्धं वशिष्ठं तेजसां निधिम् ॥ ३६४ ॥
तानाकृष्टमहाचापखड्गानापतिताञ्जवात् ।
दृष्ट्वा वशिष्ठो विदधे हुंकारेणैव भस्मसात् ॥ ३६५ ॥

---

१. 'ण तदा बहून्' ग. २. 'तुखरा' ग.

हतपुत्रो हतामात्यः सैन्यहीनो महीपतिः ।
सोऽभून्निरुद्धकच्छायो दावदग्ध इवाचलः ॥ ३६६ ॥
[1]प्राज्यं राज्यं परित्यज्य स गत्वा हिमवत्तटम् ।
मौनी तपश्चचारोग्रं पादाङ्गुष्ठधृतिश्चिरम् ॥ ३६७ ॥
तस्य वातभुजः काले स्वयमेत्य [2]चतुर्मुखः ।
अर्थितः प्रददौ दिव्यमस्त्रग्रामं वरप्रदः ॥ ३६८ ॥
दिव्यास्त्रबलसंपूर्णः स गत्वा पुनराश्रमम् ।
वशिष्ठस्याकरोत्सर्वत्रस्तशिष्यजनोज्झितम् ॥ ३६९ ॥
ब्रह्मदण्डमथादाय कालदण्डमिवोत्कटम् ।
ददाह दिव्यान्यस्त्राणि वशिष्ठस्तस्य संगरे ॥ ३७० ॥
ततः प्रक्षीणसर्वास्त्रो ब्राह्ममस्त्रमथासृजत् ।
तदपि ब्रह्मदण्डेन ब्रह्मर्षिरफलं व्यधात् ॥ ३७१ ॥
तस्य ब्रह्मास्त्रसंहारकारिणो भैरवं वपुः ।
न सेहिरे सुरा द्रष्टुं रोमकूपोद्गतानलम् ॥ ३७२ ॥
भग्नदर्पस्ततो राजा विश्वामित्रोऽतिदुःखितः ।
धिक्क्षात्रं बलमित्युक्त्वा प्रययौ तपसे पुनः ॥ ३७३ ॥
स भार्यासहितश्चक्रे दक्षिणां दिशमाश्रितः ।
तपस्तीव्रं ययुर्येन विस्मयं परमर्षयः ॥ ३७४ ॥
हविष्यन्दो महिष्यन्दो दृढनेत्रो महोदयः ।
पुत्रास्तपोवने यस्य जाताः पावकवर्चसः ॥ ३७५ ॥
पूर्वजा हतशेषाश्च तस्याष्टौ बलवत्तराः ।
बभूवुर्भुवि विख्यातास्तनया राज्यभागिनः ॥ ३७६ ॥
पूर्णे वर्षसहस्रेऽथ तपःसंतापितामरम् ।
ब्राह्मण्यकामं राजर्षिं तं ब्रह्मा स्वयमाययौ ॥ ३७७ ॥
सोऽवदत्तपसा लोकास्त्वया राजर्षिसंमताः ।
जिताः संयमिना लब्धं सुकृतं जन्मनः फलम् ॥ ३७८ ॥

१. 'स पुत्रमेकं राज्याय पालयेति नियुज्य च' रामायणे. २. 'वृषध्वजः' रामायणे.

इत्युक्त्वान्तर्हिते क्षिप्रं पद्मयोनौ मुनिः शुचा।
प्रदध्यौ मन्युसंतप्तः श्वसन्नाग इवाहतः ॥ ३७९ ॥
अहो नु नाप्तं ब्राह्मण्यं यत्नेनापि महीयसा।
तपो निष्फलतां यातं खलानामिव संगतम् ॥ ३८० ॥
इत्युक्त्वा पुनरेवोग्रं स चकार महत्तपः।
निजधैर्यदृढश्चित्ते निश्चयो हि महात्मनाम् ॥ ३८१ ॥
अस्मिन्नवसरे सत्यसुधाधौताननद्युतिः।
त्रिशङ्कुर्भूमिपालोऽभूदिक्ष्वाकुकुलभूषणम् ॥ ३८२ ॥
सशरीरो दिवं गन्तुं यियक्षुः स्वपुरोहितम्।
वशिष्ठमाहूय परं यत्नवानभवत्क्रतौ ॥ ३८३ ॥
प्रत्याख्यातो वशिष्ठेन तस्याशक्यतया क्रतोः।
वशिष्ठपुत्रानभ्येत्य चक्रे यज्ञे कृतार्थताम् ॥ ३८४ ॥
कृताञ्जलिरुवाचेदं विपदां विनिवृत्तये।
गुरुणा चरणानम्रः संत्यक्तोऽहमकल्मषः ॥ ३८५ ॥
[[1]गुरुणा प्रतिषिद्धोऽहं युष्माञ्छरणमागतः।
भवद्भिर्यष्टुमिच्छामि गन्तुं विग्रहवान्दिवम्] ॥ ३८६ ॥
[[2]उदेति मृत्युः पीयूषात्किमन्यद्विधुरे विधौ।
सुहृदः शत्रुतां यान्ति संश्रितश्चाविधेयताम् ॥ ३८७ ॥
आराधिताश्च कुप्यन्ति दैवोद्धूलितसंपदाम्]।
[[3]शरण्यं शरणं यातस्त्वामहं वाञ्छितासये ॥ ३८८ ॥
पापं मार्ष्टि शुभं सूते सत्यं साधुसमागमः]।
गुरुणा प्रतिषिद्धोऽहं युष्माञ्छरणमागतः ॥ ३८९ ॥

---

१. पश्चाल्लिखितो ग-पुस्तके. २. कोष्टकान्तर्गतपाठस्य 'कुशलायोद्यतो राजा यातः प्रत्युत शोच्यताम्' इत्यतः प्राग्योजने तु न काप्यनुपपत्तिः. ३. कोष्टकमध्यस्थपाठस्य 'इत्युक्तः कौशिकोऽवादीत्करुणापूर्णमानसः' इत्यतः प्राक्समन्वयो युक्तः प्रतिभाति.

भवद्भिर्यष्टुमिच्छामि गन्तुं विग्रहवान्दिवम् ।
युष्माभिरपि संत्यक्तो गमिष्यामि परं गुरुम् ॥ ३९० ॥
शतं वशिष्ठपुत्राणां श्रुत्वेति नृपमब्रवीत् ।
अशक्यत्वात्परित्यक्तो गुरुणा सत्यवादिना ।
परान्व्रजसि दुर्वृत्त चण्डालो भव सत्वरम् ॥ ३९१ ॥
वशिष्ठपुत्रैरित्युक्तो गत्वा निजपुरीं नृपः ।
अतिवाह्य निशामेकां प्रातश्चण्डालतां ययौ ॥ ३९२ ॥
अधो नीलाम्बरो रक्तवासाः कलमषभूषणः ।
खलैरिवासिकठिनैरायासैः परिवेष्टितः ॥ ३९३ ॥
तं विलोक्य श्रिया त्यक्तं घोरं निजकुलच्युतम् ।
तत्यजुर्मन्त्रिणः सर्वे पौराश्च व्याकुलाशयम् ॥ ३९४ ॥
अहो नु न चलत्येषा पुरुषप्रतिपन्थिनी ।
अनित्यतेव भावानां भूतानां भवितव्यता ॥ ३९५ ॥
अनित्या कर्मरेखेव भूतानां परिवर्तिनी ।
अहो चटुलकल्लोलकुल्या कुटिलचारिणी ॥ ३९६ ॥
नृणामुन्मूलयत्येषा पौरुषं कर्मसंगतिः ।
कुशलायोद्यतो राजा यातः प्रत्युत शोच्यताम् ॥ ३९७ ॥
केवलं शरणं प्रायाद्विश्वामित्रं तपोनिधिम् ।
निवेद्य सर्ववृत्तान्तं तस्मै कारुण्यशालिने ॥ ३९८ ॥
इत्युक्त्वा[१] कौशिकोऽवादीत्करुणापूर्णमानसः ।
एषोऽहं तव साहाय्ये सज्जः क्रतुसमीहिते ॥ ३९९ ॥
अनेनैव शरीरेण सुरलोकं प्रयास्यसि ।
इत्युक्त्वा यज्ञसंभारे मुनिः शिष्यानचोदयत् ॥ ४०० ॥
सोऽभवद्याजकस्तस्य वन्द्यो निन्द्यतनोर्नृपः[२] ।
आपन्नत्राणचतुरं चरितं हि महात्मनाम् ॥ ४०१ ॥
ततः सर्वं मुनिकुलं निमन्त्रयितुमादरात् ।

१. 'इत्युक्तः' स्यात्. २. 'मुनिः.' ग.

विसृष्टा प्रययुस्तेन सर्वे तूर्णं दिशो दश ॥ ४०२ ॥
अथ प्राप्ते मुनिगणे विश्वामित्रतपोबलात्।
यथोक्तमवदञ्छिष्यास्तमेत्य महसां निधिम् ॥ ४०३ ॥
भगवन्मुनयः प्राप्ता वशिष्ठतनयान्विना।
महोदयं च दर्पान्धं तदुक्तं श्रूयतां विभो ॥ ४०४ ॥
स याज्यो यत्र चण्डालः क्षत्रियो यत्र याजकः।
ब्रह्मर्षयो वयं तत्र कथं यज्ञसभासदः ॥ ४०५ ॥
अहो नु ब्राह्मणाः सर्वे महाविप्लवकारिणा।
कल्पान्तेनेव गिरयो विश्वामित्रेण पातिताः ॥ ४०६ ॥
शिष्यैरित्युक्तमाकर्ण्य कौशिकः कोपकम्पितः।
वशिष्ठपुत्रानशपन्निःश्वसन्सुमहोदयान् ॥ ४०७ ॥
मृत्युदग्धाः श्वमांसादाः सप्तजन्मशतानि ते।
मुष्टिका नाम विकृताः प्रभविष्यन्ति निर्घृणाः ॥ ४०८ ॥
महोदयश्च दुर्वृत्तः प्रयास्यति निषादताम्।
इत्युक्त्वा सत्यसंकल्पो विरराम महातपाः ॥ ४०९ ॥
तद्भयादभ्युपगते तस्मिन्यज्ञे महर्षिभिः।
ऋत्विक्प्रणिहितारम्भः पूर्णो विधिरवर्तत ॥ ४१० ॥
आहूता यज्ञभागाय नाजग्मुर्देवता यदा।
कुपितः स्रुवमुद्यम्य तदा मुनिरभाषत ॥ ४११ ॥
राजन्मे पश्य तपसो बलमद्भुतकारिणः।
सशरीरो दिवं गच्छ सहसा मम तेजसा ॥ ४१२ ॥
इत्युक्तमात्रे मुनिना दिवमाचक्रमे नृपः।
प्रदीप्तमन्त्रतपसां किमसाध्यं महात्मनाम् ॥ ४१३ ॥
दृष्ट्वा त्रिदिवमारूढं त्रिशङ्कुं त्रिदशेश्वरः।
अधःशिराः पतेत्युक्त्वा हुंकारेणेत्यपातयत् ॥ ४१४ ॥
ततस्त्रिशङ्कुर्निपतंस्त्रायस्वेत्यभ्यधान्मुनिम्।
अत्रैव तिष्ठ तिष्ठेति तमूचे कौशिकः क्रुधा ॥ ४१५ ॥

ततोऽसृजत्स सप्तान्यान्मुनीन्दक्षिणमार्गगान्।
परां नक्षत्रमालां च प्रजापतिरिवापरः ॥ ४१६ ॥
तं स्रष्टुमुद्यतं देवा ज्ञात्वा त्रस्ता दिवौकसः।
ऊचुः सानुशयं कृत्वा दैन्यव्यञ्जनमञ्जलिम् ॥ ४१७ ॥
गुरुशापादशुचितामयं यातो महीपतिः।
सशरीरो दिवं गन्तुं मुने नार्हति सर्वथा ॥ ४१८ ॥
इति ब्रुवाणान्विबुधानब्रवीत्कौशिको मुनिः।
त्रिशङ्कुस्वर्गगमने प्रतिज्ञा नान्यथा मम ॥ ४१९ ॥
तिष्ठत्वत्रैव भूपालो नक्षत्रैः सह सत्कृतैः।
इत्युक्ता मुनिना देवास्तमूचुः शापशङ्किताः ॥ ४२० ॥
योगसंख्याविहीनानि वैश्वानरपथाद्बहिः।
अक्षयान्यत्र तिष्ठन्तु नक्षत्राणि त्वदाज्ञया ॥ ४२१ ॥
अयं तवाज्ञया राजा तिष्ठत्वत्रैव सर्वथा।
कीर्तिश्च तव शुभ्रेयं यशःस्तम्भ इवोज्ज्वला ॥ ४२२ ॥
उक्त्वेति याते द्युसदां मण्डले मुनिभिः सह।
समाप्य कौशिको यज्ञं पुष्करं तपसे ययौ ॥ ४२३ ॥
अत्रान्तरे नृपः श्रीमानम्बरीषाभिधोऽभवत्।
अयोध्यायां सुधासिन्धुरिव धर्मभृदाकरः ॥ ४२४ ॥
यजमानस्य तस्येन्द्रः पशुं भूमिशतक्रतोः।
जहार तत्कृते पृथ्वीं विप्रवाक्याच्चचार सः ॥ ४२५ ॥
स तपोवनमासाद्य भृगुतुङ्गे स्थितं मुनिम्।
[1]ऋचीकं ससुतं भार्यासखं शान्तं व्यलोकयत् ॥ ४२६ ॥
तं प्रणम्य यथावृत्तं निवेद्यास्मै प्रसाद्य च।
गवां शतसहस्रेण ययाचे तं पशुं सुतम् ॥ ४२७ ॥
[2]ऋचीकस्तमथोवाच ज्येष्ठो नार्हति विक्रयम्।
पुत्रो ममायं दयितः कुलमस्मिन्प्रतिष्ठितः ॥ ४२८ ॥

---

१. 'ऋचेपुं' ग. २. 'ऋचेपु' ग.

इत्युक्त्वा मुनिना प्रीत्या तद्भार्याप्यवदन्नृपम् ।
कनीयांञ्छुनको नाम ममायं दयितः सुतः ॥ ४२९ ॥
नोत्सहेऽहमिमं त्यक्तुं दयितं जीविताद‍पि ।
ज्येष्ठः प्रायः प्रियः पुंसां कनीयांसश्च योषिताम् ॥ ४३० ॥
इति मातुर्वचः श्रुत्वा शुनःशेपो मुनेः सुतः ।
जगाद मध्यमो धीमान्भूमिपालं सिताननः ॥ ४३१ ॥
न विक्रेयः पितुर्ज्येष्ठः कनीयान्मातुरीप्सितः ।
अर्थादेवाद्य विक्रीतो मध्यमोऽहमबान्धवः ॥ ४३२ ॥
इत्युक्ते मुनिपुत्रेण तमेव पशुमीप्सितम् ।
गवां शतसहस्रेण निनाय वसुधाधिपः ॥ ४३३ ॥
अयोध्याभिमुखं गच्छन्सोऽवसत्पुष्करे निशाम् ।
तत्रादौ तु शुनःशेपो विश्वामित्रमभाषत ॥ ४३४ ॥
भगवंस्त्वामहं प्राप्तः शरणं तपसां निधिम् ।
ऋचेपुनाहं[1] विक्रीतो मुनिना मध्यमः सुतः ॥ ४३५ ॥
अस्य राज्ञोऽम्बरीषस्य यातोऽस्मि पशुतां क्रतौ ।
रक्ष्यतामिति तेनोक्ते स्वसुतान्कौशिकोऽब्रवीत् ॥ ४३६ ॥
मद्गिरा भवतामेकः पशुतां यातु भूपतेः ।
रक्षणीयः शुनःशेपो मुनिः सर्वात्मना मम ॥ ४३७ ॥
विश्वामित्रवचः श्रुत्वा घोरं पुत्रास्तमूचिरे ।
परपुत्रस्य रक्षार्थं स्वपुत्रस्त्यज्यते कथम् ॥ ४३८ ॥
मनो विकूणकः कोऽयं धर्मो दुष्कृतसंमतः ।
श्वमांसाशनतुल्योऽयं स्वपुत्रनिधनोद्यमः ॥ ४३९ ॥
इति पुत्रवचः श्रुत्वा विश्वामित्रः क्रुधा ज्वलन् ।
श्वमांसवादिनः शापात्ताञ्जिनाय श्वपाकताम् ॥ ४४० ॥
ततोऽब्रवीच्छुनःशेपं गच्छ राज्ञो महाक्रतौ ।
गाथाद्वयं पठित्वेदं मां स्मृत्वा शुभमाप्स्यति ॥ ४४१ ॥

---

१. 'ऋचीकनाम्ना' भवेत्.

इति शासनमासाद्य मुनेर्भूमिभुजा सह ।
प्रययौ तत्क्रतुक्षेत्रं निर्भयो मुनिपुत्रकः ॥ ४४२ ॥
सदस्यानुमतः सोऽथ पवित्रीकृतलक्षणः ।
पवित्रपाशैराविष्टो रक्ताम्बरविलेपनः ॥ ४४३ ॥
आसाद्य वैष्णवं रूपं मनसा कौशिकं स्मरन् ।
पठन्गाथाद्वयं प्राप यूपं विशमनास्पदाम् ॥ ४४४ ॥
ततः प्रीतः सहस्राक्षः फलं बहुगुणं क्रतोः ।
दत्त्वा राज्ञे शुनःशेपं ररक्ष विपुलाशयः ॥ ४४५ ॥
कौशिकोऽपि सहस्राब्दं पुष्करे दुष्करं तपः ।
कृत्वापश्यद्व्रतस्नातः स्वयं ब्रह्माणमागतम् ॥ ४४६ ॥
स देवैः सहितस्तस्य विना ब्राह्मण्यमुत्तमम् ।
दत्त्वा तपःफलं दिव्यं सहसान्तरधीयत ॥ ४४७ ॥
विश्वामित्रोऽपि तत्प्राप्त्यै पुनस्तीव्रतरं तपः ।
सुरशङ्कास्पदं मानी चकार दृढनिश्चयः ॥ ४४८ ॥
ततः कदाचिदभ्येत्य मेनका नाककामिनी ।
पुष्करे विदधे स्नानं कान्तिसंदेहितोदका ॥ ४४९ ॥
तां विलासस्मितसुधासेकपल्लविताधराम् ।
चलत्कटाक्षविक्षेपरचितश्रवणोत्पलाम् ॥ ४५० ॥
हेमकुम्भयुगेनेव स्तनभारेण भूषिताम् ।
विपुलश्रोणिविपुलां कान्तिकल्लोलिनीमिव ॥ ४५१ ॥
विलोक्य कौशिकमुनिर्ययौ प्रीतिविधेयताम् ।
महतामपि चित्ताब्धिमन्दरः सर्वथा स्मरः ॥ ४५२ ॥
(तिलकम्)

स तस्या निर्भरासङ्गप्रणये प्रेमयन्त्रितः ।
दशवर्षायुतं कालं क्षणं मेने स्मराकुलः ॥ ४५३ ॥

ततोऽनुशयमासाद्य तपोविघ्नमवद्यताम्[1] ।
शरदीव नदीवेगो ह्रियाभूदल्पको मुनिः ॥ ४५४ ॥
प्रक्षाल्य मनसो रागं विवेकविमलोऽभवत् ।
विसृज्य मेनकां चक्रे स चिरं विपुलं तपः ॥ ४५५ ॥
उत्तराद्रितटे तस्य कौशिकीतीरवासिनः ।
तपोयुक्तस्य वर्षाणां सहस्रं शनकैर्ययौ ॥ ४५६ ॥
ततो भीताः सुराः सर्वे समभ्येत्य प्रजापतिम् ।
लभतां कौशिको ब्रह्मशब्दमित्यूचिरे जवात् ॥ ४५७ ॥
देवैरभ्यर्थितो धाता समेत्योवाच कौशिकम् ।
मुने नाद्यापि निर्द्वन्द्वो भवानविजितेन्द्रियः ॥ ४५८ ॥
वशी प्राप्स्यसि कालेन ब्राह्मण्यं ब्रह्मसंमतम्[2] ।
इत्युक्त्वान्तर्हिते क्षिप्रं विश्वयोनौ महामुनिः ॥ ४५९ ॥
ऊर्ध्वबाहुर्निरालम्बश्चक्रे वाताशनस्तपः ।
ग्रीष्मे पञ्चानलः शीते सलिलान्तरमाश्रितः ॥ ४६० ॥
तस्योग्रतपसो[3] भीत्या संभ्रमोऽभूद्दिवौकसाम् ।
सुराङ्गनां ततः शक्रः प्राहिणोत्तज्जिगीषया ॥ ४६१ ॥
सा शापचकिता प्रायात्कौशिकस्य तपोवनम् ।
शक्रवाक्यादनुगता मधुना मदनेन च ॥ ४६२ ॥
ततः फुल्ललताजालभ्रमद्भ्रमरमण्डले ।
स्मरवन्दिनि सानन्दे कलालापिनि कोकिले ॥ ४६३ ॥
विलाससरसारम्भां रम्भां संभावितस्मराम् ।
ददर्श कौशिकः कान्तां नयनानन्दकौमुदीम् ॥ ४६४ ॥
(युगलकम्)
स तां दीर्घतपाः स्निग्धचक्षुषा क्षणमैक्षत ।
शोषितेऽपि शरीरेऽस्मिन्नभिलाषो न शुष्यति ॥ ४६५ ॥
तां ज्ञात्वा तपसो विघ्नं सहस्राक्षेण निर्मिताम् ।
स शशापाभवद्येन सा शिला वत्सरायुतम् ॥ ४६६ ॥

---

१. 'मवेत्य' ग. २. 'संगतम्' ग. ३. 'तत्रो' ग.

मन्मथे मधुना सार्धं याते भग्नमनोरथे ।
कामक्रोधविकारेण पश्चात्तापं ययौ मुनिः ॥ ४६७ ॥
विप्रप्रसादपर्यन्तं तस्याः शापं विधाय सः ।
निरुच्छ्वासोऽभवन्मौनी वर्षायुतमभोजनः ॥ ४६८ ॥
स्थाणुभूते निरालम्बे क्रोधमात्सर्यवर्जिते ।
विघ्नाः शक्रेरितास्तस्मिन्नावकाशं च लेभिरे ॥ ४६९ ॥
तस्य वर्षसहस्रान्ते श्रितान्नव्रतपारणः ।
विप्ररूपः स्वयं शक्रः सर्वमभ्येत्य भुक्तवान् ॥ ४७० ॥
परं वर्षसहस्रं स निरुच्छ्वासोऽभवत्पुनः ।
तत्तालुविवरोत्थैश्च धूमैर्द्यौः समपूर्यत ॥ ४७१ ॥
समुद्भ्रान्ते ततो लोके सदेवासुरपन्नगे ।
मन्दंतेजसि तिग्मांशौ क्षुभिते चाब्धिमण्डले ॥ ४७२ ॥
विदीर्णे गिरिसंघाते कम्पमाने महीतले ।
सुरैरभ्यर्थितो ब्रह्मा स्वयं मुनिमुपाययौ ॥ ४७३ ॥
(युगलकम्)

स तस्मै क्षीणमोहाय ददौ ब्रह्मर्षितां विभुः ।
सोऽकरोत्स्ववशं सर्वान्वेदानमरतां तथा ॥ ४७४ ॥
ततः प्रजापतिं प्रीतं प्राञ्जलिः कौशिकोऽवदत् ।
ब्रह्मसूनुर्वशिष्ठो मां ब्राह्मणोऽसीति भाषताम् ॥ ४७५ ॥
ततः सुरैः समाहूतो वशिष्ठः समभ्येत्य तम् ।
ब्रह्मर्षये स्वस्ति तुभ्यमित्युवाचास्तकिल्बिषः ॥ ४७६ ॥
अन्तर्हिते सुरैः सार्धं सहसैव पितामहे ।
सख्यं कृत्वा वशिष्ठेन कौशिकः सुखितोऽभवत् ॥ ४७७ ॥
इत्येवं विविधाश्चर्यचरितो भगवानयम् ।
धन्योऽसि बत काकुत्स्थ गोप्ता यस्य महामुनिः ॥ ४७८ ॥

इति विश्वामित्रोपाख्यानम् ॥ १० ॥

गौतमेनेति कथिते शतानन्देन सादरम्।
जनकः कौशिकं प्रीत्या पुनः पुनरपूपुजत्॥ ४७९॥
ततो दिनान्ते जनकः प्रवृत्ते यज्ञकर्मणि।
प्रययौ मुनिमामन्त्र्य तत्प्रभावं विचिन्तयन्॥ ४८०॥
अथ प्रभाते भूपालः समेत्य प्रणतो मुनिम्।
उवाच किं कृत्यमिति[1] प्रणयावर्जिताञ्जलिः॥ ४८१॥
विश्वामित्रस्तमवदद्दिव्यं तत्त्रिपुरद्विषः।
धनुर्धैर्यनिधिर्वीरो राघवो द्रष्टुमर्हति॥ ४८२॥
श्रुत्वैतत्कौशिकेनोक्तं जगाद जनकः पुनः।
प्रभावमस्य धनुषो जानीषे भगवन्स्वयम्॥ ४८३॥
निमेः षष्ठो देवरातो राजास्माकं पितामहः।
हस्ते न्यस्तं पुरा तस्य निजं धूर्जटिना धनुः॥ ४८४॥
दक्षयज्ञवधे देवान्विधूय प्राज्यतेजसा।
अभ्यधाद्भगवान्भोगे[2] लीलाव्यापृतकार्मुकः॥ ४८५॥
यज्ञभागमकृत्वा मे ये यूयं यज्ञभागिनः।
तेषां वः प्रवराङ्गानि शातयत्वेष पत्रिभिः॥ ४८६॥
इति वादिनमीशानं प्रसाद्य त्रिदिवौकसः।
शातितः स्वाङ्गतेजोभिः शक्रस्तस्मै महद्धनुः॥ ४८७॥
तदेतत्तेजसां धाम गृहे नः परमार्चितम्।
धनुरास्ते पुरारातेः परं मन्दरगौरवम्॥ ४८८॥
हलाकृष्टमही जाता जननी कान्तिसंपदाम्।
लक्ष्मीर्लावण्यतोयाब्धेः सीता[3] नामास्ति मे[4] सुता॥ ४८९॥
अधिज्यं धूर्जटिधनुः शौर्यस्य निकषोपमम्।
यः करिष्यति स श्लाघ्यां[5] सीतां कीर्तिमिवाप्स्यति॥ ४९०॥

---

१. 'कृतमिति' ग. २. 'भोगी' इत्यस्य स्थाने 'भर्गो' इति शोधितं ग-पुस्तके. ३. 'जानकी' ग. ४. 'गोसुता' ग. ५. 'सीतां मूर्तां' ग.

दर्पप्रचण्डदोर्दण्डाः सीतापरिणयोत्सुकाः ।
चण्डीशचापदण्डेन के नृपा न विडम्बिताः ॥ ४९१ ॥
असक्ता ग्रहणे तस्य का कथा धारणे पुनः ।
तोलने नष्टसंकल्पा लङ्घने जलधेरिव ॥ ४९२ ॥
ते संहता नृपतयस्तुलारोपितविक्रमाः ।
चक्रुर्मे नगराबन्धं शङ्काकोपाकुलाशयाः ॥ ४९३ ॥
ततः संवत्सरे पूर्णे क्षीणसैन्याब्धिना मया ।
देवतानां वरात्प्राप्तं चतुरङ्गं महद्बलम् ॥ ४९४ ॥
तेन ते विदिताः सर्वे छिन्नच्छत्ररथध्वजाः ।
स्वपुराणि ययौ भूपा ध्वस्तमानमनोरथाः ॥ ४९५ ॥
तामिमां शौर्यशुल्कां मे कन्यां कुवलयेक्षणाम् ।
रामः प्राप्स्यति शक्तश्चेत्कार्मुकारोपणे पणे ॥ ४९६ ॥
इत्युक्त्वा मन्त्रिणः सर्वानादिदेश महीपतिः ।
दयितं खण्डपरशोर्धनुरानीयतामिति ॥ ४९७ ॥
अथाष्टचक्रशकटाकृष्टमञ्जूषिकाश्रितम् ।
शतैः पञ्चभिरानीतं नृणां धनुरदृश्यत ॥ ४९८ ॥
ततो जनकराजेन विनयेन निवेदितम् ।
विश्वामित्रो धनुर्दृष्ट्वा जगाद रघुनन्दनम् ॥ ४९९ ॥
इदं तत्रिषु लोकेषु विश्रुतं राम कार्मुकम् ।
गृहाण क्रियतामस्य व्यापारः पुरुषोचितः ॥ ५०० ॥
इत्युक्ते मुनिना रामस्तत्प्रणम्यैश्वरं धनुः ।
जग्राह लीलया कुर्वन्विस्मयाकुलितं जगत् ॥ ५०१ ॥
स तस्य शुशुभे दिव्यकार्मुकप्रणयी भुजः ।
रक्ताङ्गदांशुवलयव्यालैः पशुपतेरिव ॥ ५०२ ॥
क्षणादधिज्यमादाय धनुरद्भुतविक्रमः ।
धन्विना सह दर्पेण समाकृष्य बभञ्ज तत् ॥ ५०३ ॥

१. 'लज्जा' ख-ग.

भज्यमानस्य धनुषो ध्वनिराचार्यतां ददौ ।
अकाण्डताण्डवारम्भे स्वर्गोद्यानशिखण्डिनाम् ॥ १०४ ॥
गिरीणां सागराणां च व्याघट्टितनभस्तलः ।
स शब्दो घोरनिर्घोषैर्दिदेश विशरारुताम् ॥ १०५ ॥
भुवनभ्रंशकृद्भीमश्चापभङ्गभवो ध्वनिः ।
स चक्रे शक्रकान्तानां कल्पान्तभ्रान्तिसाध्वसम् ॥ १०६ ॥
भग्नकार्मुकभङ्गेन मन्दरारावकारिणा ।
चकम्पे लोलसप्ताब्धिमेखला वसुधावधूः ॥ १०७ ॥
नृणामाविरभूद्दाहः[1] प्रलयारम्भसंभ्रमात्[2] ।
ऋते विदेहाधिपतेः कौशिकाच्च सराघवात् ॥ १०८ ॥
ततः स विस्मयोत्साहहर्षप्रणयनिर्भरः ।
उवाच वाञ्छितावाप्तिनिर्वृत्तः पार्थिवो मुनिम् ॥ १०९ ॥
धन्या मे भगवन्पुत्री प्राप्तो रामः पतिर्यया ।
सप्तार्णवप्रणयिनी कीर्तिर्यस्य नवोदिता ॥ ११० ॥
सदा विसदृशासङ्गकारिणो वाच्यता विधेः ।
चिरादेव निवृत्तोऽयं रामसीतासमागमः ॥ १११ ॥
अयोध्यां यान्तु मे दूतास्तूर्णं दशरथं प्रति ।
समायात्वत्र सुकृती सूनोः परिणयोत्सवे ॥ ११२ ॥
इत्युक्त्वा मिथिलानाथः संकल्पानिव शीघ्रगान् ।
नृपाय प्राहिणोद्दूतान्वाजिभिर्जवशालिभिः ॥ ११३ ॥
तेऽपि तूर्णतरं गत्वा सभासीनं नरेश्वरम् ।
चक्रुर्विदितवृत्तान्तं हर्षपीयूषवर्षिणः ॥ ११४ ॥

इति धनुर्भङ्गः ॥ ११ ॥

ततो दशरथः श्रीमानाययौ मुनिभिर्वृतः ।
वशिष्ठवामदेवाद्यैर्मार्कण्डेयपुरःसरैः ॥ ११५ ॥

---

१. 'न्मोहः' ख. २. 'विभ्रमात्' ग.

समुद्धूताब्धितुल्येन तस्य सैन्येन सर्पता ।
दिशः शस्त्रप्रभाजालवीचीवलयिता बभुः ॥ ९१६ ॥
मिथिलामथ संप्राप्तं तं राजा जनकः स्वयम् ।
प्रत्युद्ययौ पुरस्कृत्य श्लाघ्यसंबन्धिसंपदम् ॥ ९१७ ॥
रत्नैरभ्यर्चितस्तेन प्रवेश्येक्ष्वाकुनन्दनः ।
बभौ मुनिसभासीनश्चतुर्भिस्तनयैः सह ॥ ९१८ ॥
ततः प्रणम्य पूजार्हान्वशिष्ठप्रमुखान्मुनीन् ।
प्रशंसञ्जन्म जनको जगाद जगतीपतिम् ॥ ९१९ ॥
अहो बतावतंसत्वं प्राप्तः पुण्यवतामहम् ।
वशिष्ठो यस्य भगवान्भवांश्चाभ्यागतो गृहान् ॥ ९२० ॥
द्वावेव सुकृतोदारौ पितरौ पुत्रिणां वरौ ।
पुत्रेण राघवेन त्वं विष्णुना स च कश्यपः ॥ ९२१ ॥
विभाति भूरियशसः कस्यान्यस्य यथा तव ।
भुवनत्रितयोद्गीतं पुत्रमानोन्नतं शिरः ॥ ९२२ ॥
गृहाण राघवाय त्वं शौर्यशुल्कां सुतां मम ।
गुरवो दूततां याताः संबन्धेऽस्मिन्मिथो गुणाः ॥ ९२३ ॥
जनकेनेत्यभिहितो हर्षाद्दशरथोऽवदत् ।
बहु मन्यामहे कन्यां त्वया प्रीतिमिवार्पिताम् ॥ ९२४ ॥
कुले सुविपुले जन्म विद्याविद्योतिता मतिः ।
महाजनैश्च संबन्धः फलं गुरुजनाशिषाम् ॥ ९२५ ॥
गुणसौभाग्ययोग्योऽयं भाग्यानां प्रथमोदयः ।
रामस्य श्रेयसे सक्तो यदसौ कौशिको मुनिः ॥ ९२६ ॥
(यथा चतुर्भिः कनकं परीक्ष्यते निघर्षणच्छेदनतापताडनैः ।
तथा चतुर्भिः पुरुषः परीक्ष्यते कुलेन शीलेन गुणेन कर्मणा ॥९२७॥)
इत्युक्ते रघुनाथेन मुनयः प्रणयार्जिताः ।
प्रशशंसुः परिणयं कौशिकं च तपोनिधिम् ॥ ९२८ ॥

१. 'प्रविश्य' स्यात्. २. 'राघवेण' स्यात्. ३. 'यशः' ग. ४. ख-पुस्तके नोपलभ्यते.

यथार्हं पूजितस्याथ जनकेन महीभुजः।
आनन्देन्दुसुधासिक्ता सुखेन रजनी ययौ ॥ १२९ ॥
पुनः सभामागतयोः प्रभाते भूपयोर्द्वयोः।
बभूवानन्तसामन्तैः संघर्ष इव संपदाम् ॥ १३० ॥
जनकेन विसृज्याथ शतानन्दं पुरोधसम्।
निजोऽनुजः समभ्यायात्समाहूतः कुशध्वजः ॥ १३१ ॥
मूकतां बन्दिवृन्देऽथ श्रिते वेत्रभृतां गिरा।
वशिष्ठो वदतां श्रेष्ठः प्रस्तावोचितमभ्यधात् ॥ १३२ ॥
राजन्प्रवर्ततां पुण्यास्तव वैवाहिको विधिः।
शुद्धाभिजनयोः श्लाघ्यसंबन्धो युवयोरयम् ॥ १३३ ॥
अव्यक्तप्रभवस्यासीन्मरीचिर्ब्रह्मणः सुतः।
कश्यपस्तस्य तनयो विवस्वांस्तस्य चात्मनः ॥ १३४ ॥
मनुर्विवस्वतः पुत्र इक्ष्वाकुर्मानवो नृपः।
पुत्रो विकुक्षिरैक्ष्वाको बाणस्तस्याभवत्सुतः ॥ १३५ ॥
पुत्रोऽनरण्यस्तस्याभूत्पृथुस्तस्मादजायत।
ततस्त्रिशङ्कुरभवद्धुन्धुमारस्तदात्मजः ॥ १३६ ॥
युवनाश्वः सुतस्तस्य मांधाता तत्सुतो नृपः।
सुसंधिस्तनयस्तस्य ध्रुवसंधिस्ततोऽभवत् ॥ १३७ ॥
तत्सूनुर्भरतो राजा तस्याभूदसितः सुतः।
गरेण सहजातश्च तत्पुत्रः सगरोऽभवत् ॥ १३८ ॥
तस्यात्मजोऽसमञ्जश्च पुत्रस्तस्यांशुमानपि।
दिलीपस्तस्य दायादस्तस्य पुत्रो भगीरथः ॥ १३९ ॥
काकुत्स्थस्तस्य तनयो रघुस्तस्यात्मजो नृपः।
कल्माषपादस्तत्सूनुः शङ्खनो नाम तत्सुतः ॥ १४० ॥
सुदर्शनस्तस्य सूनू रक्तवर्णस्तदात्मजः।
शीघ्रगस्तस्य पुत्रोऽथ निमिस्तस्याभवत्सुतः ॥ १४१ ॥

तस्याम्बरीषस्तनयो नहुषस्तस्य चात्मजः ।
ययातिर्नाहुषो राजा नाभागश्च ययातिजः ॥ ९४२ ॥
अजस्तस्यात्मजो राजा पिता दशरथस्य यः ।
पुत्रा दशरथस्येमे रामपूर्वा मनस्विनः ॥ ९४३ ॥
सुतां देहि त्वमेतेभ्यो भ्रातुस्ते[1] सन्ति कन्यकाः ।
वशिष्ठेनेति कथिते जनकोऽप्यभ्यभाषत ॥ ९४४ ॥

इतीक्ष्वाकुवंशकथनम् ॥ १२ ॥

देवरातो निमेः षष्ठो जनकानामभून्नृपः ।
सुवर्णरोमा तस्याभूद्वंशे महति भूपतिः ॥ ९४५ ॥
राज्यभाक्तस्य पुत्रोऽहं चानुजो मे कुशध्वजः ।
पितरि स्वर्गमारूढे पालितः पुत्रवन्मया ॥ ९४६ ॥
कदाचिदथ रुन्धानो मिथिलां विपुलैर्बलैः ।
सांकाश्याधिपतिर्योद्धुं सुधन्वा मामुपाययौ ॥ ९४७ ॥
स विसृज्य मदाध्मातो दूतं समरसंमुखः ।
कुलदैवतमस्माकं ययाचे शांभवं धनुः ॥ ९४८ ॥
स निर्गत्य महावीरः समरोन्माथिनां वरः ।
नीतोऽतिविग्रहरुचिर्यशोविग्रहशेषताम् ॥ ९४९ ॥
तं निहत्य सुधन्वानं सांकाश्यं नाम तत्पुरम् ।
कुशध्वजाय दत्त्वाहं[2] हतारिर्निर्वृतोऽभवम् ॥ ९५० ॥
सीतां ददामि रामाय लक्ष्मणाय तथोर्मिलाम् ।
कुशध्वजस्य जामाता भरतोऽप्यस्तु सानुजः ॥ ९५१ ॥
इत्युक्ते भूमिपालेन महादानपुरःसरः ।
महार्ह[3]मङ्गलोदारः प्रावर्तत महोत्सवः ॥ ९५२ ॥
गवां लक्षाणि साहस्रं ददौ भूपतिशेखरः ।
गवां लक्षाण्यविश्रान्तं दातुं दशरथे स्वयम् ॥ ९५३ ॥

---

१. 'पुत्रास्ते' इत्यप्युपलभ्यते. २. 'तत्' इत्यपि दृश्यते. ३. 'महार्थ' काश्मीर०.

प्रवृत्ते हेमशृङ्गाढ्या मेरुश्रीरिव भूरभूत् ।
अत्रान्तरे समभ्यायात्पुत्रः केकयभूपतेः ॥ ९९४ ॥
युधाजिद्भरतं द्रष्टु मातुलः प्रीतिलालसः ।
स तत्र पूजामासाद्य लेभे हर्षमहोत्सवम् ॥ ९९५ ॥
सुखोदग्रोत्सवव्यग्रान्धन्याः पश्यन्ति बान्धवान् ।
ततः समाययुः कन्याश्चतस्रश्चारुलोचनाः ॥ ९९६ ॥
मूर्ताः पुष्पशरस्येव कान्तिशक्तिरतिश्रियः ।
अथ जग्राह जानक्या रामो राजीवलोचनः ॥ ९९७ ॥
पाणौ हरिणशावाक्ष्याः पाणिं पल्लवकोमलम् ।
वह्निप्रदक्षिणावृत्ते तारहारांशुहासिनी ॥ ९९८ ॥
सा बभौ श्रीरिवालोलसुधाकल्लोलशालिता ।
अधुना मधुना सार्धं विजयी जृम्भतां स्मरः ॥ ९९९ ॥
इतीव नूपुरयुगं जगादास्याः पदे पदे ।
साचीकृतदृशस्तस्याः पक्ष्मच्छायामयं धनुः ॥ ९६० ॥
नीलोत्पलावलीधाम रामः काम इवादधे ।
लज्जानतमुखाम्भोजा पुलकेनेव चर्चिता ॥ ९६१ ॥
कर्णोत्पलपरागेण सा बभौ शबलस्तनी ।
दूरे शशाङ्कशङ्कापि लज्जैव जलजोपमा ॥ ९६२ ॥
इति सीतामुखे रामः कलयन्निदधे दृशम् ।
लज्जालोलैः सरसारैर्गूढमानन्दमन्दिरैः ॥ ९६३ ॥
लेभे शृङ्गारसाम्राज्यं रामः सीताविलोकितैः ।
सीतानुजां निर्मलेन्दुवदनामूर्मिलाभिधाम् ॥ ९६४ ॥
विधिना लक्ष्मणः प्राप सद्वृत्त इव संपदम् ।
कुशध्वजसुतां लेभे मालवीं भरतस्ततः ॥ ९६५ ॥

---

१. 'पाणिं' शारदा०. २. 'वाल' शारदा०. ३. 'सद्वृत्तामिव' शारदा०.

श्रुतिकीर्तिं च शत्रुघ्नः श्रुतां कीर्तिमिवापराम्।
एवमेव [1]महोत्साहोत्सवतूर्यसमन्विते ॥ १६६ ॥
[2]पुरः पुष्पसमाकीर्णे पूर्णे परिणयोदये।
गीतनृत्याकुलवधूवदनेन्दुशताचिता।
रत्नदीपांशुविषदा रजनी दिनवद्ययौ ॥ १६७ ॥

(इति सीताविवाहः समाप्तः।)

ततः प्रभाते भगवान्विश्वामित्रः क्षितीश्वरौ।
आमन्त्र्य तपसे प्रायात्स्फटिकाचलकन्दराम् ॥ १६८ ॥
बहुरत्नमथासाद्य कन्याधनमनुत्तमम्।
आमन्त्र्य जनकं राजा प्रतस्थे तनयैः सह ॥ १६९ ॥
व्रजतस्तस्य मत्तेभकर्णतालानिलोत्थितैः।
बभूवुर्भृङ्गवलयैः श्यामलाः सर्वतो दिशः ॥ १७० ॥
सुचारुचामरोदारस्वच्छच्छत्रांशुहासिनी।
गङ्गेव स्फीतफेनाढ्या सा राजध्वजिनी बभौ ॥ १७१ ॥
ततोऽभवत्समुद्भूतदुर्निमित्तपरम्परा।
खलसंपदिवात्युग्रा सर्वोद्वेगविधायिनी ॥ १७२ ॥
प्रकाशकोऽपि भगवान्सूर्योऽभूत्तमसा वृतः।
विद्वानिवान्यविज्ञानमात्सर्योपहताशयः ॥ १७३ ॥
निर्घातेन [3]क्षितिर्ध्वस्ताधृतिश्चिरमकम्पत।
तनुर्विवेकहीनस्य क्रोधेनेवाजितात्मनः ॥ १७४ ॥
रजस्तिरस्कृता लोकाः सन्मार्गपरिपन्थिनः।
मदस्था इव दुर्निष्ठा बभ्रमुर्भीषणानिलाः ॥ १७५ ॥
पांसुपूर्णचिताकालरजन्या घोररूपया।
अविद्ययेव भूतानामभवन्मोहविभ्रमः ॥ १७६ ॥

---

१. 'महोत्सवो तूर्यस्वननिरन्तरे' क; 'महोत्सवोत्साहस्वननिरन्तरे' ख. २. 'सुरे' ख; 'मर' क. ३. 'ध्वस्तधृति' स्यात्.

अथादृश्यत दिग्दाहदारुणोदरमम्बरम् ।
वडवाग्निशिखोद्गारघोरं रूपमिवाम्बुधेः ॥ १७७ ॥
गम्भीरमोहनिस्पन्दे संदेहान्दोलिते मुहुः ।
सैन्ये संघ इवाग्नीनां भार्गवः प्रत्यदृश्यत ॥ १७८ ॥
ज्वलज्ज्वलनतुल्येन कुठारेणांससङ्गिना ।
शिखरासक्तसूर्यस्य सुमेरोस्तर्जयन्प्रभाम् ॥ १७९ ॥
संरम्भश्लथबन्धेन जटाजूटेन बभ्रुणा ।
लम्ब[1]विद्युल्लताजालभीमः सांध्य इवाम्बुदः ॥ १८० ॥
प्रोन्मिषद्विषमाकोपकम्पप्रस्फुरिताधरः ।
कुर्वन्क्षत्रान्तकालानामसकृद्गणनामिव ॥ १८१ ॥
वहन्नर्जुनदोर्दण्डमण्डलच्छेदकोविदे ।
खण्डधारे कुठाराग्रे मृत्युदन्तावलीमिव ॥ १८२ ॥
दधानस्तत्क्षणाधिज्यं प्राज्यमाभासुरं धनुः ।
पार्श्वे विश्वक्षयायातपरिवेशमिवांशुमान् ॥ १८३ ॥
क[2]रेणान्दोलयन्नुद्यत्प्रभापरिकरं शरम् ।
क्षत्रियक्ष[3]यसंसक्तरक्तधारमिवाभितः ॥ १८४ ॥
वसिष्ठमुख्या मुनयस्तं वीक्ष्य भयशङ्किताः ।
स्वस्तीति वादिनस्तूर्णं पूजामस्य प्रचक्रिरे ॥ १८५ ॥
भार्गवोऽपि समभ्येत्य राघवं घोरविक्रमः ।
उवाच लोकान्महतः सहसालोकयन्निव ॥ १८६ ॥
राम चण्डीशकोदण्डे कृतं किमिति सांप्रतम् ।
यत्त्वया तदहं मन्ये निखिलं बालचेष्टितम् ॥ १८७ ॥
भवता तदसंभाव्यं शांभवे चायुधे कृतम् ।
नमः कालाय बलिने येनेदं जीर्यते जगत् ॥ १८८ ॥

---

१. 'लम्बद्विद्युल्लताभीमो घोरः सांध्य' शा०. २. 'करेण कलयन्घोर' शोधि०. ३. 'क्षोभ' शा०.

दृश्यतामद्भुततरं ममेदं वैष्णवं धनुः ।
भ्रियतां यदि वीरोऽसि वीरोऽसि यदि कृष्यताम् ॥ ५८९ ॥
अस्मिन्विज्ञातसारस्त्वं ममापि समरे शिशो ।
क्षत्रियक्षयकालाग्नेर्यास्यसि द्वन्द्वयोग्यताम् ॥ ५९० ॥
इति ब्रुवाणे सावज्ञं जमदग्न्ये ससंभ्रमः ।
पुत्रप्रीत्या दशरथस्तमुवाच कृताञ्जलिः ॥ ५९१ ॥
भवता वीतरागेण भगवन्ब्रह्मवादिना ।
शस्त्रं शक्रपुरो न्यस्तं कोऽयं युद्धादरः पुनः ॥ ५९२ ॥
प्रदाय कश्यपाय त्वं महीं सगिरिसागराम् ।
संन्यासनिरतः कस्मादकस्माद्योद्धुमागतः ॥ ५९३ ॥
क्व सा मुनिप्रणयिनी पुण्या संतोषशीलता ।
क्व चायं युद्धनिर्बन्धः कलुषः क्षत्रियोचितः ॥ ५९४ ॥
विवेकः शमसंतोषौ क्षमा परहितोद्यमः ।
सर्वत्र मैत्रमनसामुचितं हि महात्मनाम् ॥ ५९५ ॥
स्निग्धा दृष्टिर्मनोमैत्री वाणी पीयूषवर्षिणी ।
एतास्ताः सत्यतपसां पुण्याः संतोषभूमयः ॥ ५९६ ॥
उक्ते दशरथेनेति तमनादृत्य भार्गवः ।
राममेवावदत्को हि क्रोधान्धः प्रभुरात्मनः ॥ ५९७ ॥
दिव्ये द्वे धनुषी राम शांभवं वैष्णवं तथा ।
शांभवं भवता भग्नं वैष्णवं मम वर्तते ॥ ५९८ ॥
धनुःप्रभवसंघर्षाद्वैकुण्ठशितिकण्ठयोः ।
पितामहोत्साहितयोरभवद्युद्धमुत्तमम् ॥ ५९९ ॥
ततः कार्मुकमत्युग्रमाकृष्टं त्रिपुरारिणा ।
हुंकारेण हरिश्चक्रे चित्रार्पितमिवाचलम् ॥ ६०० ॥
सभर्गे स्तम्भिते तस्मिन्कार्मुके कैटभारिणा ।
तत्प्रहारोद्यते विष्णौ विनयाद्वारिते सुरैः ॥ ६०१ ॥

वैष्णवं मेनिरे चापं सर्वे विष्णुमिवोत्तमम् ।
क्रुद्धो रुद्रश्च तत्याज जनकेषु निजं धनुः ॥ १०२ ॥
वैष्णवं भार्गवकुले विष्णुना प्रतिपादितम् ।
ममेदं भासुरं पश्य धनुः क्षत्रकुलोचितम्[1] ॥ १०३ ॥
कार्तिवीर्यापराधेन कृत्वा निर्भूमिपं जगत् ।
महेन्द्रस्थः समाकर्ण्य धनुर्भङ्गमिहानतः ॥ १०४ ॥
गृहाण वैष्णवं चापं निजं दर्शय पौरुषम् ।
ततो ममापि समरे यास्यसि प्रतिमल्लताम् ॥ १०५ ॥
इत्युक्त्वा विरते तस्मिन्राघवः प्रत्यभाषत ।
अपराधोचितः क्रोधो न निन्द्यः क्षत्रियेषु ते ॥ १०६ ॥
न च जातस्तदा कश्चित्क्षत्रियो विजयोचितः ।
योऽपराध्यति नार्घ्येषु न च याति पराभवम् ॥ १०७ ॥
क्षत्रवृत्तं रजोध्वस्तं धूमश्याम इवानलः ।
तेजस्ते शान्तमेवैतत्संरम्भः कोऽत्र मादृशाम् ॥ १०८ ॥
इत्युक्त्वा सशरं त्वस्माच्चापमादाय राघवः ।
अधिज्यं विदधे वीरस्तूर्णमद्भुतविक्रमः ॥ १०९ ॥
तत्समाकृष्य तरसा सह भार्गवतेजसा ।
नीत्वा कर्णान्तमापूर्णं कीर्णांशुकपिशं शरम् ॥ ११० ॥
वामकेयूरकिरणाङ्कुरितोरुशरासनः ।
दक्षिणाङ्गदरत्नांशुकृतकर्णावतंसकः ॥ १११ ॥
[2]अत्रान्तरे पुरारातेरपेशलशरः स्मरः ।
अयमित्यद्भुतकथां जनयन्दिव्ययोषिताम् ॥ ११२ ॥
[3]ततः सीताचलापाङ्गदृष्टिभागोत्पलाचितः ।
उवाच रामः सासूयं स्मितपल्लविताधरः ॥ ११३ ॥
पूज्यो मे ब्राह्मणोऽसीति मुने मान्यो मनीषिणाम् ।
शरीरान्तकरं घोरं शरं न विसृजामि ते ॥ ११४ ॥

---

१. 'क्षत्रियचोदितम्' ख. २. 'अनुस्वरः' शोधितपाठः. ३. 'तस्य' शारदा०.

गतिं हन्मि तवानेन लोकान्वा तपसार्जितान् ।
अमोघः सर्वथा विष्णोरयं घोरतरः शरः ॥ ६१५ ॥
इति वादिनि काकुत्स्थे सुरा ब्रह्मपुरःसराः ।
सदैत्यसिद्धगन्धर्वा द्रष्टुमद्भुतमाययुः ॥ ६१६ ॥
दिवाकर इवोदग्रे मण्डलीकृतकार्मुके ।
राघवे भार्गवो दीप इवाभूद्विगतप्रभः ॥ ६१७ ॥
प्रतापहीनो निःस्पन्दश्चित्रन्यस्त इवाचलः ।
मन्दमन्दस्वरो रामं सोऽवदद्विनयान्वितः ॥ ६१८ ॥
न हन्तुमर्हसि गतिं मम राम महीयसीम् ।
आशां सेवाप्रणयिनीं कुलोन्नत इवेश्वरः ॥ ६१९ ॥
न कश्यपार्पितभुवो निवासोऽयं ममोचितः ।
महेन्द्रशैलं गच्छामि तूर्णं गगनवर्त्मना ॥ ६२० ॥
शरेण जहि मे लोकानमोघो ह्येष दुर्जयः ।
प्रभाव इव मूर्तस्ते न क्वचित्प्रतिहन्यते ॥ ६२१ ॥
धनुषोऽस्य निजं नाथं जाने त्वां विष्णुमच्युतम् ।
नीता मधुमुखा येन दैत्याः क्रोधोपहारताम् ॥ ६२२ ॥
इच्छामात्रेण जगतां प्रलयोदयकारिणा ।
न मे त्वया जितस्यापि लज्जाधूसरमाननम् ॥ ६२३ ॥
इत्युक्ते जामदग्न्येन शरं चिक्षेप राघवः ।
मधुमास इवाशेषा यश्चक्रे विशदा दिशः ॥ ६२४ ॥
ततः प्रदक्षिणीकृत्य रामं भृगुसुते गते ।
हस्ते वारिपते न्यस्ते राघवेण शरासने ॥ ६२५ ॥
हर्षव्याकोशमनसः सेना दशरथस्य सा ।
ससर्प पवनोद्धूतध्वजपट्टाट्टहासिनी ॥ ६२६ ॥

इति रामरामसमागमः ॥ १३ ॥

ततो महोत्सवोत्साहप्रमोदालिङ्गिताङ्गनाम् ।
प्रविवेश पुरीं भूरिभूषां भूमिपुरंदरः ॥ ६२७ ॥

तत्र त्रिभुवनश्लाघ्यलावण्यललिताननाम्।
स्त्रियोऽपि जानकीं वीक्ष्य ययुरुत्कण्ठतामिव ॥ १२८ ॥
कौसल्याद्यास्ततो देव्यः पुत्रान्वीक्ष्य वधूसखान्।
मूर्तिमद्भिरिवानन्दैर्मङ्गलैरुदिता बभुः ॥ १२९ ॥
सेयं सीता शशिमुखी रामोऽयं कमलेक्षणः।
इत्यभूत्कौतुकोदारः सर्वत्र जननिःस्वनः ॥ १३० ॥

इत्ययोध्याप्रत्यागमनम् ॥ १४ ॥

अथ रामस्य संभोगसुभगोऽभिनवोऽभवत्।
मैथिलीवदनाम्भोजमधुपस्य [1]रसोद्भवः ॥ १३१ ॥
तयोर्मनोरथरथः प्रणयोदारसारथिः।
प्रेमोपदिष्टेन पथा विवेश हृदयं स्मरः ॥ १३२ ॥
नवं वयो वपुः कान्तं प्रेम प्रौढं तयोर्ययौ।
संपूर्णगुणसाम्राज्ये [2]रामस्यैकातपत्रताम् ॥ १३३ ॥
केलिक्लान्तं वपुस्तन्व्याः पीतोच्छिष्टाधरं मुखम्।
स्वेदोन्मृष्टं च तिलकं रामो मेने नवं नवम् ॥ १३४ ॥
ततो मातामहपुरं भरतः पितुराज्ञया।
शत्रुघ्नानुगतः प्रायन्मातुलेनाभि[3]याचितः ॥ १३५ ॥
स तत्र गुणरत्नानां महोदधिरिवापरः।
जग्राह सकलां विद्यां गुरुभ्यो विमलाशयः ॥ १३६ ॥
सच्छास्त्राभिगमात्तस्य धर्मसंक्रान्तिदर्पणम्।
मनो बभूव विशदं मार्जितं सुकृतैरिव ॥ १३७ ॥
भरते सानुजे राज्ञः कैकेयस्य पुरे स्थिते।
उत्कण्ठाकुलितो भेजे चिन्तां दशरथो नृपः ॥ १३८ ॥
रामः सर्वगुणग्रामरमणीयोऽधिकं पितुः।
हृदयोद्गीतचरितः प्रजानामभवत्प्रियः ॥ १३९ ॥

---

१. 'रतोत्सवः' शोधित०. २. 'जगत्ये' शोधित०. ३. 'पूजितः' शारदा०.

वाणी सत्यसुधाधौता विवेकाभरणं मनः ।
प्रसादमधुरा दृष्टिः सत्त्वस्तबकिता मतिः ॥ १४० ॥
विनयानर्घ्यमाणिक्यमुकुटालंकृतं शिरः ।
श्रवणासक्तशास्त्रार्थमण्डलोज्वलमाननम् ॥ १४१ ॥
त्रैलोक्यरक्षाकेयूरलक्षणो दक्षिणो भुजः ।
सव्यः सीतापरिष्वङ्गसंगतानङ्गमङ्गलः ॥ १४२ ॥
करस्त्यागाङ्गदोदारः कीर्तिप्रणयिनी तनुः ।
यशस्तिलकिता लक्ष्मीस्तस्याभूद्गुणशालिनः ॥ १४३ ॥
स सदा धृतिसंपन्नां सर्वभूतभवक्षयाम् ।
क्षमामुवाह मनसा मूर्ध्ना शेष इव क्षमाम् ॥ १४४ ॥
तं समग्रगुणोदारं प्रजाप्रियहिते रतम् ।
यौवराज्याभिषेकार्हममन्यत महीपतिः ॥ १४५ ॥
रामाभिषेकानुमतं पृष्ठाः संसदि तेन ते ।
ब्राह्मणा मन्त्रिणो भूपाः पौराद्याश्च बभाषिरे ॥ १४६ ॥
क्रियतामीप्सितं राजन्यत्ते मनसि वर्तते ।
रामोऽर्हत्यखिलां धर्तुं क्ष्मामनन्तगुणो विभुः ॥ १४७ ॥
सुकृताप्तगुणौघेन गुणोपार्जितकीर्तिना ।
कीर्तिरञ्जितलोकेन राघवेण विभाति भूः ॥ १४८ ॥
इति तेषां वचः श्रुत्वा प्रहृष्टः पृथिवीपतिः ।
आदिदेशाभिषेकाय संभारं भूरिमङ्गलैः ॥ १४९ ॥
चैत्रे पुष्येन्दुयोगेन कल्पिते विपुलोत्सवे ।
आभिषेचनिकं सर्वं युक्ताः सज्जं प्रचक्रिरे ॥ १५० ॥
सुमन्त्रेण समाहूतस्ततो भूपतिशासनात् ।
रामः प्रविश्य प्रणतो भेजे निर्दिष्टमासनम् ॥ १५१ ॥
तमुवाच नृपो मूर्तं मनोरथमिवात्मजम् ।
मौलौ दन्तांशुभिस्तस्य सितोष्णीषमिवार्पयन् ॥ १५२ ॥

१. 'राजा' शारदा०.

महीयसि मनोर्वंशे सद्वृत्तः सद्गुणोचितः ।
पुत्र मुक्तामणिच्छायो जातस्त्वं भूषणं भुवः ॥ ६५३ ॥
क्रमप्राप्तामिमां वीर महीं पाहि मदाज्ञया ।
तुल्यपुत्रार्पणाः श्लाघ्या रघूणां हि विभूतयः ॥ ६५४ ॥
यज्ञदानतपःशुक्लामस्पृष्टां दोषशीकरैः ।
सत्पुत्रस्कन्धविन्यस्तां धन्याः पश्यन्ति संपदम् ॥ ६५५ ॥
स्वयमामुक्तमुकुटं द्रष्टुमिच्छामि ते मुखम् ।
बिम्बितं स्वमिवादर्शे पुनरासन्नयौवनम् ॥ ६५६ ॥
विपरीतनिमित्तानि दृष्ट्वा मे त्वरते मनः ।
को जानाति भवाम्भोधिबुद्बुदस्यायुषो गतिम् ॥ ६५७ ॥
प्रातस्ते भविता श्रीमानभिषेकमहोत्सवः ।
इत्युक्ते भूभुजा रामस्तथेति नृपमब्रवीत् ॥ ६५८ ॥
पित्रा विसृष्टो गत्वाथ राघवोऽन्तःपुरं निजम् ।
दत्तं स्वयं वसिष्ठेन भेजे व्रतमुपोषितः ॥ ६५९ ॥
प्रयतः सह वैदेह्या पवित्रे कुशसंस्तरे ।
ध्यायन्नारायणं रामस्तस्थौ निशि हुतानलः ॥ ६६० ॥
ततो बभूव पौराणां प्रभातोदयकाङ्क्षिणाम् ।
अभिषेकोत्सवारम्भव्यग्राणां हर्षनिःस्वनः ॥ ६६१ ॥
गजेन्द्रतुरगोदारप्रत्यग्रश्रीविभूषितः ।
प्रत्यासन्नामृतस्याब्धेर्जनोऽभूदुपमाक्षमः ॥ ६६२ ॥

(अथाभिषेकारम्भः ।)

प्रासादादवलोक्याथ पुरं हर्षसमाकुलम् ।
कौमारदासी कैकेय्या मन्थरा विस्मिताभवत् ॥ ६६३ ॥
पप्रच्छ सा समभ्येत्य धात्रीं संजातकौतुका ।
अदृष्टपूर्वः पौराणां किमयं हर्षविप्लवः ॥ ६६४ ॥

१. 'संप्लवः' शारदा०.

कस्मान्महार्थान्विप्रेभ्यो राममाता प्रयच्छति ।
इति धात्री तया पृष्टा स्फुरितेव मुदावदत् ॥ १६५ ॥
रामस्य भविता प्रातर्यौवराज्यमहोत्सवः ।
तच्छ्रुत्वा वज्रभिन्नेव दुःखिता मन्थरा ययौ ॥ १६६ ॥
शैशवे किल रामेण पुरा प्रणयकोपतः ।
चरणेनाहता तत्र चिरं कोपमुवाह सा ॥ १६७ ॥
निर्विशन्ती विषापूर्णभुजङ्गीव विभीषणा ।
कैकेयीमन्दिरं प्रायात्कुब्जा कुटिलचारिणी ॥ १६८ ॥
विबोध्य शयनासक्तां कैकेयीं सा समभ्यधात् ।
कोपावेगसमुत्सृष्टगौरवव्याकुलाक्षरम् ॥ १६९ ॥
उत्तिष्ठ मूढहृदये कोऽयं निद्रादरस्तव ।
अथ वा निर्विवेकानां दुःखं विशति नान्तरम् ॥ १७० ॥
अहो बतासि निःशल्या क्षीबेव प्राकृताङ्गना ।
दूरं प्रपातपतितं नात्मानमवबुध्यसे ॥ १७१ ॥
सपत्नीसंगमे धृत्वा सौभाग्याभरणोद्धतम् ।
अधुना वह दौर्भाग्यलज्जाविनतमाननम् ॥ १७२ ॥
मन्थराया वचः श्रुत्वा कैकेयी चकिता भृशम् ।
किंस्वित्ते कुशलं पत्युरिति पप्रच्छ तां पुनः ॥ १७३ ॥
साब्रवीत्किं न जानीषे भयं महदुपस्थितम् ।
रामस्य भविता प्रातर्यौवराज्यमहोत्सवः ॥ १७४ ॥
अहो नु कुटिलाचारः पतिर्दशरथस्तव ।
कण्ठबद्धशिला यस्त्वां जलधौ क्षेप्तुमुद्यतः ॥ १७५ ॥
सा त्वं भूपालमहिषी भूमिपालसुता सती ।
पुत्रराज्योर्जितां पश्य कौसल्यां प्रेमकारिणीम् ॥ १७६ ॥
सुभगे केवलैर्वाक्यैर्लालितासि महीभुजा ।
फलेन योजिता त्वद्य कौसल्या पुण्यभागिनी ॥ १७७ ॥

त्वद्दंशे राज्यविच्छेदमद्यैव निधनं वरम् ।
न तत्तुल्यं नृपद्वारे दर्शनावसरे क्षणम् ॥ ६७८ ॥
धिक्त्वेदं वृथारूपं गुणसौभाग्यवर्जितम् ।
हैमीव पुत्रिका पत्युर्मन्ये त्वं नाम वल्लभा ॥ ६७९ ॥
कौसल्यातनयो राजा दासश्च भरतोऽधुना ।
श्रुत्वेति हृदयं किं ते दीर्यते न सहस्रधा ॥ ६८० ॥
मन्थराया वचः श्रुत्वा कैकेयी हर्षनिर्भरा ।
उवाच हेमाभरणं दत्त्वास्यै पारितोषकम् ॥ ६८१ ॥
दिष्ट्याभिषेको रामस्य श्रूयते गुणशालिनः ।
स मे बहुमतः पुत्रो मन्थरे भरताधिकः ॥ ६८२ ॥
इति ब्रुवाणां कैकेयीं मन्थरा कोपकम्पिता ।
उत्सृज्याभरणं दूरे निःश्वस्योवाच दुःखिता ॥ ६८३ ॥
कथं विषादावसरे नृत्यस्युन्मादिनी यथा ।
प्रत्यासन्नविनाशानां प्राङ्नश्यन्त्यथ वा धियः ॥ ६८४ ॥
प्रभावः कुलमैश्वर्यं शक्तिः कीर्तिश्च शाश्वती ।
नश्यत्येकपदे यस्य क्षयस्तस्य महोत्सवः ॥ ६८५ ॥
शोच्या न शोचसि व्यक्तं मूढे दैवविमोहिता ।
अभ्रपात इव प्रातर्भविता तस्य दुःसहः ॥ ६८६ ॥
चित्रं स्निग्धासि रामेऽपि परपुत्रकवत्सला ।
हरिणो जननीं वेत्ति न हि व्याघ्रो मृगाशनः ॥ ६८७ ॥
रक्षणीयोऽधुना तावद्भरतो रामविक्रमात् ।
राज्यमेतावदेवास्य यद्रूढं न निपात्यते ॥ ६८८ ॥
श्रुतवत्यसि यश्चक्रे बहुमायः पुरंदरः ।
भ्रातॄणां दितिपुत्राणां नागानां वा खगेश्वरः ॥ ६८९ ॥
वक्रं श्रुत्वेति कुब्जाया वचनं हृदयोपमम् ।
चक्रे रामस्य कैकेयी गुणश्लाघां पुनः पुनः ॥ ६९० ॥

ततः शनैश्चरैस्तस्या वाक्यैः सा कलुषाभवत्।
मानसं दूषयत्येव घोरं हि खलवाग्विषम्॥ ६९१॥
कालकूटप्रकारोऽयमपरः खलसंगमः।
विकारः क्रियते येन क्षिप्रं सत्त्ववतामपि॥ ६९२॥
कैकेयी लोभशङ्कोत्थैः स्पृष्टा किल्बिषशीकरैः।
किं करोमीति पप्रच्छ मन्थरां शङ्किताशया॥ ६९३॥
साब्रवीद्देवि याचस्व पत्युः कोपपराङ्मुखी।
भरतस्याभिषेकं च रामस्य च विवासनम्॥ ६९४॥
चतुर्दश समा रामो वनं यातु पितुर्गिरा।
सुचिरं बद्धमूलश्च लभतां भरतः श्रियम्॥ ६९५॥
पुरा देवासुरयुधि शम्भरेण शतक्रतोः।
स्वपुरे वैजयन्ताख्ये घोरः सैन्यक्षयः कृतः॥ ६९६॥
राजा दशरथस्तत्र यातः शक्रसहायताम्।
शस्त्रक्षततनुर्विद्याबलात्संरक्षितस्त्वया॥ ६९७॥
कृतज्ञेन वरौ तेन दत्तौ ते प्रीतिशालिना।
न्यासीकृतौ त्वया तौ च तस्मिन्नेव निजेच्छया॥ ६९८॥
कुरु प्रणयिनी पत्युस्तूर्णमेव तदर्थनाम्।
सुतस्त्वेकेन ते राजा रामोऽन्येन वनेचरः॥ ६९९॥
प्रकोपाबद्धमौनायाः सबाष्पायितचक्षुषः।
करिष्यति न चावज्ञां प्रणयी तव वल्लभः॥ ७००॥
एतदाकर्ण्य कैकेयी भेजे मुखसुखं क्षणात्।
पश्चात्तापफलं हर्षं गुडदिग्धविषोपमम्॥ ७०१॥
प्रायेण मुग्धहृदयाः शिशवो भूमिपाः स्त्रियः।
ह्रियन्ते लुब्धकैर्नीचैः कुरङ्गा इव कानने॥ ७०२॥
कैकेय्या ब्राह्मणः पूर्वं मूर्खो बाल्ये विडम्बितः।
तच्छापाद्भवत्तस्या मतिः कीर्तिपराङ्मुखी॥ ७०३॥

१. 'युत' शोधितम्; 'यत' स्यात्.

सा मन्थरां परिष्वज्य दत्त्वास्यै हेमकुण्डले ।
मेने मतिमतां श्रेष्ठां बृहस्पतिवधूमिव ॥ ७०४ ॥
विरूपमपि सा तस्याः प्रशशंस मुहुर्वपुः ।
निन्द्येन गुणसंपत्तिं पश्यन्ति हि वशीकृताः ॥ ७०५ ॥
सा ययौ तद्गिरा तूर्णं कोपागारं वरार्थिनी ।
सर्वथा खलवाक्येषु स्त्रियो मूर्खाश्च सादराः ॥ ७०६ ॥
वियुक्तमाल्याभरणा विचेष्टन्ती महीतले ।
सा तस्थौ म्लानवसना व्याप्तेवायशसा क्षणात् ॥ ७०७ ॥

इति मन्थरावाक्यम् ॥ १६ ॥

अत्रान्तरे नरपतिर्दयितादर्शनोत्सुकः ।
प्रविश्यान्तःपुरं कान्तां नापश्यच्चारुलोचनाम् ॥ ७०८ ॥
स च्छत्रधारिणीवाचा ज्ञात्वा कोपगृहे स्थिताम् ।
चकितस्तूर्णमभ्येत्य ददर्श त्यक्तभूषणाम् ॥ ७०९ ॥
तां ग्रीष्ममारुतग्रस्तकुसुमामिव मञ्जरीम् ।
दृष्ट्वा न लेभे भूपालभ्रमरः स्रस्तधीर्धृतिम् ॥ ७१० ॥
सापि क्ष्मापालमालोक्य जग्राहाभ्यधिकां रुषम् ।
प्रायः प्रागल्भ्यमायान्ति तरुण्यः स्थविरे वरे ॥ ७११ ॥
सोऽब्रवीद्देवि कोऽयं ते प्रौढः कोपपरिग्रहः ।
नाभिनन्दति येनेदं भूषणं मामिवाग्रतः ॥ ७१२ ॥
प्रिये ब्रूहि प्रवृद्धस्य प्रकोपस्यास्य कारणम् ।
सत्यमात्मापि मे वध्यस्त्वत्कोपे हेतुतां गतः ॥ ७१३ ॥
दयिते मौनमुत्सृज्य प्रसादस्मितपुष्पिता ।
लतेव मधुरालापैः किर कर्णरसायनम् ॥ ७१४ ॥
उच्यतां क्रियते कोऽद्य निवृत्तविभवः क्षणात् ।
धवलोष्णीषहासिन्यास्तूर्णं वा भाजनं श्रियः ॥ ७१५ ॥

---

१. 'प्रकोपः प्रभुतां गतः' शारदा०.

प्रसीद वद किं देवि करवाणि तवेप्सितम् ।
त्रैलोक्यदुर्लभं नास्ति मयि प्रणयशालिनी[1] ॥ ७१६ ॥
इत्युक्ते नरनाथेन कैकेयी प्रत्यभाषत ।
चिन्तासंतप्तनिःश्वासधूसराधरपल्लवा ॥ ७१७ ॥
पुरा मे ब्राह्मणो विद्यां प्रसादाभिमुखो ददौ ।
यया देवासुररणे मया संरक्षितो भवान् ॥ ७१८ ॥
तत्संतोषाद्वरौ मह्यं प्रवरौ दत्तवानसि ।
यौ मया त्वयि निक्षिप्तौ तावेवाद्य प्रयच्छ मे ॥ ७१९ ॥
इति श्रुत्वैव कैकेय्या सस्मितः सोत्सुको नृपः ।
करेणोन्नम्य वदनं वक्तुं समुपचक्रमे ॥ ७२० ॥
एतावतैव दयिते कोऽयं ते कोपविभ्रमः ।
स्वाधीनौ ते वरौ सुभ्रु कर्तव्यमभिधीयताम् ॥ ७२१ ॥
यदिच्छसि तदाद्यैव ददानि सुभगे तव ।
जीवितेनापरेणेव रामेणापि स्फुटं शपे ॥ ७२२ ॥
इत्युक्ते भूभुजा स्पष्टं कैकेयी कुटिलावदत् ।
राज्ञः सत्यप्रतिज्ञस्य वचः शृण्वन्तु देवताः ॥ ७२३ ॥
वरेणैकेन नृपतेश्चीराजिनजटाधरः ।
चतुर्दश समा रामः प्रयातु विजनं वनम् ॥ ७२४ ॥
अपरेण वरेणाद्य यौवराज्यं ममात्मजः ।
लभतां भरतः श्रीमानित्युक्त्वा विरराम सा ॥ ७२५ ॥
ततो नरपतिर्मूर्ध्नि वज्रेणेव समाहतः ।
किमेतदिति नाज्ञासीच्चक्रारूढ इव क्षणम् ॥ ७२६ ॥
स पपात क्षितितले कृत्तमूल इव द्रुमः ।
अङ्के धृत इवोर्वर्या मूर्छितो वसुधाधिपः ॥ ७२७ ॥
पौरुषप्रतिरोधिन्यस्तर्जन्यः सर्वसंपदाम् ।
सकला विपदस्तत्र प्रभुत्वं यत्र योषिताम् ॥ ७२८ ॥

---

१. 'शालिनि' स्यात्.

फलं व्यसनवृक्षस्य विनाशविषशाखिनः ।
अयशः पथि रूढस्य मनो योषित्सु सादरम् ॥ ७२९ ॥
गण्यन्ते पुरुषास्तावद्यावन्नायान्ति वश्यताम् ।
धैर्यध्वंसपताकासु भ्रूभङ्गाज्ञासु योषिताम् ॥ ७३० ॥
स समाश्वास्य शनकैर्मेने कैकेयजां पुनः ।
लतां मलयजस्येव करालव्यालमालिताम् ॥ ७३१ ॥
तामुवाच रुषाक्रान्तः श्वसन्नाग इवाहतः ।
उल्केयं वदनात्कस्मादकस्मान्निर्गता इव ॥ ७३२ ॥
अहो बत भुजङ्गी त्वं घोरहालाहलेक्षणा ।
सेविता प्रीतिलुब्धेन मुग्धेन सततं मया ॥ ७३३ ॥
रामः शुभ्रैर्गुणगणैः सर्वलोकस्य संमतः ।
पङ्कजिन्या इव शशी कथं ते द्वेष्यतां गतः ॥ ७३४ ॥
बत प्रत्यग्रपापेयं मतिस्तव समुद्यता ।
मां शोकव्यालकलिते क्षेप्तुं मोहरसातले ॥ ७३५ ॥
प्रियं सर्वव्यवस्थासु जीवलोकप्रकाशकम् ।
त्यजामि सुकृतावासं जीवितं कथमात्मजम् ॥ ७३६ ॥
गुणाभरणमम्लानयशःपीयूषसागरम् ।
परित्यक्तुं न शक्तोऽस्मि रामं राजीवलोचनम् ॥ ७३७ ॥
रामं त्यजेत्यनुचितं जीवितक्रकचं वचः ।
कथं नाम सहे हेलाक्षतवृत्तगुणं तव ॥ ७३८ ॥
प्रसीद चरणानम्रशिरसः कुरु मे गिरम् ।
पश्य राममवामेन चक्षुषा भरतं यथा ॥ ७३९ ॥
इत्युक्तेऽपि सकृद्भार्या दुर्ग्रहान्न चचाल सा ।
दैवप्रेरितचित्तानां वचोभिः का प्रतिक्रिया ॥ ७४० ॥
साब्रवीत्सत्यसंधस्य कृतज्ञस्य महीपतेः ।
तव दत्तापहरणं जृम्भतामयशश्चिरम् ॥ ७४१ ॥

रथ्यावस्करमार्जन्य इव पङ्ककलङ्किताः।
असत्यचपला वाचो न भवन्ति भवादृशाम् ॥ ७४२ ॥
पुना राज्योद्धुरां तावत्कौसल्यां न सहे विभो।
त्वत्तिरस्कारदुःखेऽस्मिन्भेषजं मे विषाशनम् ॥ ७४३ ॥
स्वं दत्तं शिबिना मांसमलर्केनेक्षणद्वयम्।
सत्यं सत्यप्रतिज्ञानां नानुतापः प्रतिश्रुते ॥ ७४४ ॥
अहं प्राणपणेनापि त्वत्तः प्राप्य वरद्वयम्।
रामप्रवासनिःशल्यां करोमि भरतश्रियम् ॥ ७४५ ॥
सर्वथा स्वस्ति यशसे राजन्नित्ययमञ्जलिः।
कृतो धर्मोऽस्त्वधर्मो वा निश्चयो मम नान्यथा ॥ ७४६ ॥
इत्युक्त्वा साभवत्तप्तनिःश्वासैर्धूसरद्युतिः।
ब्रह्मशापाग्निधूमेन स्पृष्टेव मलिनानना ॥ ७४७ ॥
विलोक्य निश्चलां राजा प्रियामप्रियभाषिणीम्।
हा रामेति वदन्साधुः पपात भुवि मूर्छितः ॥ ७४८ ॥
स तामुवाच निःश्वस्य संमोहोपहतप्रभः।
आकृष्टः सत्यशापेन पुत्रस्नेहेन चाभितः ॥ ७४९ ॥
नूनं भूताभिभूतासि क्षिप्ता कालेन वा मयि।
कुतोऽन्यथा तवाप्येष सदाचारविपर्ययः ॥ ७५० ॥
नृशंसाः पापसंकल्पाः संश्रुतपरिपन्थिनः।
परप्राणापहारेण वाञ्छन्त्येवात्मनः श्रियम् ॥ ७५१ ॥
भक्ताया मम निर्दोषः पुत्रो राज्ञा विवासितः।
इति ब्रुवाणां कौसल्यां किं वक्ष्यामि गतत्रपः ॥ ७५२ ॥
वृद्धेन रागिणा राज्ञा निरस्तो गुणवान्सुतः।
इति लोके कथं श्रोष्याम्ययशोवर्धिनीर्गिरम् ॥ ७५३ ॥
नूनं त्वं निर्मिता धात्रा किल्बिषैरेव केवलैः।
तव यन्नास्ति हृदये दारुणे करुणाकणः ॥ ७५४ ॥

व्यक्तमन्त्रविषैर्मिथ्यामधुरैः प्रणयैरहम् ।
त्वयोपचरितः पापे येषां पाकोऽयमीदृशः ॥ ७५५ ॥
अहो बताहमाकृष्टः कान्तारूपेण मृत्युना ।
दुःखहालाहलोग्रेण सत्यशापमहाहिना ॥ ७५६ ॥
धिक्कृता सर्वलोके नु शापपापकलङ्किता ।
अकीर्तिरिव मे मूर्ता बत यातासि शोच्यताम् ॥ ७५७ ॥
याते रामे गते धैर्ये हते मयि भृशं शुचा ।
राज्यविस्मृतवैधव्या भव पूर्णमनोरथा ॥ ७५८ ॥
इति प्रलपतस्तस्य नक्षत्राश्रुकणाकुला ।
शशिशुभ्रा ययौ रात्रिः शोकेनेवातिपाण्डुरा ॥ ७५९ ॥
निशेयं क्षीयतां दीर्घा मा च मेऽस्तु दिनोदयः ।
इति शोकाकुलो राजा चिन्तयन्न ययौ धृतिम् ॥ ७६० ॥

इति वरयाचनम् ॥ १७ ॥

अस्मिन्नवसरे रामः सूतमागधबन्दिनाम् ।
शृण्वन्गुणगणोदारा यशःकुसुमिता गिरः ॥ ७६१ ॥
मनःशुद्धिरतो देवं स्मरन्विष्णुं वधूसखः ।
शशीव रोहिणीयोगे विबभौ विमलाम्बरः ॥ ७६२ ॥
रत्नांशुपल्लवोदारश्छत्रचामरपुष्पितः ।
हर्षस्फीतफलो लोके बभूवोत्सवपादपः ॥ ७६३ ॥
सुकल्पिते वसिष्ठाद्यैरभिषेकविधौ[1] क्रमात् ।
सुमन्त्रोऽन्तःपुरद्वारं ययौ तूर्णं महीपतेः ॥ ७६४ ॥
सुखसुप्तं नृपं ज्ञात्वा प्रविश्य निभृतं शनैः ।
विबुधस्तत्प्रबोधाय मधुरां गिरमादधे ॥ ७६५ ॥
रवेरिवोदयं देव प्रतीक्ष्यन्ते प्रजास्तव ।
राघवस्याभिषेकार्हः पुष्य[2]योगोऽतिवर्तते ॥ ७६६ ॥

१. 'रभिषेचनिके विधौ' शोधितः पाठः. २. 'पुण्य' शारदा०.

मूर्ध्नि श्रीमानयं धत्ते भास्वानुदयभूभृतः ।
पूर्वदिक्कामिनीन्यस्तहैममङ्गलकुम्भताम् ॥ ७६७ ॥
एताः कुङ्कुमपङ्केन समुत्सृष्टा इवाखिलाः ।
सूर्योदयोत्सवे देव भान्ति पीताम्बरा दिशः ॥ ७६८ ॥
उत्तिष्ठ पृथिवीपाल सत्पुत्रमणिदर्पणे ।
संक्रान्तां सुकृतोदारां पश्य कीर्त्युज्ज्वलां श्रियम् ॥ ७६९ ॥
सज्जोऽयं विपुलारम्भः संभारो मङ्गलोचितः ।
त्वद्दर्शनसुधासारप्रतीक्षान्तरितोत्सवः ॥ ७७० ॥
प्रणतानन्तसामन्तमौलिरत्नारुणप्रभाम् ।
सभां संभावय विभो स्वप्रभामिव भास्करः ॥ ७७१ ॥
इति वादिनमज्ञातवृत्तं वृत्तपरिच्युता ।
शनैरुवाच कैकेयी सुमन्त्रं गाढमत्सरा ॥ ७७२ ॥
पुत्रोत्सवनवोत्कण्ठहर्षावासप्रजागरः ।
अयं सत्यधनो राजा नाद्यापि प्रतिबुध्यते ॥ ७७३ ॥
गच्छ राममिहैवास्य पुत्रं संमतमानय ।
उक्त्वेति देवी सासूयं क्षितिपालमुदैक्षत ॥ ७७४ ॥
विभ्रष्टविद्यापतितो विद्याधर इवाम्बरात् ।
विवर्णवदनो राजा शशीव दिनधूसरः ॥ ७७५ ॥
उवाच निःश्वसन्दीर्घं जायासमययन्त्रितः ।
करीन्द्रः करिणीयुक्त इव पाशवशीकृतः ॥ ७७६ ॥
किं नाम सुप्तं पतितं सुमन्त्र समुदीक्षसे ।
राम सूर्योदये यस्य रात्रिरक्षयतां गता ॥ ७७७ ॥
मां सत्यसमयाख्येन कालपाशेन वेष्टितम् ।
गृहीतं पश्य बलिना जायारूपेण लक्ष्मणा ॥ ७७८ ॥
श्रुत्वेति राजवचनं शरेणेव विदारितः ।
अपहृत्य सुमन्त्रोऽभूत्क्षणमुद्भ्रान्तमानसः ॥ ७७९ ॥

१. 'सत्य' शोधितः पाठः.

निर्बन्धात्परुषैर्वाक्यैः कैकेय्या पुनरुक्तितः ।
उवाच विह्वलो राजा सुमन्त्रं मोहमूर्छितः ॥ ७८० ॥
न सुप्तोऽस्मि महामात्य निद्रा शोकवतां कुतः ।
वह्निश्चरं जीवितं मे गच्छ राममिहानय ॥ ७८१ ॥
इत्यादिष्टो नृपतिना रथेन जवशालिना ।
सुमन्त्रः प्रययौ तूर्णं संशयाकुलिताशयः ॥ ७८२ ॥
अभिषेकोत्सवोत्कण्ठाकुले सज्जनवर्त्मनि ।
व्रजन्रामस्य शुश्राव गुणालंकरणं यशः ॥ ७८३ ॥
स राममन्दिरं प्राप्य मेरुकन्दरसुन्दरम् ।
हेमहर्म्योद्गतोत्तुङ्गप्रभापिञ्जीकृताम्बरम् ॥ ७८४ ॥
सेवाप्तानन्तसामन्तसमागमनिरन्तरः ।
शनैः कक्ष्याः समुत्तीर्य प्रापान्तःपुरमान्तरम् ॥ ७८५ ॥
प्रविश्यावेदितः सोऽथ ददर्श रघुनन्दनम् ।
सीताकराञ्चितस्मेरचामरोच्छ्वासितांशुकम् ॥ ७८६ ॥
वक्षसा चन्दनार्द्रेण स्फारिहाराट्टहासिना ।
विराजितं निर्झरिणा तटेनेव हराचलम् ॥ ७८७ ॥
विस्फारिधीरललितामाताम्ररुचिरां दृशम् ।
लक्ष्मीविलासहंसितं(?) सृजन्तं पद्मिनीमिव ॥ ७८८ ॥
गुणालंकृतचारित्रं सत्त्वालंकृतमानसम् ।
विनयालंकृतैश्वर्यं दृष्ट्वालंकरणं भुवः ॥ ७८९ ॥
प्रणम्योवाच विनतं हर्षार्हावाप्तसत्कृतिः ।
सुमन्त्रस्तद्गुणानन्दपुलकालंकृताननः ॥ ७९० ॥
धन्या ते जननी राम कौसल्या पुत्रमानिनी ।
अदितेरपि या शङ्के शक्रमातुः स्पृहास्पदम् ॥ ७९१ ॥
देवो दशरथस्तूर्णं कैकेय्या सह मन्दिरे ।
स्थितः स्थितिमतामग्र्यं भवन्तं द्रष्टुमर्हति ॥ ७९२ ॥

१. 'वसतिं' ख.

श्रुत्वैतत्प्रतिगृह्याशु शिरसा शासनं गुरोः ।
जगाम रामो विपुलः शृण्वन्पौरजनाशिषः ॥ ७९३ ॥
रथेन घनघोषेण गृहोद्यानशिखण्डिनाम् ।
स व्रजन्विदधे क्षिप्रं ताण्डवाडम्बरोत्सवम् ॥ ७९४ ॥
स्फारालंकाररत्नाग्रबिम्बितासंख्यसैनिकः ।
विश्वाकृतिरिवोपेन्द्रः शुशुभे ससुदर्शनः ॥ ७९५ ॥
स भूषणारुणमणिप्रभावलयितो बभौ ।
साक्षाज्जनानुरागेण कृतास्पद इवाबभौ ॥ ७९६ ॥
सादराः सुरसुन्दर्य इव पौरवराङ्गनाः ।
पुष्पाणि ववृषुस्तस्मै वातायनविमानगाः ॥ ७९७ ॥
तस्य लक्ष्मणहस्ताग्रसक्तचामरमारुतैः ।
ययौ कपोलकर्पूररजोव्याजैर्दिशो यशः ॥ ७९८ ॥
धनदोऽयं स यक्षेन्द्रः स विष्णुरयमच्युतः ।
अयं कामः स चानङ्ग इत्यूचुः पौरयोषितः ॥ ७९९ ॥
तासां कटाक्षविक्षेपवलयोत्पलधामभिः ।
क्षणं बभूव रामस्य मायूरच्छत्रविभ्रमम् ॥ ८०० ॥
पितुरन्तःपुरं प्राप्य वृद्धकञ्चुकिरक्षितम् ।
पातालमिव रोचिष्णुरत्नांशुकपिशोदरम् ॥ ८०१ ॥
प्रविश्यालोक्य पितरं प्रणनाम सलक्ष्मणः ।
लिम्पन्निवास्य चरणौ चारुचूडामणित्विषा ॥ ८०२ ॥
ततः प्रणम्य कैकेयीं चिन्तानलसमुत्थितैः ।
धूमैरिवागतच्छायं ददर्श वसुधाधिपम् ॥ ८०३ ॥
रामं विलोक्य नृपतिर्बाष्पाविलविलोचनः ।
पुत्रेत्युक्त्वा परं वक्तुं न शशाक ह्रिया नतः ॥ ८०४ ॥
तां वीक्ष्य विक्रियां राज्ञो विसंज्ञ इव राघवः ।
किमेतदिति संभ्रान्तश्चिन्तासंतापमाययौ ॥ ८०५ ॥

सोऽब्रवीज्जननीं नम्रः कैकेयीं रचिताञ्जलिः ।
मातः कुतोऽयं नृपतेर्गम्भीरः खेदविप्लवः ॥ ८०६ ॥
वयमाज्ञाप्रणयिनः प्रतिकूलेषु का कथा ।
निःसपत्नश्च विभवः खेदकारणमुच्यताम् ॥ ८०७ ॥
विनापराधं कुपितो यद्यपुण्यैर्मयि प्रभुः ।
तत्प्रसादय मातस्त्वं ममैनं सुतवत्सला ॥ ८०८ ॥
राघवेनेत्यभिहिते कैकेयी सादरावदत् ।
न विषण्णो नरपतिः कोपसंभावना कुतः ॥ ८०९ ॥
किं त्वेष मे प्रतिश्रुत्य कृतज्ञः प्रवरौ वरौ ।
वाच्यतामनुतापेन प्रयातः सत्यलोभयोः ॥ ८१० ॥
अधुनास्य त्वदायत्तं सत्यवल्लीफलं यशः ।
अयशो वा मृषावादात्साधुधिक्कारकर्बुरम् ॥ ८११ ॥
श्रुत्वैतद्विगताशङ्कः समुच्छ्वसितमानसः ।
उवाच रामः कैकेयीमौचित्यामृतसागरः ॥ ८१२ ॥
अहो बत गुरोः कार्ये मदायत्तेऽपि संशयः ।
निजालोकपरिच्छेद्ये रवेरिव तमःक्षये ॥ ८१३ ॥
अहं हि शासनादस्य प्रलयानिलवर्तिनम् ।
विशामि दहनं दीप्तं घोरं वा मकराननम् ॥ ८१४ ॥
इति वादिनमम्लानं सत्त्वसंपूर्णमानसम् ।
हृष्टा जगाद कैकेयी रामं कीर्तिपराङ्मुखी ॥ ८१५ ॥
देवासुररणे पूर्वं मयायं रक्षितो नृपः ।
विततार वरौ तौ च सुचिरादद्य याचितौ ॥ ८१६ ॥
चतुर्दश समा राम तवारण्ये विवासनम् ।
अद्यैव यौवराज्ये च भरतस्याभिषेचनम् ॥ ८१७ ॥
अधुनैव भवान्यातु जटाचीरधरो वनम् ।
व्रज मुञ्च महीपालं सत्यशापपरिग्रहात् ॥ ८१८ ॥

---

१. 'यशो' शारदा०. २. 'भाजनम्' ख.

श्रुत्वेति मातुर्वचनं रामः प्रहसिताननः।
जगाद दर्शयन्दन्तकान्त्या सत्त्वमिवोज्ज्वलम् ॥ ८१९ ॥
एषोऽस्मि सज्जो विजनं वनं गन्तुमविक्रियः।
अविचार्यैव रामस्य कार्यं किं गुरुशासनम् ॥ ८२० ॥
एकैव महती चिन्ता ममेयं ज्वलते हृदि।
यन्मां कृतागसमिव स्वयं नाभाषते नृपः ॥ ८२१ ॥
बाष्पदुर्दिनसंसिक्तां क्षितिपः क्ष्मां विलोकयन्।
करोति मम मौनेन शोकोत्कीर्णान्तरं मनः ॥ ८२२ ॥
भरतो मातुलगृहाद्दूतैर्जवनशालिभिः।
अभिषेकाय संभारे तूर्णमानीयतामितः ॥ ८२३ ॥
इति ब्रुवाणं कैकेयी रामं सत्यसुधानिधिम्।
अद्यैव गम्यतां तूर्णमित्युवाच पुनःपुनः ॥ ८२४ ॥
स सत्यसंकल्पहयं महोत्साहजवं क्षणात्।
आरूढः सत्त्वधवलं गन्तुं निश्चयमादधे ॥ ८२५ ॥
ततः सवेगबाष्पस्य निःसंज्ञस्य महीपतेः।
निपीड्य चरणौ रामो निर्ययौ यशसां निधिः ॥ ८२६ ॥
वनवासाहितधिया कोपसंरब्धचक्षुषा।
स लक्ष्मणेन सहितः कौसल्यामन्दिरं ययौ ॥ ८२७ ॥
अभिषेकोत्सुका तत्रदेवताराधनव्रता।
रामेणावेदितं श्रुत्वा तद्वृत्तान्तं मुमोह सा ॥ ८२८ ॥
प्रतिलभ्य ततः संज्ञां विललापाश्रुगद्गदा।
चक्रभ्रान्तिपरावृत्तिं वदन्ती सुखदुःखयोः ॥ ८२९ ॥
अहो बत जगत्यस्मिन्वन्ध्या धन्यतराः स्त्रियः।
याः स्वप्नेऽपि न जानन्ति पुत्रस्नेहविषव्यथाम् ॥ ८३० ॥
पूर्णपुण्यगुणप्राप्तः पुत्रलाभः सुधायते।
तदेति तद्वियोगोग्रकालकूटच्छटा न चेत् ॥ ८३१ ॥

वरं कण्टकिनी जाता जर्जरी विपिने लता ।
न त्वेकवत्सा जननी सर्वदा दुःखभागिनी ॥ ८३२ ॥
रामोऽपि तनयो यस्याः प्रयाति विजनं वनम् ।
सापि जीवति दुःखेन धिक्स्त्रीणां जीवनं दृढम् ॥ ८३३ ॥
रामो गुणगणारामः पुत्रः पित्रा विवासितः ।
माता जीवति तन्मन्ये स्नेहः क्वापि तिरोहितः ॥ ८३४ ॥
निधानं स्नेहसंपत्तिं सुखप्राप्तं तथामृतम् ।
बत मे हतभाग्यायाः कृच्छ्रलब्धं पलायते ॥ ८३५ ॥
इति प्रलापिनीं राजमहिषीं पतितां भुवि ।
आश्वास्य रामो विदधे ससंज्ञां धैर्यसागरः ॥ ८३६ ॥
ततो जगाद सौमित्रिः कोपादागतसाध्वसः ।
कल्पान्तोत्क्रान्तमर्यादः कम्पोद्धूत इवाम्बुधिः ॥ ८३७ ॥
व्यसिनीस्थविरो राजा यदि स्त्रीवश्यतां गतः ।
तदस्माकं किमायातं ये त्यजामः स्वकं पदम् ॥ ८३८ ॥
बलिनोऽपि धिया हीना मत्तप्राया नृपद्विपाः ।
करिणीनामिव स्त्रीणां वश्या यान्ति पराभवम् ॥ ८३९ ॥
भरतेन प्रयुक्तोऽयं यदि वक्रो नयक्रमः ।
तत्रेदं गुरुतां याति मम वक्रतरं धनुः ॥ ८४० ॥
स्वयं गृहोपयोग्या श्रीः क्रियतां जृम्भतां तव ।
भुजो भार्गवमत्तेभमदकण्डूयनद्रुमः ॥ ८४१ ॥
लक्ष्मणेनेत्यभिहिते ययाचे जननी पुनः ।
वनवासनिषेधाख्यां रामं जीवितदक्षिणाम् ॥ ८४२ ॥
ततः सत्त्वोदधिः स्फीतयशःपरिचितं वचः ।
धर्म्यं समादधे रामः समानं स्वच्छचेतसः ॥ ८४३ ॥
कुले महति जातस्य कार्यं मे शासनं गुरोः ।
चिच्छेद रेणुकाकण्ठं भार्गवः पितुराज्ञया ॥ ८४४ ॥

वात्सल्यविक्लवा मातर्विषादं मा कृथा वृथा ।
वनवासावधौ वृत्ते प्राप्तं द्रक्ष्यसि मां पुनः ॥ ८४५ ॥
लक्ष्मण क्ष्माभृतां धैर्यं गाम्भीर्यं च महोदधेः ।
जाने तव तथाप्येष कोपतप्तोऽभिवीक्ष्यसे ॥ ८४६ ॥
धिक्तान्कुलाधमान्येषु गुरुब्राह्मणशासनात् ।
शठेषु याति शाठ्यत्वं[1] प्रतिषेधविकुण्ठताम् ॥ ८४७ ॥
मनोरथाप्तिः कैकेय्या यथा नृणां तथा पितुः ।
भवत्येव वनं याते मयि पुण्योदयात्परम् ॥ ८४८ ॥
क्रियतां विमलं चेतः कोपः शान्त्या च वार्यताम् ।
औचित्यचारु चरितं सहजं हि महात्मनाम् ॥ ८४९ ॥
तितिक्षा शोभते सत्यवीर्यविक्रमशालिनाम्[2] ।
प्रभविष्णुपदानां[3] च महतामिव संततिः ॥ ८५० ॥
भक्तिर्गुरौ धृतिर्दुःखे क्षमा कोपे दया कृशे ।
एतास्ता यशसः शुभ्राः साम्राज्यविभवस्रजः ॥ ८५१ ॥
क्व सन्तः क्व च दौर्जन्यं क्व गुणाः क्व च वक्रता ।
क्व विवेकः क्व पारुष्यं दूरमेतत्परस्परम् ॥ ८५२ ॥
सौजन्यमनसूया च क्षान्तिर्धैर्यमचापलम् ।
इत्येष विदुषामग्रे गुणमानसमुच्चयः ॥ ८५३ ॥
दैवमेव विजानीहि प्रवासे मम कारणम् ।
न हि पौरुषमत्रास्ति किं वृथा कोपसंभ्रमैः ॥ ८५४ ॥
कुर्वतां यद्विपद्यन्ते फलन्ति यदकुर्वताम् ।
कर्माण्यद्भुतशक्तेस्तद्दैवस्यैव विजृम्भितम् ॥ ८५५ ॥
भरतेन सहेमां त्वं शुश्रूषानिरतः पितुः ।
प्रसीद पालय महीं मद्गिरा गतविक्रियः ॥ ८५६ ॥
इति कोपानलज्वालासंतप्तमनुजं शनैः ।
चकार विज्वरं रामो वाक्यपीयूषवृष्टिभिः ॥ ८५७ ॥

१. 'काठिन्यात्' शारदा०. २. 'सत्यं वीर्यं' शारदा०. ३. 'पदस्थानां' शारदा०.

ततः सत्यधृतिर्वीरो दाक्षिण्यैककृतक्षणः।
उवाच लक्ष्मणो राममनुयात्रासमुद्यतः॥ ८५८॥
आर्य जानीहि मां नित्यं छायारूपमिवानुगम्।
पौरुषं पूर्वकर्मेव न त्वां त्यक्ष्याम्यहं क्वचित्॥ ८५९॥
लक्ष्मणस्येति सुदृढं रामो विज्ञाय निश्चयम्।
उवाच वीरः कौसल्यां शोकसंतापमूर्छिताम्॥ ८६०॥
अनुजानीहि मां मातः सदाचारानुवर्तिनी।
यथा ते दैवतं भर्ता तथा चायं पिता मम॥ ८६१॥
पुत्रप्रवाससंतापकटुकां[1] वदनात्तव।
न शृणोति गिरं राजा यथा मातस्तथा कृथाः॥ ८६२॥
इत्युक्त्वा पादयोस्तस्याः पपात रघुनन्दनः।
तत्पादाब्जनखज्योत्स्नां मूर्ध्नि मालामिवोद्वहन्॥ ८६३॥
एवं कथंचिद्गुणवत्पुत्रगौरवयन्त्रिता।
आशीःपुरःसरां माता प्रादादाज्ञामनर्गलाम्॥ ८६४॥
ततो विनिर्ययौ मातुर्मन्दिराल्लक्ष्मणानुगः।
धैर्येण सह चेतांसि जनस्य सहसा हरन्॥ ८६५॥
स समेत्याभिषेकार्हव्रतमङ्गलशालिनीम्।
ददर्शान्तःपुरे सीतामुत्कण्ठाकुलिताशयाम्॥ ८६६॥
विप्रवासकथां श्रुत्वा सा भर्तुः पितुराज्ञया।
दुःखितापि धृतिं लेभे सह गन्तुं कृतक्षणा॥ ८६७॥
रामस्तामवदद्देवि प्रयाते मयि काननम्।
सेव्या भवत्या कौसल्या दुःखविसारणैर्नयैः॥ ८६८॥
मद्विप्रवासयोगेऽपि न कार्याः परुषा गिरः।
भरतश्रोत्रगामिन्यः स हि वृत्तिप्रदो नृपः॥ ८६९॥
इति पत्युर्वचः श्रुत्वा मैथिली कोपकम्पिता।
उवाचोच्चकुचाघातशीर्णाश्रुकणसंततिः॥ ८७०॥

---

१. 'प्रवासकटुकामुद्गतां' ख.

अहो बतार्यपुत्रस्यासदृशं श्रूयते वचः।
अहो प्रिया प्रणयिनी कथं त्याज्या सता सती॥ ८७१॥
हर्षोऽनुभूतः पित्रा मे मोहात्परिणये वृथा।
स्वकीर्तिमिव मां भर्ता त्यक्ष्यतीत्यविजानता॥ ८७२॥
स्वभाग्यभागिनः सर्वे पितृमातृसुतादयः।
सर्वथा पुरुषाणां तु भार्यैका भाग्यभागिनी॥ ८७३॥
रूपस्य वयसः कान्तेः सौभाग्यस्य सुखस्य च।
जीवितस्य च नारीणां जीवितं परमं पतिः॥ ८७४॥
सुखदुःखानुगां स्वैरकेलिविस्रम्भसाक्षिणीम्।
न मामर्हसि संत्यक्तुं चेतोवृत्तिमिवात्मनः॥ ८७५॥
विभूतिस्त्यागहीनेव सत्यहीनेव भारती।
विद्या प्रशमहीनेव न भाति स्त्री पतिं विना॥ ८७६॥
इति जायावचः श्रुत्वा रामः सुदृढनिश्चयम्।
वनदोषान्बहुविधान्घोररूपानुदाहरन्॥ ८७७॥
पादयोः पतितां सीतामनुयात्राकृतक्षणाम्।
तत्सौकुमार्यचकितस्तथेति प्रत्यपद्यत॥ ८७८॥
प्रतिषिद्धोऽपि रामेण यत्नात्प्रणयशालिना।
तत्याजारण्यगमने निश्चयं नैव लक्ष्मणः॥ ८७९॥
स रामशासनाद्दिव्ये जग्राह धनुषी स्वयम्।
अक्षय्यमायुधं[1] चान्यद्राजा यद्वरुणो ददौ॥ ८८०॥
ततः सुयज्ञमुख्येभ्यः सरत्नाभरणं धनम्[2]।
प्रददौ दृढमेवैभ्यो विप्रेभ्यो रघुनन्दनः॥ ८८१॥
ब्राह्मणाँस्त्रिजटाद्याँश्च गोसहस्रैश्च[3] काञ्चनैः।
पूरयित्वा यथाकामं सर्वाशाः कल्पपादपः॥ ८८२॥
अभ्येत्य पितरं [4]वीरः प्रलापमुखराननम्।
ददर्शान्तःपुरस्त्रीभिर्वृतं व्यथितमानसम्॥ ८८३॥

---

१. 'अक्षयं' शारदा०. २. 'वरम्' ख. ३. 'स्रैः सका' क. ४. 'रामः' ख.

स तमामन्त्र्य विनयात्सानुजो जानकीसखः।
गन्तुं समुद्ययौ तूर्णं धैर्यादस्खलिताशयः॥ ८८४॥
प्रस्तुते राघवे गन्तुं प्रजानां मानसैः सह।
बाष्पाम्बुरुद्धनयनो जगाद जगतीपतिः॥ ८८५॥
धनं रत्नानि सैन्यं च राममेवानुगच्छतु।
लतामिवात्तकुसुमां प्राप्नोतु भरतः श्रियम्॥ ८८६॥
एतदाकर्ण्य चकिता कैकेयी तमभाषत।
सत्योपदिग्धमनृतं भवता बत भाषितम्॥ ८८७॥
निःसारं हृतसर्वस्वं दत्त्वा राज्यं प्रतिश्रुतम्।
अयशोरेणुविध्वस्तं वचनं किं करिष्यसि॥ ८८८॥
रामवात्सल्यदोषेण मा सत्यमनृतं कृथाः।
ज्येष्ठः सुतो न किं त्यक्तः सगरेणासमञ्जसः॥ ८८९॥
शापभूताभिभूतायाः श्रुत्वेति वचनं नृपः।
रामेणाभ्यर्थितः सैन्यरत्नदानान्न्यवर्तत॥ ८९०॥
ततो जगाद सिद्धार्थो महामात्योऽतिदुःखितः।
ज्येष्ठपुत्रपरित्यागाद्भग्नं वः सर्वथा कुलम्॥ ८९१॥
चिक्षेप सरयूमध्ये दारकानसमञ्जसः।
पौराणां तत्क्रुधा राज्ञा निरस्तः सगरेण सः॥ ८९२॥
रामोऽर्हति कथं नाम त्यागं गुणवतां वरः।
इत्युक्त्वा निःश्वसन्मन्त्री मन्त्रध्वस्त इवाभवत्॥ ८९३॥
ततश्चीराम्बरं रामः कैकेय्या स्वयमर्पितम्।
सह जग्राह निर्दैन्यो जानक्या लक्ष्मणेन च॥ ८९४॥
विलपन्तं समाश्वास्य पितरं मातरं तथा।
सुमन्त्रप्रेरितेनाथ रथेन पृथुरंहसा॥ ८९५॥
रामः प्रतस्थे पौराणां शृण्वन्नाक्रन्दनिःस्वनम्।
निरीक्ष्यमाणः सास्रेण पित्रा विह्वलचेतसा॥ ८९६॥

१. 'महिषी' शारदा०.

दृष्टिनष्टे ततो रामे सह स्यन्दनरेणुना।
निपपात महीपालश्छिन्नमूल इव द्रुमः॥ ८९७॥
स लब्धसंज्ञः प्रलपन्कौसल्यासहितो मुहुः।
शुशोच निन्दन्कैकेयीं मूर्तां मृत्युमिवात्मनः॥ ८९८॥

इति रामप्रवासनम्॥ १८॥

रामोऽपि रजनीमेकामतीत्य तमसातटे।
गोमतीं प्रातरुत्तीर्य सरयूं चोर्मिमालिनीम्॥ ८९९॥
पौरान्प्रणयिनः सान्त्वैर्विनिवर्त्य प्रियंवदः।
कौसलान्समतिक्रम्य रम्ये मन्दाकिनीतटे।
इङ्गुदीपादपतले निनायाभिमते निशाम्॥ ९००॥
निषादपतिना तत्र गुहेन गुणशालिना।
पूजितः प्रणयाचारैः प्रतस्थे विगतश्रमः॥ ९०१॥
ततो विसृज्य विनयात्सुमन्त्रं सुरथानुगम्।
पितुर्धैर्यं समाश्वासन्संदेशप्रतिपादकम्॥ ९०२॥
प्रीत्या गुहं समामन्त्र्य सुहृदं धृतिसागरः।
न्यग्रोधक्षीरमाहृत्य जटा बद्ध्वा सलक्ष्मणः॥ ९०३॥
नावा तरङ्गदुर्भङ्गां[1] गङ्गामुत्तीर्य भङ्गुराम्।
त्रस्तसीताचलापाङ्गभङ्गकर्णोत्पलामिव॥ ९०४॥
न्यग्रोधमूले नलिनीतीरे नीत्वा विभावरीम्।
गङ्गायमुनयोः संधावतिवाह्यापरां निशाम्॥ ९०५॥
भरद्वाजेन मुनिणा पूजितो विनयानतः।
तद्गिरा चित्रकूटाख्यं पुण्यं प्राप तपोवनम्॥ ९०६॥
तत्र फुल्लताकुञ्जमञ्जुगुञ्जद्विहंगमम्।
विलोक्य काननं रामो जगाद जनकात्मजाम्॥ ९०७॥
इमास्ताः पुष्पहासस्य मदषट्पदनादिनः।

---

१. 'भ्रूभङ्गां' ख.

मधोः स्मरसहायस्य विलासोत्सवभूमयः ॥ १०८ ॥
पश्येमाः कीर्णकुसुमाः पल्लवाञ्जलिभिः पुरः।
आतिथ्यमिव कुर्वन्ति मारुतावनता लताः ॥ १०९ ॥
दृष्टिसादृश्यसुहृदस्तव बालकुरङ्गकाः।
नेत्रत्रिभागवलनैः सृजन्तीवोत्पलस्रजः ॥ ११० ॥
भ्रश्यत्परागवसना मधुपाव्यक्तभाषिणः।
पवनाघूर्णिता भान्ति मधुमत्ता इव द्रुमाः ॥ १११ ॥
इत्युक्त्वा दारुभिस्तत्र राघवो लक्ष्मणाहृतैः।
कृत्वाश्रमे वास्तुपूजां वैश्वदेवोचितां व्यधात् ॥ ११२ ॥

इत्याश्रमवास्तुपूजनम् ॥ १९ ॥

रथेन रामशून्येन धैर्यशून्येन चेतसा।
सुमन्त्रः प्रविवेशाथ हर्षशून्यां पुरीं प्रभोः ॥ ११३ ॥
अरामं रथमालोक्य प्राप्तं भग्नमनोरथाः।
चुक्रुशुः शोकविवशाः पौरास्तद्गुणरागिणः ॥ ११४ ॥
प्रविश्य प्रोषितसुखं विच्छायं नृपमन्दिरम्।
ददर्शान्तर्दशरथं सुमन्त्रः शोकविह्वलम् ॥ ११५ ॥
तं शोककृष्णपक्षेण निरीक्ष्य क्षयितप्रभम्।
प्रणम्य राजशशिनं सोऽभवद्व्यथितेन्द्रियः ॥ ११६ ॥
दृष्ट्वा सुमन्त्रं नृपतिर्वधूभिः परिवारितः।
रामं त्यक्त्वागतोऽसीति पपात विलपन्क्षितौ ॥ ११७ ॥
स लब्धसंज्ञः शनकैः पुत्रस्नेहविषार्दितः।
पप्रच्छ रामवृत्तान्तं सुमन्त्रं बाष्पगद्गदः ॥ ११८ ॥
स निवेद्य वनं प्राप्तं राममस्मै कृताञ्जलिः।
तत्संदेशं जगादाथ धैर्यप्रणयनिर्भरम् ॥ ११९ ॥
अयोध्याभिमुखः कृत्वा राघवः प्रणतोऽञ्जलिम्।
देव मद्वक्त्रसंक्रान्तां विज्ञप्तिं विदधे तव ॥ १२० ॥

तात त्वच्छासनं मूर्ध्ना चिन्तामणिमिवोद्वहन्।
धन्यः संतोषराज्येऽस्मिन्प्रीतिं प्राप्तः परामहम् ॥ ९२१ ॥
न धैर्यजलधे कार्यः संतापो मद्वियोगजः।
चतुर्दश समा विद्धि क्षणवत्क्षपिता मया ॥ ९२२ ॥
भरतं प्रति वात्सल्यशैथिल्यं मा कृथा विभो।
मन्निर्विशेषं भवता संभाव्यः स च सर्वदा ॥ ९२३ ॥
इति ब्रुवाणे काकुत्स्थे किंचिदागतविक्रियः।
सौमित्रिर्निःश्वसन्नूचे क्षितिमालोकयन्क्षणम् ॥ ९२४ ॥
चिन्तामणिगुणं पुत्रं त्यजता बत भूभुजा।
कुलं स्वव्यसनेनेव यशो नीतं दरिद्रताम् ॥ ९२५ ॥
लक्ष्मणेनेत्यभिहिते जानकी साम्रलोचना।
निरीक्षमाणा दयितं बाला नोवाच किंचन ॥ ९२६ ॥
सुमन्त्रेणेति कथिते व्यथितः पार्थिवो भृशम्।
हा रामेति निमद्योच्चैर्मोहान्निःस्पन्दतां ययौ ॥ ९२७ ॥
पुनः प्रत्यागतप्राणः श्रुत्वा रामं जटाधरम्।
जायासखः स संतापाद्विललापाश्रुगद्गदम् ॥ ९२८ ॥
शोचंश्च सानुजं रामं जानकीं च विशेषतः।
विलापविशिखैस्तीव्रैर्नृपः कौसल्यया हतः ॥ ९२९ ॥
चुक्रोश कृपयाविष्टः कष्टां विपदमास्थितः।
राहुच्छायोपगूढस्य वहन्नंशुमतः प्रभाम् ॥ ९३० ॥
कृच्छ्रेण प्रययुस्तस्य पञ्च पञ्चत्वकाङ्क्षिणः।
सहस्रयामतां यातास्त्रियामास्तप्तचेतसः ॥ ९३१ ॥
षष्ठेऽहनि ततो राजा शोकसंजातविक्रियः।
याते निशीथे कौसल्यामवदद्बाष्पगद्गदः ॥ ९३२ ॥
वियोगविषकन्दानां धन्या धैर्यप्रमाथिनाम्।
रसज्ञा न भवन्त्येव सत्यं सुकृतिनो नराः ॥ ९३३ ॥

१. 'भरतः' शारदा०.

स्वयं प्ररोपितस्यैव भविष्णोः कर्मशाखिनः ।
शुभाशुभफलस्फीतिं[1] भुञ्जते बत जन्तवः ॥ १३४ ॥
स्मृतं पुरा[2]द्य कौसल्ये मया[3] यद्दुष्कृतं कृतम् ।
तस्यैवायमपथ्यस्य विपाको जीवितापहः ॥ १३५ ॥
धन्वी पुरा कुमारोऽहं काले जलदलाञ्छने ।
प्रयातः सरयूकूलं[4] मृगयाकेलिलालसः ॥ १३६ ॥
निशि तत्र जले मग्ना महिषक्रोडकुञ्जराः ।
लक्ष्यज्ञेन मया विद्धाः शब्दपातदिदृक्षया ॥ १३७ ॥
तस्मिन्काले निरालोके ध्वनिराकर्णितो मया ।
गजबृंहितगम्भीरो निमज्जत्कुम्भसंभवः ॥ १३८ ॥
तमहं शब्दमुद्दिश्य तीक्ष्णं प्राहिणवं शरम् ।
विद्धः स कुम्भो येनाशु चुक्रोश मुनिपुत्रकः ॥ १३९ ॥
हा हा बत नृशंसेन केन किल्बिषकारिणा ।
अन्धयोर्वृद्धयोः पित्रोः पुत्रोऽयमिषुणा हतः ॥ १४० ॥
हते मयि हतौ नूनं तावेवं[5] स्तस्तपस्विनौ ।
अहमेव[6] तयोर्दृष्टिर्यष्टिश्च विषमेऽध्वनि ॥ १४१ ॥
किं करिष्यसि हा मातः क्व गमिष्यसि हा पितः ।
कष्टं कथमहं विप्रः शरेण निधनं गतः ॥ १४२ ॥
इति श्रुत्वातिकरुणं मुनिसूनोरहं वचः ।
तेन प्रत्यागतेनैव स्वेन बाणेन धारितः ॥ १४३ ॥
शापेनेवान्धकारेण दारिते सरयूतटे ।
नापश्यं कृतयत्नोऽपि तं विकूजन्तमातुरम् ॥ १४४ ॥
अथ शोकादिवापाण्डुर्वेपमानाकृतिः शशी ।
निशार्धशेषे शुभ्रांशुकेशो वृद्ध इवोद्ययौ ॥ १४५ ॥

---

१. 'प्राप्तिं' ख. २. 'मया' शारदा०. ३. 'पुरा' शारदा०. ४ 'तीरं' ख.
५. 'वाद्य त' शारदा०; ख. ६. 'मेप' शारदा०.

ज्योत्स्नाप्रकटिते तीरे ततोऽपश्यमहं पुरः ।
स्यूतं सुवर्णपुङ्खेन शरेण मुनिपुत्रकम् ॥ ९४६ ॥
विप्रकीर्णजटाजूटं नूतनोद्भिन्नयौवनम् ।
क्रन्दन्तं पतितं दृष्ट्वा तमहं व्यथितोऽपतम् ॥ ९४७ ॥
सोऽपि विप्लुतनेत्रो मां विलोक्य पतितं शुचा ।
उवाच मर्मविच्छेदं व्यथाशिथिलिताक्षरम् ॥ ९४८ ॥
अहो बतैकबाणेन तुल्यमेव हतस्त्वया ।
अहमन्धौ च वृद्धौ च पितरावेकपुत्रकौ ॥ ९४९ ॥
तदर्थमहमायातः समाहर्तुमितः पयः ।
मोहाद्धतस्त्वया तौ तु तृषार्तौ किं करिष्यतः ॥ ९५० ॥
राजन्वज्राग्निसंस्पर्शं तूर्णमुद्धर मे शरम् ।
संन्यासिनः सशल्यस्य नाहं मे मरणं मुनेः ॥ ९५१ ॥
इति प्रलपतस्तस्य जीविताव्याप्तचेतसः ।
मया मन्युरिवाभ्येत्य हृदयादुद्धृतः शरः ॥ ९५२ ॥
आकृष्टसायके तस्मिन्व्यावृत्तनयनः श्वसन् ।
व्यथां मयि विनिक्षिप्य द्विजस्तत्याज जीवितम् ॥ ९५३ ॥
पूर्वं तदुपदिष्टेन ततोऽहं वनवर्त्मना ।
जलकुम्भं समादाय प्रयातस्तत्पितुः पदम् ॥ ९५४ ॥
तत्रान्धौ दम्पती श्रुत्वा तौ मे शब्दं प्रसर्पतः ।
पुत्रदर्शनसोत्कण्ठौ गद्गदाक्षरमूचतुः ॥ ९५५ ॥
चिरेणागच्छता पुत्र भवता केलिशालिना ।
आवयोर्भयसंदेहदोलामारोपितं मनः ॥ ९५६ ॥
एह्येहि यज्ञदत्तास्मत्पाणिसङ्गेन संस्पृश ।
न कोपितः कदाचित्त्वं चिरेण कथमागतः ॥ ९५७ ॥
इति ब्रुवाणयोरग्रे कम्पमानस्तयोरहम् ।
दुःसहं हृदि वाग्वज्रं तद्वृत्तान्तं न्यवेदयम् ॥ ९५८ ॥

अहं दशरथः पापः सुकृती न सुतस्तव ।
पुत्रः स ते गजधिया मयैव निहतः प्रियः ॥ ९५९ ॥
अधुना क्रोधजः शापो दुःसहो मयि पात्यताम् ।
अस्य किल्बिषशोकाग्नेरग्रे मन्ये स शीतलः ॥ ९६० ॥
इति श्रुत्वैव गम्भीरदुःखः स्वस्थ इव क्षणम् ।
मामुवाच मुनिर्ध्यात्वा दुर्लङ्घ्या भवितव्यता ॥ ९६१ ॥
स्वयमावेदनेनैव पापस्यास्य स्रवीयसः ।
अविज्ञानान्न ते यातं शिरः शतसहस्रधा ॥ ९६२ ॥
नय मां तत्र यत्रासौ शेते त्वद्बाणमारितः ।
मम चक्षुश्च यष्टिश्च जीवितं च प्रियः सुतः ॥ ९६३ ॥
तमहं द्रष्टुमिच्छामि सभार्यः क्षतजोक्षितम् ।
प्राणाः संप्रस्थिताः क्वापि तत्संस्पर्शः कुतः पुनः ॥ ९६४ ॥
इति ब्रुवाणः स मयानीतो जायासखः शनैः ।
तं देशं यत्र तत्पुत्रः क्ष्मामिवालिङ्ग्य संस्थितः ॥ ९६५ ॥
उन्नम्य वदनं तस्मै समेत्य भृशमाकुला ।
जननी दुःखसंतप्ता वहन्ती जन्मवासनाम् ॥ ९६६ ॥
अहं ते जनकः पुत्र किर कर्णसुधां गिरम् ।
अन्धोऽहं क्व च यास्यामि त्वदालम्बनजीवितः ॥ ९६७ ॥
गतिं पुण्यकृतां वत्स परमां समवाप्नुहि ।
त्वया सहावयोर्नूनं त्रिदिवे संगमः पुनः ॥ ९६८ ॥
इति प्रलप्य सुचिरं मुनिस्तनयवत्सलः ।
शरीरमस्य सत्कृत्य क्रियां चक्रे यथोचिताम् ॥ ९६९ ॥
ततो दिव्यवपुर्दिव्यं विमानं दीप्तमास्थितः ।
उवाच द्योतयन्व्योम्नि पितरौ मुनिपुत्रकः ॥ ९७० ॥
शुश्रूषयैव युवयोः प्राप्तोऽस्मि गतिमुत्तमाम् ।
नापराधोऽस्य नृपतेरीदृशी भवितव्यता ॥ ९७१ ॥

स्वकृतैः कर्मभिर्जन्तुर्जायते परिवर्धते ।
जीर्यते नश्यति पुनः कर्ता कश्चिन्न कस्यचित् ॥ ९७२ ॥
इत्युक्त्वान्तर्हिते तस्मिन्मां वृद्धो मुनिरब्रवीत् ।
अवश्यं नृप भोक्तव्यं पापस्यास्य फलं त्वया ॥ ९७३ ॥
पुत्रशोकेन महता तप्तस्त्यक्ष्यति जीवितम् ।
इत्युक्त्वा दुःखितो देहं सभार्यो मुनिरत्यजत् ॥ ९७४ ॥
इति यज्ञदत्तवधवर्णनम् ॥ २० ॥

सोऽयं ममाद्य कौसल्ये फलितः शापपादपः ।
न हि नाम चलत्येषा विहिता कर्मसंततिः ॥ ९७५ ॥
सज्जाः संनिहिता नित्यं शुभाशुभफलोदयाः ।
तिष्ठन्ति पुरुषस्याग्रे सद्भृत्याः सुभृता इव ॥ ९७६ ॥
एते वियोगशोकाग्नितापक्लेशासहिष्णवः ।
प्राणास्तरलसंचाराः क्वापि गन्तुं समुद्यताः ॥ ९७७ ॥
हा न दृष्टो मया रामः कामं कमललोचनः ।
कुतस्तमिह विक्रान्तं द्रक्ष्यामि पुनरागतम् ॥ ९७८ ॥
सीतैव धन्या रामस्य सततं पार्श्ववर्तिनी ।
कीर्तिः सत्पुरुषस्येव धृतिः सत्त्ववतो यथा ॥ ९७९ ॥
हा राम नयनानन्दसुधासंदोहबान्धव ।
विलप्येति मुहुः प्राणांस्तत्याज जगतीपतिः ॥ ९८० ॥
सुप्तं विज्ञाय नृपतिं कौसल्या शोकतापिता ।
तन्निद्राभङ्गभीताभून्निःशब्दप्रविलापिनी ॥ ९८१ ॥
प्रातः प्रबोध्यमानोऽपि सूतमागधवन्दिभिः ।
दीर्घप्रवासरसिकः क्ष्मापतिर्न व्यबुध्यत ॥ ९८२ ॥
ततस्तं विगतश्वासं प्रशान्तमिव पावकम् ।
अपुनर्दर्शनायैव ददर्श महिषीजनः ॥ ९८३ ॥
इति दशरथविपत्तिः ॥ २१ ॥

अस्तं प्रयातमालोक्य तं राजरजनीपतिम् ।
शोकान्धकारसंरुद्धश्चक्रन्दान्तःपुरे जनः ॥ ९८४ ॥
कौसल्याद्यास्ततो देव्यः प्रलापमुखराननाः ।
चक्रुरश्रुकणैश्छिन्नहारमुक्ताफलप्रभम् ॥ ९८५ ॥
सवृद्धबाललल्लने शोकव्याकुलिते जने ।
मार्कण्डेयवसिष्ठाद्या निवेद्य सह मन्त्रिभिः ॥ ९८६ ॥
तैलद्रोण्यां विनिक्षिप्य नृपं पुत्रक्रियां विना ।
दूतान्विससृजुर्वीरान्भरतायाशुगामिनः ॥ ९८७ ॥

इति क्षेमेन्द्रविरचिते रामायणकथासारे समाप्तोऽयमयोध्याकाण्डः[1] ।

---

प्राप्तेषु केकयपुरं दिनैर्दूतेषु सप्तभिः ।
स्वैरं बन्धुसमासीनो वयस्यान्भरतोऽभ्यधात् ॥ १ ॥
मया निशावसानेऽद्य स्वप्नो दृष्टोऽतिदारुणः ।
फलं यस्याधिकं मन्ये जीविताधिकसंशयः ॥ २ ॥
शुष्कं समुद्रमद्राक्षं चन्द्रं च पतितं दिवः ।
तमोरुद्धामयोध्यां च कीर्णकेशीमिवाङ्गनाम् ॥ ३ ॥
गुरुश्च शैलशिखरान्मया दृष्टः परिच्युतः ।
कलशे गोमयजले तैलमञ्जलिभिः पिबन् ॥ ४ ॥
स एव च पुनर्दृष्टो लोहपृष्ठे सिताम्बरः ।
नारीभिः कृष्णपिङ्गाभिर्हसन्तीभिर्निरीक्षितः ॥ ५ ॥
रथेन खरयुक्तेन रक्तमाल्यानुलेपनः ।
पुनरालोकितस्तूर्णं प्रसर्पन्दक्षिणां दिशम् ॥ ६ ॥
इत्येष विषमः स्वप्नः परं हृदयकम्पनः ।
गम्भीरसंशयाशंसी न जाने किं करिष्यति ॥ ७ ॥

---

१. 'समाप्तमिदमयोध्यापर्व' इति शारदालिपिपुस्तके.

भरतेनेति कथिते सुहृदश्चकिता अपि ।
ऊचुर्धातुविकारेण स्वप्नानामप्रमाणताम् ॥ ८ ॥
तद्गिरा कृतजप्योऽथ संपूजितसुरद्विजः ।
भरतश्चिन्तयन्नेव चकम्पे स्वप्नदर्शनम् ॥ ९ ॥
अत्रान्तरे प्रविश्याशु दूतास्ते संवृताशयाः ।
वसिष्ठशासनं नूनं सर्वे तेऽस्मै न्यवेदयन् ॥ १० ॥
पितुः सर्वत्र कुशलं तैर्मिथ्यैव निवेदितम् ।
निशम्य मन्त्रं भरतो मातामहमुपाययौ ॥ ११ ॥
पूजितो मातुलेनाथ सैन्येन महतावृतः ।
शत्रुघ्नसहितो वीरः प्रतस्थे नगरीं पितुः ॥ १२ ॥
समुत्तीर्य दिनैः पुण्या नदीः शैलवनानि सः ।
ध्वस्तशोभां ददर्शारादयोध्यां विधुताशयः ॥ १३ ॥
विपद्विवासितमुखां[1] शुष्कम्लानजनाननाम्[2] ।
दूरीकृतालिवलयां शुष्काब्जामिव पद्मिनीम् ॥ १४ ॥
निर्भूषणां निरानन्दां विच्छायां विस्मृतस्मिताम् ।
विधवामिव तां वीक्ष्य शङ्कातङ्काकुलोऽभवत् ॥ १५ ॥
अप्रियाख्यानचकितैर्धूतैः[3] सर्वैरधोमुखैः ।
राजधानीं प्रविश्याथ मातुर्मन्दिरमाययौ ॥ १६ ॥
विलोक्य तत्र कैकेयीं पुत्रदर्शननिर्वृताम् ।
प्रणम्य राजलुब्धां तां पप्रच्छ जनकोत्सुकः ॥ १७ ॥
मातर्म्लानमुखः कस्मादकस्मादापदां पदम् ।
उग्रशोकग्रहग्रस्त इवायं लक्ष्यते जनः ॥ १८ ॥
वेणुवीणाम्बरालीनमधुरध्वनिपेशलम् ।
यशः शुभ्रं मृगाक्षीभिः किं तातस्य न गीयते ॥ १९ ॥
वैत्रिणां नामभिर्भूमिपालान्सूचयतां पुरः[4] ।
किं नु न श्रूयते शब्दस्तातस्यास्थानमन्दिरे ॥ २० ॥

१. 'सुखां' ख. २. 'मूक' शारदा०; ख. ३. 'भ्रैतः' ख. ४. 'पुनः' ख.

भरतेनेत्यभिहिते कैकेयी प्रत्यभाषत।
यशोवशेषतां यातस्तातः सत्यव्रतस्तव॥ २१॥
राम रामेति बहुशो विलप्य विवशो निशि।
तत्याज जीवितं राजा सह तद्दर्शनाशया॥ २२॥
वने निष्कासितस्तेन नाम रामः सलक्ष्मणः।
सेहे न चातिधीरोऽपि तद्वियोगविषव्यथाम्॥ २३॥
इति दुःसहवाग्वज्रताडितो भरतस्तया।
कृत्तः परशुना मूले बालस्ताल इवापतत्॥ २४॥
स लब्धसंज्ञः शनकैश्चक्रारूढ इव क्षणम्।
हा तात तातेति मुहुर्विललापाश्रुगद्गदः॥ २५॥
प्रमृज्य नयने तप्तनिःश्वासग्लपिताधरः।
पुनः पप्रच्छ जननीं निमग्नः शोकसागरे॥ २६॥
आर्येण किं कृतं मातस्तातस्य बत विप्रियम्।
स संत्यक्तः स्वयं येन तेन स्तेन इवात्मजः॥ २७॥
किंस्विद्गुरुतरं किंचित्कृतमार्येण पातकम्।
अथ वा रामचरिते कलङ्ककलना कुतः॥ २८॥
पृष्टा सानुनयेनेति भरतेन विषादिना।
तत्त्वं जगाद जननी स्त्रीभावसरलाशया॥ २९॥
त्वदर्थं याचितो राजा मया रामनिवासनम्।
अभिषेकं च भवतः स च तत्कृतवान्कृती॥ ३०॥
वरप्रदानसत्येन बद्धस्य मयि भूपतेः।
चरिष्यत्याज्ञया रामश्चतुर्दश समा वने॥ ३१॥
श्रुत्वेति विप्रियं तूर्णं निन्द्यं मात्रा निवेदितम्।
श्वपाकीगर्भसंभूतमिवात्मानममंस्त सः॥ ३२॥
सोऽवदद्दुःखसंतप्तः सजुगुप्सः स्वजीविते।
जीवयन्निव चिन्ताग्निं निःश्वासप्रबलानिलैः॥ ३३॥

बत पातकपङ्केन घनेन प्रविसर्पिणा ।
भवत्या स्वेच्छया लिप्तं कुलमात्मा यशश्च मे ॥ ३४ ॥
ज्येष्ठो विवासितः पुत्रो दैवतं निहतः पतिः ।
श्वभ्रे निपातितश्चाहमहो युक्तं त्वया कृतम् ॥ ३५ ॥
कुतस्त्वया कदा लुब्धो ज्ञातः पापोऽहमीदृशः ।
यस्मै गुरुवधादिष्टं राज्यमेतत्प्रयच्छसि ॥ ३६ ॥
हा धिङ्मां पतितं पापं शापेन महता हतम् ।
यस्यापवादजननी जननी त्वमपत्रपा ॥ ३७ ॥
धेनोरिवैकवत्सायाः कौसल्यायाः प्रियः सुतः ।
कथं प्रव्राजितोऽरण्यं पुत्रिण्यापि स्वयं त्वया ॥ ३८ ॥
गवां माता पुरा देवी सुरभिर्लाङ्गलार्दितौ ।
दृष्ट्वा सुतौ रुरोदार्ता पृष्टा प्रोवाच वज्रिणा ॥ ३९ ॥
कृशौ पुत्राविमौ दृष्ट्वा भुवि कार्षिकपीडितौ ।
सीदामि परमा प्रीतिः पुत्रान्नान्यात्र देहिनाम् ॥ ४० ॥
इत्युक्त्वा बहुपुत्रापि शुशोच सुरभिः पुरा ।
एकपुत्रापि कौसल्या न जाने कथमास्थिता ॥ ४१ ॥
तातस्याहं क्षये हेतुरयशोधूलिधूसरः ।
द्रक्ष्यामि कथमार्यस्य वात्सल्याभिमुखं मुखम् ॥ ४२ ॥
इत्युक्त्वा प्ररुरोदार्तस्तारगम्भीरनिःस्वनैः ।
कुर्वन्भुवनकोणेषु जगत्सिंहगुहाभ्रमम् ॥ ४३ ॥
ततो विदितवृत्तान्तः क्रुद्धो नाग इव श्वसन् ।
जग्राहाभ्येत्य भरतं शत्रुघ्नः पतितं भुवि ॥ ४४ ॥
सोऽब्रवील्लक्ष्मणेनैव कृतं सर्वमसांप्रतम् ।
वीरो यः क्लेशवत्सेहे राघवस्य विवासनम् ॥ ४५ ॥
अवध्या जननी योषिदात्महा पापमश्नुते ।
आर्यप्रवासनस्यास्य कष्टं नास्ति प्रतिक्रिया ॥ ४६ ॥

कोपादुक्त्वेति शत्रुघ्नो विलोक्य द्वारि मन्थराम् ।
गुल्फदेशे समादाय चकर्षाकीर्णभूषणाम् ॥ ४७ ॥
क्रोशन्त्या वदनं तस्या विपुलं पांसुमुष्टिभिः ।
संपूर्य चक्रे निष्पिष्टतद्भूषणभृतां भुवम् ॥ ४८ ॥
सेयं किल्बिषकन्दानां निन्द्यानां प्रथमा मही ।
उक्त्वेति तां स तत्याज चिरेण शरणं गताम् ॥ ४९ ॥
ततः संस्तभ्य शोकाग्निं भरतो राममातरम् ।
गत्वा ववन्दे वाष्पाम्बुधौततच्चरणाम्बुजः ॥ ५० ॥
निवेदितं तया श्रुत्वा कैकेय्याश्चरितं पुनः ।
लज्जारजःपरिम्लानं शुशोचात्मानमात्मना ॥ ५१ ॥
तमुवाचाथ कौसल्या वाष्पव्याकुलिताक्षरम् ।
धन्या पश्यति कैकेयी पुत्रं पूर्णमनोरथा ॥ ५२ ॥
गतस्ते जनकः स्वर्गं यातः काननमग्रजः ।
भजतामधुना राज्यं जनन्या समुपार्जितम् ॥ ५३ ॥
अनुजानीहि मां पुत्र सुमित्रासहितां वनम् ।
व्रजामि लक्ष्मणारामं रामं चन्द्रमिवेक्षितुम् ॥ ५४ ॥
श्रुत्वेति तद्वचः शोकविधुरं मधुराशयः ।
उवाच भरतो दोषं शङ्कमान इवात्मनि ॥ ५५ ॥
कथमङ्के विवृद्धस्य जानीषे न ममाशयम् ।
जनापवादनिन्द्या श्रीः कस्य प्रीणाति मानसम् ॥ ५६ ॥
असत्यः शास्त्ररहितोऽसत्याचारविवर्जितः ।
यदा स्पृशतु गां वह्निं वयस्यगुरुतल्पगः ॥ ५७ ॥
प्रजाभागकरग्राही पार्थिवः शस्त्ररक्षिता ।
राजा गृहेऽभिरमतां भृत्ययाचकवञ्चकः ॥ ५८ ॥
कृतघ्नः पक्षमाश्रित्य करोतु न्यायनिर्णयम् ।
अदत्त्वा स्वयमश्नातु स्तब्धः पूज्यावमानकृत् ॥ ५९ ॥

पतितः साधुविद्वेषी शिशुगोस्त्रीद्विजान्तकः ।
भक्तत्यागी गुरुघ्नश्च स्तेनो विश्वस्तघातकः ॥ ६० ॥
उभे संध्ये शयानश्च मूर्खो यातु प्रमातृताम् ।
षण्मासान्वसतु ग्रामे स्वपुत्रीमुपजीव्यतु ॥ ६१ ॥
स सर्वपातकावासः प्रयातु तमसां पदम् ।
यस्यानुमतमार्यस्य गमनं गुणशालिनः ॥ ६२ ॥
भरतेनेत्यभिहिते कौसल्या लज्जितावदत् ।
पुत्र जानामि ते भावं शपथं मा कृथाः परम् ॥ ६३ ॥
साधोर्विशुद्धसत्त्वस्य सदा तव विवेकिनः ।
दोषपङ्क इव व्योम्नः कदा केनानुमीयते ॥ ६४ ॥
राममातुरिति श्रुत्वा भरतः शोकपीडितः ।
वियोगं चिन्तयन्घोरं न शर्म प्रत्यपद्यत ॥ ६५ ॥
आत्मानं कारणं ज्ञात्वा पितुर्भ्रातुश्च किल्बिषे ।
सोऽभूदार्ततरः पीत्वा सुरां मोहादिव द्विजः ॥ ६६ ॥
तस्य भूमौ शयानस्य मूर्छाव्यथितचेतसः ।
लज्जानुशयतप्तस्य कृच्छ्रेण रजनी ययौ ॥ ६७ ॥
तमाधिदुर्बलं यक्ष्मक्षीयमाणमिवोडुपम् ।
तस्थुः संपरिवार्यैतं मुनिभिः सह मन्त्रिणः ॥ ६८ ॥
ततोऽतिशोकसंतप्तं श्वासम्लानाननाम्बुजम् ।
श्रेष्ठो मनीषिणामूचे वसिष्ठो भगवान्मुनिः ॥ ६९ ॥
संपत्सु च कुलीनानां विपत्सु च विवेकिनाम् ।
स्थैर्यं विनयधैर्याभ्यां गाम्भीर्यं च विभाव्यते ॥ ७० ॥
मोहध्वान्तनिशीथेन शोकेनातिप्रमाथिना ।
धृतिवल्लीकुठारेण न स्पृशन्ति मनीषिणः ॥ ७१ ॥
शोकोद्गतिरियं पुंसः सततं परिवर्धते ।
श्यामिका दर्पणस्येव हेमन्तस्येव यामिनी ॥ ७२ ॥

प्रकाशपरिपन्थिन्यो व्यसनापातदूतिकाः ।
एताः परिचिता जाता न शुचः शुचिचेतसाम् ॥ ७३ ॥
हृतान्सुदयितान्कालप्रवहेण बलीयसा ।
संसारासारतां ज्ञात्वा न शोचन्ति विवेकिनः ॥ ७४ ॥
कर्तुमर्हसि धर्मेण क्रियां नैर्याणिकीं पितुः ।
इयं विधार्यते केन गच्छन्ती जन्तुसंततिः ॥ ७५ ॥
भवेऽस्मिंल्ललनालोललोचनाञ्चलचञ्चले ।
आयूंषि तरलान्येव यौवनानि सुखानि च ॥ ७६ ॥
वियोगमोहकलिले वैक्लव्यव्यसनार्णवे ।
उग्रशोकग्रहग्राहे न सज्जन्ति भवद्विधाः ॥ ७७ ॥
भूरिद्युम्नः पुरा राजा सुकृती त्रिदिवं गतः ।
संततैर्बन्धुबाष्पौघैः क्षीणपुण्य इव च्युतः ॥ ७८ ॥
वसिष्ठेनेत्यभिहिते मन्त्रिभिश्च पुनः पुनः ।
कृच्छ्रादिव पितुश्चक्रे भरतो देहसत्क्रियाम् ॥ ७९ ॥
शास्त्रोचितेन विधिना संस्कारे पृथिवीपतेः ।
वृत्ते निवृत्तविभवं बभूव निखिलं[1] पुरम् ॥ ८० ॥
कृतोदकं गताशौचं भरतं शोकमूर्छितम् ।
उपतस्थुः प्रजानाथं चाभिषेकाय मन्त्रिणः ॥ ८१ ॥
सोऽभिषेकसमारम्भं निवार्य विगतस्पृहः ।
वनयात्रोत्सुकस्तस्थौ रामदर्शनलालसः ॥ ८२ ॥

इति दशरथसंस्कारः ॥ १ ॥

सोऽब्रवीद्भवतामग्रे रचितोऽयं मयाञ्जलिः ।
राज्यं मे रामपादाब्जसेवारसमहोत्सवः ॥ ८३ ॥
राज्यमर्हति काकुत्स्थस्तस्य दासोचिता वयम् ।
ज्येष्ठाभिगामिनी लक्ष्मीः सदैव रघुभूभुजाम् ॥ ८४ ॥

---

1. 'सकलं' ख.

व्यसनं हि तदैश्वर्यं साप्युन्नतिरधोगतिः ।
न यत्र रामपादाब्जरजसा रञ्जितं शिरः ॥ ८५ ॥
विश्वरक्षामणिं तस्माज्ज्येष्ठं ज्येष्ठैर्गुणैर्युतम् ।
रामं प्रसादयिष्यामि वनं गत्वा निजश्रिये ॥ ८६ ॥
इति ब्रुवाणमसकृद्भरतं साश्रुलोचनम् ।
प्रशशंसुर्वसिष्ठाद्या मुनयः सह मन्त्रिभिः ॥ ८७ ॥
सोऽथ सर्वाः पुरस्कृत्य प्रकृतीः सुकृतोज्ज्वलाः ।
प्रतस्थे स्थिरसंकल्पो वनं वारिजलोचनः ॥ ८८ ॥
शनैः प्रसर्पतस्तस्य गजगण्डालिमण्डलैः ।
चरितैरिव कैकेय्या बभूवुर्मलिना दिशः ॥ ८९ ॥
बभूव भूमिपालानां स्वच्छच्छत्रैः सितं नभः ।
भरतस्य गुणोदारं यशो वक्तुमिवोद्गतैः ॥ ९० ॥
व्रजन्वाजिव्रजखुरोद्धूतधूलीपटच्छलात् ।
स्वर्गे दशरथं द्रष्टुं वसुधेवोद्ययौ स्वयम् ॥ ९१ ॥
रथघोषप्रवृत्तानां बर्हिणां बर्हचन्द्रकैः ।
सकटाक्षा इव दिशो ददृशुर्भरतं पथि ॥ ९२ ॥
स ययौ शोधितेनाग्रे वर्त्मना कारुशिल्पिभिः ।
पुण्यैः संमार्जितेनेव सुकृती निजकर्मणा ॥ ९३ ॥
प्रयान्तं भरतं दृष्ट्वा रामस्य विनिवर्तने ।
तमेवानुययुः प्रीत्या प्रजास्तद्दर्शनोत्सुकाः ॥ ९४ ॥
सा शस्त्रवीचिनिचया च्छत्रफेनाट्टहासिनी ।
प्राप भागीरथीकूलं शनैर्भरतवाहिनी ॥ ९५ ॥
दिनस्यान्ते संनिविष्टां तामपारां पताकिनीम् ।
गुहो निषादाधिपतिर्दृष्ट्वा चिरमचिन्तयत् ॥ ९६ ॥
इक्ष्वाकूणामियं सेना तुरङ्गगजगामिनी ।
क्व नु सर्पति वीरेण भरतेनानुपालिता ॥ ९७ ॥

१. 'पुण्येन स्वार्जि' शारदा०.

नूनं विभवलुब्धोऽयं रामं हन्तुमुपागतः ।
स्वजनस्नेहहारिण्यः कर्कशा हि विभूतयः ॥ ९८ ॥
यद्ययं वक्रसंकल्पः काकुत्स्थमभिधावति ।
अस्य स्पष्टोपदेष्टारस्तदेते राजमन्त्रिणः ॥ ९९ ॥
इति निश्चित्य मनसा निषादाधिपतिर्गुहः ।
उपायनं समादाय प्रययौ भरतान्तिकम् ॥ १०० ॥
प्रणम्य भरतं तत्र यथार्हावाप्तसत्कृतिः ।
शुश्राव तस्य संकल्पं स्थिरं रामनिवर्तने ॥ १०१ ॥
भरतस्तद्गिरा श्रुत्वा रामं चीरजटाधरम् ।
नवीभूतमहाशोकः पपात व्यथितः क्षितौ ॥ १०२ ॥
कौसल्याद्यास्ततोऽभ्येत्य मातरः शोकविह्वलाः ।
तं समाश्वास्य शनकैर्निःशब्दं शुशुचुर्निशि ॥ १०३ ॥
अथापरेऽह्नि भरतो रामसंदर्शनोत्सुकः ।
ययौ गुहोपदिष्टेन गङ्गामुत्तीर्य वर्त्मना ॥ १०४ ॥
स प्रविश्य घनच्छायं प्रयागं नाम काननम् ।
भरद्वाजाश्रमं प्राप लीलोद्यानं तपःश्रियः ॥ १०५ ॥
विद्यावेश्मनि स प्राप निर्मिते विश्वकर्मणा ।
दिव्यां देवोपचारार्हां भोगसंभोगसंपदाम् ॥ १०६ ॥
गन्धर्वगणगीतेन नृत्येन सुरयोषिताम् ।
स प्राप्य विपुलां प्रीतिं प्रतस्थे प्रातरुत्सुकः ॥ १०७ ॥
पश्चाद्व्रजन्तं दृष्ट्वास्य महर्षिर्जननीजनम् ।
तमपृच्छद्विभागेन पृष्टश्च भरतोऽभ्यधात् ॥ १०८ ॥
इयमार्यस्य कौसल्या माता जिष्णोरिवादितिः ।
माता यस्य न लोकेऽस्ति यशसामथ तेजसाम् ॥ १०९ ॥
इयं सुमित्रा भगवन्वीरवृत्तिरिवोचिता ।
यस्या लक्ष्मणशत्रुघ्नौ वीर्यौदार्यचितौ सुतौ ॥ ११० ॥

जनापवादजननी ममेयं जननी विभो ।
कैकेयी दुस्तरे क्षिप्तो ययाहं शोकसागरे ॥ १११ ॥
शोकान्तेनेति कथितं भरतेन मुनीश्वरः ।
कारणं दैवमेवात्र न कैकेयीत्यभाषत ॥ ११२ ॥
कानने चित्रकूटाख्ये रामं ज्ञात्वा मुनेर्गिरा ।
स्थितं स्थितिमतामग्र्यः प्रतस्थे भरतस्ततः ॥ ११३ ॥
स ससर्प सरत्सेनासमुद्रोत्तुङ्गवीचिभिः ।
धूतध्वजपटैः कुर्वन्कीर्तिं पल्लवितामिव ॥ ११४ ॥
धूमालीं चित्रकूटस्य भूभृतस्तस्य सर्पतीम् ।
दूरादालोक्य भरतो रामाश्रमममन्यत ॥ ११५ ॥

इति भरतयात्रा ॥ २ ॥

अत्रान्तरे वनान्तेषु पश्यन्कान्ततमाः श्रियः ।
विजहार विलासाङ्को राघवो दयितासखः ॥ ११६ ॥
स सीतावदनाम्भोजसक्तलोचनषट्पदः ।
उवाच दन्तकिरणैर्मूर्तं[1] हर्षमिवोद्धमन् ॥ ११७ ॥
इयं श्रीर्गिरिराजस्य तारनिर्झरहारिणी ।
भाति भूतिर्गजस्येव मनोनयनहारिणी ॥ ११८ ॥
विकासिकुसुमस्फूर्जद्रजःपुञ्जोपजीविनः ।
एते त्वद्वदनामोदसोदरा वान्ति वायवः ॥ ११९ ॥
इयं विलासवसतिर्विलोलालिकुलालका ।
शिरीषवल्ली पुंनागं त्वमिवालिङ्ग्य मां स्थिता ॥ १२० ॥
रजोभिः कौसुमैर्दिक्षु स्फारकर्पूरपाण्डुरैः ।
एते विभान्ति तरवः सन्तः सच्चरितैरिव ॥ १२१ ॥
गायतीव स्वरस्यैषा शं[2]सनं नवमल्लिका ।
बालिकाकलिकाकोटिसक्तशिञ्जानषट्पदा ॥ १२२ ॥

---

१. 'दूतं' शारदा०; ख. २. 'यशांसि' ख.

इमाः कुसुमसंभारभूषिताः पुष्पधन्वनः ।
व्यक्तं रतिसहायस्य भान्ति विश्रान्तिभूमयः ॥ १२३ ॥
स्तवकस्तनसंसक्तपल्लवावर्जिताञ्जलिः ।
ध्रुवं[1] प्रसादयत्येषा कुसुमावनता लता ॥ १२४ ॥
पुष्पश्रीर्मधुपालापः कलकोकिलकूजितम् ।
सेयं मदनकन्दस्य सुधासेकपरम्परा ॥ १२५ ॥
पश्य गङ्गामनङ्गारिजटापटलमालिकाम् ।
आनन्दजननीमस्य गिरेर्दूतामिव श्रियम् ॥ १२६ ॥
त्वङ्गत्तरङ्गभ्रूभङ्गभङ्गैरेषा विभाव्यते ।
गाढं गौरीपरिष्वङ्गात्कुपितेव पिनाकिनः ॥ १२७ ॥
लसत्कुसुमहासिन्यो विलासिन्यः सविभ्रमाः ।
कूले नृत्यन्ति पश्यास्याः पवनाकुलिता लताः ॥ १२८ ॥
वैदुष्यं शीलवृत्त्येव धृत्येव महतां मनः ।
आभिजात्यं विभूत्येव भूषितं वनमेतया ॥ १२९ ॥
एते त्रिपथगातीरतारशीकरमारुताः ।
अमुक्तमौक्तिकलतां कुर्वन्तीव वनश्रियम् ॥ १३० ॥
निषसाद निगद्येति चारुतीरशिलातले ।
अङ्के शशाङ्कवदनां जानकीं विनिवेश्य सः ॥ १३१ ॥
मनःशिलां शिलापार्श्वे कराग्रेणावघृष्य सः ।
ललाटे तिलकं तस्याश्चक्रे बालेन्दुसुन्दरे ॥ १३२ ॥
सुचारुतिलकोदारं वदनं हरिणीदृशः ।
निमेषदोषशून्याभ्यां नेत्राभ्यां स चिरं पपौ ॥ १३३ ॥
सा कपित्रासलोलाक्षी कण्ठे जग्राह राघवम् ।
गाढप्रियपरिष्वङ्गखर्वीभूतपयोधरा ॥ १३४ ॥
तस्याः कटाक्षविक्षेपैरदूरपरिसर्पिणाम् ।
बर्हिणां बर्हभारेण बभूव पुनरुक्तता ॥ १३५ ॥

---

१. 'एवं' शारदा०; 'एनं' ख.

रामस्य विपुलं वक्षः क्रान्तकान्ताविशेषकम् ।
कौस्तुभाभरणोद्भासिकैटभारेरिवाबभौ ॥ १३६ ॥
सबालकेसरदलैः कुटिलामलकावलीम् ।
अलंचकार वैदेह्याः पुलकालंकृताकृतिः ॥ १३७ ॥
शिलातलं परित्यज्य करेणालम्ब्य जानकीम् ।
स चचार वनान्तेषु करीव करिणीसखः ॥ १३८ ॥
रागिणामिव दीप्तेन ज्वलितं स्मरवह्निना ।
रक्ताशोकवनं प्राप्य गतशोकौ ननन्दतुः ॥ १३९ ॥
मिथो विहितनेपथ्यौ विकोशाशोकशेखरैः ।
तौ दम्पती विबभतुः कुसुमायुधनाटके ॥ १४० ॥
विहृत्य सुचिरं तत्र जग्मतुस्तौ स्वमाश्रमम् ।
पुरा प्रत्युद्गतेनैत्य लक्ष्मणेनाभिनन्दितौ ॥ १४१ ॥
मांसेन कृष्णसाराणां क्षतानां लक्ष्मणेषुभिः ।
बलिशेषेण वैदेही पत्युर्भोज्यमकल्पयत् ॥ १४२ ॥
मांसशेषस्य रक्षायै समादिष्टा प्रियेण सा ।
पक्षतुण्डनखाघातैः काकेनोद्वेजिता भृशम् ॥ १४३ ॥
इतस्ततो विलुलिता भ्रश्यत्कौशेयकांशुका ।
प्रीतये साभवद्भर्तुर्दृष्टार्धकुचकुड्मला ॥ १४४ ॥
काकेन कोपिता तीव्रं सा दष्टाधरपल्लवा ।
प्रियं प्रणयगर्भेण चक्षुषा क्षणमैक्षत ॥ १४५ ॥
ततः प्रियापरिभवादस्थानेऽप्यात्तसंभ्रमः ।
इषीकामभिमन्त्र्याशु चिक्षेप रघुनन्दनः ॥ १४६ ॥
संतर्जितोऽप्यसंत्रासः पक्षी लब्धवरोऽथ सः ।
अस्त्रेणाभिसृतो वेगाद्बभ्राम भुवनत्रयम् ॥ १४७ ॥
अनवाप्तपरित्राणः स गत्वा तु तपोवनम् ।
पादपीठार्पितशिरा रामं शरणमाययौ ॥ १४८ ॥

ततो रामगिरा दत्त्वा स तदस्त्राय लोचनम् ।
चक्षुषा रक्षितस्तेन काणः काको ययौ जवात् ॥ १४९ ॥
इति काकाक्षिशातनम् ॥ ३ ॥

अथोच्चचार गम्भीरगजगर्जितमन्थरः ।
मन्थाद्रिजलधिधीरो[1] घोरः पटहनिःस्वनः ॥ १५० ॥
हयहेषाविशालेन घनघोषानुकारिणा ।
कुपितास्तेन शब्देन समुत्पेतुर्मृगेश्वराः ॥ १५१ ॥
स ययौ विपुलः शब्दो विद्याधरमहीभुजाम् ।
त्रस्तकान्तापरिष्वङ्गहर्षपीयूषवर्षताम् ॥ १५२ ॥
उच्चैरुच्चकुचाभोगविनश्यत्त्रिवलीयुताः ।
किमेतदिति संभ्रान्ताः किंनर्यो ददृशुर्दिशः ॥ १५३ ॥
अकाण्डे कोऽयमुच्चण्डप्रलयारम्भविभ्रमः ।
इत्येव चुक्रुशुस्तत्र पक्षिकोलाहलैर्द्रुमाः ॥ १५४ ॥
सैन्यसंमर्दपिशुनं शब्दमाकर्ण्य राघवः ।
तरुमारुह्य पश्यैतदिति प्रोवाच लक्ष्मणम् ॥ १५५ ॥
सालं पुष्पितमारुह्य सौमित्रिस्तस्य शासनात् ।
ददर्श चामरच्छत्रच्छन्नां भरतवाहिनीम् ॥ १५६ ॥
निर्गीर्णा इव जीमूतसंघातमलिनैर्गजैः ।
विलोक्य सर्वाः ककुभो रामं सौमित्रिरब्रवीत् ॥ १५७ ॥
अयं शस्त्रास्त्रकल्लोलसुभटग्राहघस्मरः ।
सैन्याम्बुधिरपर्यासः कानने परिसर्पति ॥ १५८ ॥
मत्तो विभवमानेन नूनं भरत आगतः ।
यदसौ दृश्यते दूरात्कोविदारो रथे ध्वजः ॥ १५९ ॥
प्राज्यं राज्यमवष्टभ्य कैकेयीतनयः स्वयम् ।
कण्टकोन्मूलनायैव नूनं त्वां योद्धुमागतः ॥ १६० ॥

---

१. 'ध्वानधीरः स्यन्दन' ख.

अहो बतातिवक्रेण नयेनामिषदर्शिना ।
बडिशेनेव शफरः कृष्टोऽयं न भविष्यति ॥ १६१ ॥
ऐश्वर्यस्थैर्यकामस्य मद्विसृष्टाः प्रमादिनः ।
भवन्त्वस्योपदेष्टारो निपातगुरवः शराः ॥ १६२ ॥
श्रुत्वेति कोपततस्य लक्ष्मणस्याग्रजो वचः ।
उवाच भरते शङ्कां सौमित्रे मा वृथा कृथाः ॥ १६३ ॥
भक्तिमान्भरतो नित्यमस्मासु विशदाशयः ।
धीरस्य तस्य सद्वृत्तं न नाम परिवर्तते ॥ १६४ ॥
कुले महति जातानां धीमतां वृद्धसेविनाम् ।
न भवन्ति विकारिण्यः संपदो हि महात्मनाम् ॥ १६५ ॥
प्राप्तो द्रष्टुमसावस्मान्न वाच्यः परुषं त्वया ।
विकारेऽप्यपरित्राणमाधुर्यं हि सतां वचः ॥ १६६ ॥
राज्ये यदि तवाप्यस्ति कोऽप्यादरलवः स्वयम् ।
ममाज्ञया त्यजत्येव भरतस्तदसंशयम् ॥ १६७ ॥
राघवेणेत्यभिहिते गुरुलज्जानताननः ।
अयाचतेव विवरं प्रवेष्टुं लक्ष्मणः क्षितिम् ॥ १६८ ॥
अवतीर्य स्वशालाग्रात्पार्श्वे भ्रातुरधोमुखः ।
न्यषीददिति तापान्तश्चिन्तयन्वाक्यलाघवम् ॥ १६९ ॥

इति लक्ष्मणकोपः ॥ ४ ॥

भरतोऽपि निजां सेनां विनिवेश्य यथोचितम् ।
सुमन्त्रशत्रुघ्नसखः प्रससर्पाग्रजोत्सुकः ॥ १७० ॥
जननीजनमादाय भवता मम पृष्ठतः ।
आगन्तव्यमिति प्राह सर्वमिष्टमभाषत ॥ १७१ ॥
उपसृत्याथ रुचिरं स दृष्ट्वा भ्रातुराश्रमम् ।
लम्बमानायुधधरं बभूवोद्बाष्पलोचनः ॥ १७२ ॥
सानुजं राममालोक्य दूराच्चीरजटाधरम् ।
मत्वा कारणमात्मानं विललापाश्रुगद्गदः ॥ १७३ ॥

जटाभृदिति दुःखेन हेतुरसीति लज्जया।
प्राप्तो मयेति हर्षेण सोऽभूदाकुलिताशयः॥ १७४॥
मन्दमन्दैर्मुहुः शोकादौत्सुक्यात्त्वरितैर्मुहुः।
स भ्रातुरन्तिकं प्राप व्रीडाविलुलितैः पदैः॥ १७५॥
रामं नत्वाश्रुसंरुद्धदृष्टिः क्ष्मालग्नशेखरः।
आर्येत्युक्त्वा निपतितो नान्यद्वक्तुं शशाक सः॥ १७६॥
तं मूर्छितं निपतितं समादाय महाभुजः।
अङ्के रामः समारोप्य बाष्पदुर्दिनवानभूत्॥ १७७॥
प्रीत्या मूर्ध्नि तमादाय पप्रच्छ स्वच्छमानसः।
दन्तांशुनिवहेनाग्रे हंसमालामिवावहन्॥ १७८॥
दिष्ट्या पश्यामि वत्स त्वां वात्सल्यप्रणयास्पदम्।
कच्चित्तातमनामन्त्र्य नागतोऽस्यजनं वनम्॥ १७९॥
कच्चित्स कुशली राजा राजश्रीरजनीविधुः।
व्योममानसहंसालीर्यस्य कीर्तिर्विराजते॥ १८०॥
कुशलिन्यो जनन्यस्ताः कच्चित्ताः कुलदेवताः।
पुरोधाः कुशली कच्चित्स मैत्रावरुणो मुनिः॥ १८१॥
रक्षितात्मा हितामात्यः कोशराष्ट्रविवर्धनः।
भृतदुर्गो मौलिबलः कच्चित्सन्मित्रवानसि[1]॥ १८२॥
कच्चित्प्राप्ताभिषेकस्य मन्त्रिणस्तव संमताः।
प्रौढराज्यप्रवहणे संप्राप्ताः कर्णधारताम्॥ १८३॥
मन्त्रः कच्चिदचपलैरामोदैरिव मारुतैः।
कीर्यते तव संमर्दी सर्वं भिन्नो भिनत्ति सः॥ १८४॥
कच्चित्सुखी प्रजाकार्यविचारपरिपन्थिनीम्।
निन्द्यां न भजसे निद्रां विवेकालोकयामिनीम्॥ १८५॥
एकोऽपि पण्डितः कच्चित्तव रक्षामणिः श्रियः।
मूर्खसङ्घभरेणेयं पृथ्वी मिथ्यैव पीड्यते॥ १८६॥

---

१. 'पि' शा०.

कच्चित्प्रयासि विदुषामुपदेशविधेयताम् ।
कच्चिदूर्णायुपूर्णेव सभा मूर्खैर्वृता न ते ॥ १८७ ॥
सदानिमित्तपिशुनाः क्रूरा दोषावलोकिनः ।
राजश्रीरजनीघूकाः खलाः कच्चिन्न ते प्रियाः ॥ १८८ ॥
दम्भारम्भसमाधाननिसङ्गनिभृता इव ।
कच्चिन्न ते त्वां मुष्णन्ति धूर्ताः श्रीसरसीबकाः ॥ १८९ ॥
कच्चिदाखुखुरोत्खातभुक्तबीजेव मेदिनी ।
सुषिरीक्रियते चौरैर्नाधिकारिगणैस्तव ॥ १९० ॥
ललभावदनाम्भोजविभ्रमभ्रमरावली ।
कच्चिन्न सक्ता दृष्टिस्ते नान्यकार्याणि पश्यति ॥ १९१ ॥
कच्चिदाकर्ण्य सुलभं लोभं परिभवास्पदम् ।
केवलं त्यक्तसत्कार्यैः कदर्यैः सह पश्यसि ॥ १९२ ॥
कच्चित्प्रजाः प्रजानाथ नोग्रदण्डेन बाधसे ।
शरणं नास्ति लोकेषु परित्राता निहन्ति चेत् ॥ १९३ ॥
कच्चिदधर्ममर्यादामुत्क्रम्यार्थान्समीहसे ।
धनं धनं कदर्याणां धर्मस्तु महतां धनम् ॥ १९४ ॥
मूढव्यसनकारिण्यो विकारिण्यः सविभ्रमाः ।
चिरं परिचिताः कस्य वेश्या इव विभूतयः ॥ १९५ ॥
श्रियो धर्मविरोधिन्यो धर्माः संपद्विनाशनाः ।
धर्मार्थोत्सादिनः कामा न भवन्ति महात्मनाम् ॥ १९६ ॥
दानं प्रजापरित्राणं यजनं धर्मरञ्जनम् ।
राज्यकल्पद्रुमस्यैता विपुलाः फलसंपदः ॥ १९७ ॥
ब्राह्मणेषु परा भक्तिः प्रभुशक्तेर्विभूषणम् ।
सा हि धर्मार्थकामानां राज्ञां रक्षामहौषधम् ॥ १९८ ॥

इति कच्चित्कम् ॥ ९ ॥

---

१. 'सदा निमित्रपि' स्यात् । 'नितरां मित्रस्य सूर्यस्य द्वेषिणः' इति व्याख्यातव्यम्.

श्रुत्वेति वचनं भ्रातुर्भरतो विगतस्पृहः ।
उवाच धर्महीनस्य न मे राज्यस्य कारणम् ॥ १९९ ॥
अहो बतातिपापस्य दृढता कियती मम ।
यस्त्वामेवंविधं दृष्ट्वा दुःसहं वक्तुमुद्यतः ॥ २०० ॥
अयोध्यां स्वयमभ्येत्य भज राज्यं क्रमागतम् ।
स ते यातः पिता स्वर्गं धर्ममार्गनिरर्गलम् ॥ २०१ ॥
अहो निन्द्यतरं जन्म मम किल्बिषकारिणः ।
योऽहं नरेन्द्रनिधने त्वत्प्रवासे च कारणम् ॥ २०२ ॥
आर्य त्वयि वनं याते शोकाग्निमिव शोणितम् ।
वसन्व्यसुरभूद्भूमौ त्वामेव विलपन्नृपः ॥ २०३ ॥
निधनेन धराभर्तुरयोध्या न विराजते ।
सुमेरुशृङ्गभङ्गेन दारितेव वसुंधरा ॥ २०४ ॥
गतेऽनन्तगुणे राज्ञि स्वर्गं मज्जति मेदिनी ।
भोगेन्द्रविपुले दोष्णि यद्यार्येण न धार्यते ॥ २०५ ॥
अधुना क्रियतामार्य वत्सलस्य पितुः क्रिया ।
प्रियपाणिच्युतं वारि वाञ्छन्ति पितरोऽधिकम् ॥ २०६ ॥
श्रुत्वेति वज्रसंपातदुःसहं राघवो वचः ।
पपात पादप इव क्षतः कूलंकषैर्जलैः ॥ २०७ ॥
स लब्धसंज्ञः शनकैरुवाचाकुलितः शुचा ।
हा नाथ क्व नु यातोऽसि त्यक्त्वास्मान्देहि नो वचः ॥ २०८ ॥
अस्मदर्थपरित्यक्तजीवितस्याधुना तव ।
ददातु नाम रामस्ते निःसंज्ञः कथमञ्जलिम् ॥ २०९ ॥
हा कीर्तिनिर्झरगिरे गुरो गुणमहोदधे ।
द्रक्ष्यामि ते क्व नु मुखं प्रियं श्रोष्यामि वा वचः ॥ २१० ॥
स पिता तव सौमित्रे वैदेहि श्वशुरस्तव ।
महीनाथो गतः स्वर्गमनाथाः सर्वथा वयम् ॥ २११ ॥

---

१. 'व्येन' शा०.

इति प्रलापमुखरे रामेऽपि धृतिसागरे ।
सावेगं रुरुधुः सर्वे प्रसरद्बाष्पनिर्झराः ॥ २१२ ॥
ततो रामं समाश्वास्य सुमन्त्रः सानुजं शनैः ।
निनाय जाह्नवीकूलं पितुर्दातुं जलाञ्जलिम् ॥ २१३ ॥
बदरेङ्गुदिपिण्याकं तत्र दर्भेषु राघवः ।
निक्षिप्योवाच निःश्वस्य ध्यायञ्जलभृताञ्जलिः ॥ २१४ ॥
इदं ते वन्यमशनं प्रसीद पृथिवीपते ।
एतदर्हा[1]ः खलु वयमेते[2]नैव यजामहे ॥ २१५ ॥
एवं ब्रुवाणः काकुत्स्थः सानुजो विहितोदकः ।
गत्वाश्रमं शुचाक्रान्तो हा तातेति वदन्मुहुः ॥ २१६ ॥
रुदतां राजपुत्राणां तत्र तेषां महास्वनम् ।
समाकर्ण्याययुः सर्वे पौरमुख्याः ससैनिकाः ॥ २१७ ॥
यथोचितेन विधिना राघवेणाभिनन्दिताः ।
निजोचितेषु देशेषु सर्वे ते समुपाविशन् ॥ २१८ ॥
अथाययुर्वशिष्ठेन सहिता राममातरः ।
पश्यन्त्यो राघवप्रीत्या राघवाध्युषितं वनम् ॥ २१९ ॥
तत्र भागीरथीतीरे रामेण विहितं पितुः ।
बदरेङ्गुदिपिण्याकं दृष्ट्वा ताः शुशुचुर्भृशम् ॥ २२० ॥
जननीजनमालोक्य वसिष्ठं चाप्युपागतम् ।
प्रणनाम निजं नाम रामः स्वयमुदाहरत् ॥ २२१ ॥
ततस्तं चरणालीनजटामण्डलमाकुलाः ।
जनन्यः पाणिकमलैर्ललाटे जगृहुर्मुहुः ॥ २२२ ॥
दृष्ट्वा शशाङ्कवदनां सीतां वल्कलधारिणीम् ।
क्षणं मुमोह कौसल्या सुमित्रा धृतविग्रहा ॥ २२३ ॥
तेषां दुःखकथासक्तचेतसां साश्रुचक्षुषाम् ।
अवश्यायकणोद्बाष्पा प्रययौ यामिनी शनैः ॥ २२४ ॥

१. 'र्हाः' शा०. २. 'तैरे' शा०.

प्रातः समुपविष्टेऽथ वशिष्ठप्रमुखैः सह ।
रामे सभार्ये भरते वक्तुकामे पुरःस्थिते ॥ २२५ ॥
किं वक्ष्यतीति निःशब्दे सोत्कण्ठे स्तिमिते जने ।
निवातनिस्तरङ्गस्य जलधेरुपमां[1] दधे ॥ २२६ ॥
उवाच भीरुर्गम्भीर[2]जलधिध्वानधीरया ।
गिरा गुरुजनानम्रो भ्रातरं भरतः शनैः ॥ २२७ ॥
नेयमार्यस्य पुरतो मम वक्तुं प्रगल्भता ।
सहजप्रणयस्यायमुत्सेको भक्तिसंभवः ॥ २२८ ॥
यशःशेषे नरपतौ निःशेषै[3]गुणमण्डने ।
अशेषेयं वसुमती वोढारं त्वां समीहते ॥ २२९ ॥
स ददौ यदि मे राज्यं राजा योषिद्वशीकृतः ।
तत्कथं स्वस्थमनसो ममापि मतिविप्लवः ॥ २३० ॥
तव क्रमागतं राज्यं का स्पृहा राम मादृशाम् ।
कथं न स्कन्धमाधत्ते दिक्कुञ्जरपदे मृगः ॥ २३१ ॥
सत्यं त्वत्पादसेवैव राज्यं विरजसो मम ।
न राज्यं प्राप्तुमर्होऽहं सोमं शूद्र इवाध्वरे ॥ २३२ ॥
लोकप्रदीपे कालेन शान्ते तस्मिन्महीपतौ ।
आर्य प्रजाः प्रतीक्ष्यन्ते सूर्यस्येव तवोदयम् ॥ २३३ ॥
राज्यं यदि परित्यक्तं त्वया तातस्य शासनात् ।
मयोपनीतं दासेन तदिदं प्रतिगृह्यताम् ॥ २३४ ॥
प्रसीद पालय विभो नाथहीनां महीमिमाम् ।
विपदं विसरत्येष जनो राजवियोगजाम् ॥ २३५ ॥
भरतेनेत्यभिहिते समस्तजनसंमते ।
रामः सत्यसुधां दन्तत्विषा वर्षन्निवाभ्यधात् ॥ २३६ ॥
संचयानां क्षयोऽवश्यं निपातोऽवश्यमुन्नतेः ।
सङ्गानां विरहोऽवश्यमवश्यं मृत्युरायुषः ॥ २३७ ॥

१. 'मा' शा०. २. 'मग' शा०. ३. 'षे' शा०.

धनं विभूतयो योगाः प्रीतयः प्रियसंगमाः।
आयूंषि च पतन्त्येव क्षयचक्रे शरीरिणाम् ॥ २३८ ॥
स्वभाव एष भावानां यदभावातिपातिनः।
आयुषश्च स्वभावोऽयं सर्वथा यद्विपद्यते ॥ २३९ ॥
न मे कश्चिदुपायोऽस्ति शक्तिः संक्षयदीक्षिता।
अधो विधीयते येन कालस्याग्नेरिवोद्धतिः ॥ २४० ॥
तस्यास्य तव चासक्तं ममान्येषामथात्मनः।
क्षयं सर्वात्मना ज्ञात्वा सन्तः स्वस्थवदास्थिताः ॥ २४१ ॥
अभावावधयो भावा निधनावधि जीवितम्।
अविवेकस्त्वनवधिर्येनायं जायते भ्रमः ॥ २४२ ॥
धर्मोपदिष्टेन पथा यातः स सुकृती दिवम्।
न नः शोच्यः पिता यस्य यशःपुण्यमिवाक्षयः ॥ २४३ ॥
मया तु शासनं तस्य न त्याज्यं सत्यवर्तिना।
को हि सत्यधनो नाम सत्यमेव समुत्सृजेत् ॥ २४४ ॥
राघवेणेत्यभिहिते सत्यपारं तितीर्षुणा।
उवाच साश्रुनयनः शोकार्तो भरतस्तथा ॥ २४५ ॥
आर्य प्रसीद पापस्य ममाविज्ञातपातिनः।
मां समुद्धर कैकेय्या क्षिप्तं किल्बिषकर्दमे ॥ २४६ ॥
ईप्सितं शासनं कार्यं गुरोरिति जनश्रुतिः।
प्राणत्यागप्रमाणं तु नेष्टं ते गमनं पितुः ॥ २४७ ॥
कुटिलोऽयमसत्सेव्यः पन्थास्तव तपस्विना।
जनत्राणप्रणयिनी यदियं क्षत्रसंततिः ॥ २४८ ॥
अथ चेद्धेतुनिर्बन्धः प्रजानामेव पातकैः।
अरण्ये विवृतास्येव तदहं त्वामनुव्रतः ॥ २४९ ॥
इति ब्रुवाणमसकृद्भरतं दृढनिश्चयम्।
अपूजयञ्जनाः सर्वे कैकेय्याद्याश्च मातरः ॥ २५० ॥

१. 'भो' शा०. २. 'व' शा०. ३. 'र्त्तो' शा०. ४. 'त्वद्ग' शा०. ५. 'चराम्ये' शा०.

तमब्रवीत्सत्यसंधो रामः काममलुप्तधीः ।
उचितं भा[1]षसे भ्रातः श्रुतस्याभिजनस्य च ॥ २५१ ॥
किं तु राजा गुरुर्वृद्धः सत्यपाशवशीकृतः ।
पालने नियमस्यास्य प्रमाणीक्रियते मया ॥ २५२ ॥
यथाहं शासनात्तस्य त्यक्त्वा राज्यं वने स्थितः ।
तथा त्वयापि कर्तव्यं राज्यं भ्रातर्ममाज्ञया ॥ २५३ ॥
वरप्रदानसत्येन [2]वृद्धस्य पृथिवीपतेः ।
असद्वादसत्यमात्रेण मा कृथाः सत्यविप्लवम् ॥ २५४ ॥
भज राज्यं क्रमायातं प्रजानामेव भूतये ।
क्रियतां सत्यसाहाय्यं परलोकगतौ पितुः ॥ २५५ ॥
एतदर्थं समीहन्ते पितरो बहुपुत्रताम् ।
यद्येकोऽपि गयां गत्वा तिमिरात्तारयिष्यति ॥ २५६ ॥
सत्यं रक्ष पितुः पुत्र सत्यं सत्ययशोनिधेः ।
सत्यं तीर्थतपोदानयज्ञेभ्योऽपि विशिष्यते ॥ २५७ ॥
इति रामस्य वदतो व्यथिते भरते पुनः ।
शल्यविद्ध इवावाप्ते मर्मणि क्षिप्रमूढताम् ॥ २५८ ॥
प्रजानां हितमाशंसं जाबालिरवदन्मुनिः ।
प्रतिज्ञापाशनिर्बन्धं रामस्य च्छेत्तुमुद्यतः ॥ २५९ ॥
अहो नु भ्रमते नूनं परतन्त्रस्य ते मतिः ।
शुष्कक्रियावासनया सूक्ष्ममर्थं न पश्यसि ॥ २६० ॥
जन्मोपकरणं माता जन्मोपकरणं पिता ।
प्रीतिमात्रोपकरणं सुहृत्स्वजनबान्धवाः ॥ २६१ ॥
ममायमहमस्येति संबन्धो[3]ऽयं निरर्थकः ।
आत्मैव सुखदुःखानां भोक्ता नान्यः शरीरिणाम् ॥ २६२ ॥
संसारवर्त्म पान्थानामनिशं परिसर्पताम् ।
देहिनां पितरो नाम जन्ममात्रप्रति[4]भुवः ॥ २६३ ॥

---

१. 'पितं राम्यं' ख. २. 'व' शा०. ३. 'मन' शा०. ४. 'श्रयः' शा०.

कथं दशरथस्यान्ते राज्यं त्यजसि निःसुखः ।
तव तस्य च संबन्धो नेदानीं भिन्नवर्त्मनोः ॥ २६४ ॥
अस्मिन्नल्पसुखे नित्यं बहुदुःखे च जीविते ।
सुखलेशं समादाय वर्तते कुशलः किल ॥ २६५ ॥
धर्नाशौचशरीराणि निघृष्यन्ते यथा यथा ।
तथा तथा भृशं तेभ्यो दुःखमेव प्रजायते ॥ २६६ ॥
यथा कण्टकशाखादि त्यज्यते पुष्पिताद्वनात् ।
धर्मपुष्पार्थिना तद्वत्संत्याज्यः क्लेशविस्तरः ॥ २६७ ॥
धर्मस्कन्धः प्रवृद्धोऽयं कुटिलो ह्यतिकर्कशः ।
सन्तस्तस्मिन्न सज्जन्ति हेलया तत्फलेप्सवः ॥ २६८ ॥
धर्मतन्त्रमविज्ञाय निर्बन्धादात्मपीडया ।
पाठमात्ररता एव न मूर्खाः सुखभागिनः ॥ २६९ ॥
बहुदानसुखे राज्ये जनत्राणमहाफले ।
वाङ्मात्रसंयमैः कस्माद्विमुखोऽसि महामते ॥ २७० ॥
समन्युर्लक्ष्यते कस्मान्न मयोक्तोऽस्ति नास्तिकम् ।
धर्मं भजन्ते कुशला विवेश्य गुरुलाघवम् ॥ २७१ ॥
इति जाबालिवचनं निशम्य रघुनन्दनः ।
उवाचान्तर्लसत्कोपो मुनिगौरवयन्त्रितः ॥ २७२ ॥
भगवन्नतिवात्सल्यादस्माकं स्निग्धचक्षुषा ।
उपपत्त्येव घटितं केवलं भवतोदितम् ॥ २७३ ॥
सत्यच्युतेनाशुचिना किं मनुष्येण कारणम् ।
पात्रेणेवास्तदीपेन कायेनेव गतासुना ॥ २७४ ॥
पुंसः सत्यविहीनस्य सत्त्वभ्रष्टस्य किं श्रिया ।
अन्यस्य चन्द्रकान्त्येव मालयेव गतायुषः ॥ २७५ ॥
राजा चेद्धर्ममर्यादां लोभादुत्क्रम्य वर्तते ।
उन्मूलोपप्लवेनैताः सर्वथा निहताः प्रजाः ॥ २७६ ॥

१. 'र्म' शा०.

वैराग्यमिव वृद्धानामौचित्यं महतामिव ।
शुचिशीलमिवार्याणां सत्यं राज्ञां विभूषणम् ॥ २७७ ॥
न लोभात्सत्यमुद्द्रष्टुं[1] भगवन्नहमुत्सहे ।
प्राप्ता अपि विनश्यन्ति सत्यहीनस्य संपदः ॥ २७८ ॥
तरङ्गभङ्गुरा भोगाः कार्पण्यमलिनं धनम् ।
कल्पान्तस्थायि धवलं यशः सत्यं च देहिनाम् ॥ २७९ ॥
कृतास्पदानि निम्नेषु न तिष्ठन्त्युन्नते क्वचित् ।
अव्ययप्रलयान्त्येव[2] सलिलानि धनानि च ॥ २८० ॥
सन्तः संतोषविशदा व्रजन्तः सत्यवर्त्मना ।
धनैरधमसंधार्यैर्विदार्यन्ते न धीधनाः ॥ २८१ ॥
राज्यं विरजसामेव शोभते सत्यवादिनाम् ।
असत्यपङ्कमलिना विभूतिः कोपयुज्यते ॥ २८२ ॥
इति ब्रुवाणमसकृद्वसिष्ठस्तपसां निधिः ।
उवाच रामं वात्सल्यादिक्ष्वाकूणां परायणम् ॥ २८३ ॥
प्रजाहितार्थमुचितं राम जाबालिनोदितम् ।
न हि जानाति धर्मस्य गतिमेष सनातनीम् ॥ २८४ ॥
मनुवंशक्रमायातं त्याज्यं राज्यं निजं न ते ।
रघूणां ज्येष्ठभागिन्यः सर्वदैव विभूतयः ॥ २८५ ॥
कुलाचारं समुत्सृज्य न स्थितिं हातुमर्हसि ।
जन्म प्रजापरित्राणपरतन्त्रं हि भूभुजाम् ॥ २८६ ॥
वेदाचारव्रता विप्राः सन्तः सच्चरितव्रताः ।
कुरु[3] मे वचनं राम जनन्याश्च कुलोचितम् ॥ २८७ ॥
न हि मां पितुराचार्यमवमन्तुमिहार्हसि ।
वसिष्ठस्येति वचनं रामो दृढविनिश्चयः ॥ २८८ ॥
निशम्य सत्यं न त्याज्यं मयेत्यूचे पुनः पुनः ।
ततो जगाद भरतः सुमन्त्रं व्यथितेन्द्रियः ॥ २८९ ॥

---

१. 'स्रष्टुं' शा०. २. 'न्ये' शा०. ३. 'भर्तृसेवाव्रता नार्यो भूपालाः पालनव्रताः' शा०.

कुशैः कल्पय मे शय्यां तपसार्यः प्रसीदति।
निराहारो निरालम्बस्त्यक्तकर्मा निराश्रयः॥ २९०॥
भवाम्येष वने मौनी यावदार्यः प्रसीदति।
अथ वा भजताभार्यो राज्यं ज्येष्ठक्रमागतम्॥ २९१॥
अहं तु पालयाम्यस्य वनवासव्रतं स्वयम्।
सुमन्त्रमभिधायेति रामवक्त्रविलोकिनम्॥ २९२॥
कुशैरास्तरणं भूमौ चकार भरतः स्वयम्।
तमुवाचाग्रजो भ्राता न तवैतत्कुलोचितम्॥ २९३॥
ब्राह्मणो हि दहत्येव प्रायः शय्याश्रितो जगत्।
गच्छ मद्वचसा वत्स पाहि धर्मरतः प्रजाः॥ २९४॥
मा भवन्तु कथाशेषा रघूणां कुलसंपदः।
रामस्येति वचः श्रुत्वा भरतस्य च निश्चितम्॥ २९५॥
भरतप्रेरिताः सर्वे पौरा रामं ययाचिरे।
ततो भाविकथाभिज्ञविमलज्ञानलोचनाः॥ २९६॥
ऊचुर्मुनीन्द्रा भरतं रामं मा दुर्ग्रहं कृथाः।
रामः सत्यप्रतिज्ञोऽस्तु राज्यं च भजतां भवान्॥ २९७॥
सत्यव्रतपरिभ्रष्टा क्व दृष्टा रघुसंततिः।
इत्युक्ते मुनिगन्धर्वसिद्धकिंनरचारणैः॥ २९८॥
बभूव भरतः क्षिप्रं वज्रेणेव समाहतः।
सोऽपतत्पादयोर्भ्रातुः प्रसीदेति पुनः पुनः॥ २९९॥
वात्सल्यस्याश्रुभिः कुर्वन्नभिषेकक्रिया इव।
रामस्तमङ्कमारोप्य बभाषे यशसां निधिः॥ ३००॥
त्वत्स्नेहादप्यहं वत्स न सत्यं त्यक्तुमुत्सहे।
त्वं तु सत्येन महता कुलधर्मेण चामुना॥ ३०१॥
सप्तार्णवप्रणयिनीं शक्तः पालयितुं महीम्।
गच्छ मद्वचसायोध्यां वैक्लव्यं मा वृथा कृथाः॥ ३०२॥

---

१. 'म्यद्य' शा०. २. 'तपसां' शा०.

राघवेणेत्यभिहिते वशिष्ठः पुनरभ्यधात्।
कुलं कर्म च संकीर्णं न येषां दोषशीकरैः।
न तेषां जायते जातु कृच्छ्रेऽप्यनुचिता मतिः॥ ३०३॥
न लोभादनुरागाद्वा मर्यादां रघुनन्दनः।
महायशो भिनत्त्येष वेलामिव महोदधिः॥ ३०४॥
भरत भ्रातुरादाय पादुके पालय प्रजाः।
दैवतं सर्वकार्येषु देह्यस्मै राम पादुके॥ ३०५॥
इत्युक्ते मुनिना भ्रातुः समादाय स पादुके।
जननीभिः सह प्रायात्सानुगो भरतः शनैः॥ ३०६॥
इति पादुकादानम्॥ ६॥
पूज्यमानो मुनिगणैरौचित्यगुणगौरवात्।
स जाह्नवीं समुत्तीर्य पुरीं प्राप्य त्रिभिर्दिनैः॥ ३०७॥
स दृष्ट्वा निर्जनां दूरादयोध्यां विधुताशयः।
उवाच सारथिं गुप्तनिःश्वासग्लपिताधरः॥ ३०८॥
अहो नु निरलंकारा नववैधव्यधूसरा।
इयं तातस्य नगरी शोकाक्रान्ता न शोभते॥ ३०९॥
लक्ष्मीविलासनलिनी सेयमानन्दकौमुदी।
वि[1]योगास्पदतां दू[2]रं तस्यैव स्वेच्छया विधेः॥ ३१०॥
कार्पण्यमलिनीव श्रीरसत्यमलिनीव वाक्।
पुरीयं दृश्यते शून्या मात्सर्यमलिनेव धीः॥ ३११॥
विभूतिर्व्यसनेनेव दैन्येनेवाभिमानिता।
प्रीतिरप्रणयेनेव शोकेनेयं समाहिता॥ ३१२॥
अत्र विस्रम्भनिभृतामन्ये वन्यमृगद्विपाः।
स्वजातिदर्शनप्रीतिं लभन्ते चित्रवेश्मसु॥ ३१३॥
निर्भग्नलम्बमानाब्जा ह्रियेवाधोमुखी स्थिता।
कम्पते केलिसरसी वनमातङ्गदूषिता॥ ३१४॥

---

१. 'विपदास्पदतां' शा०. २. 'याता दुरन्तस्येच्छया' शा०.

अलक्तकार्द्रललनाचरणाङ्कासु भूमिषु ।
दृश्यते व्याघ्रपदवी सिक्ता हरिणशोणितैः ॥ ३१५ ॥
प्रत्यग्राग्रखुरोद्धूतकीर्णकुट्टिमचूर्णकात् ।
भित्त्यग्रविवरात्सर्पाः कृष्यन्ते वनबर्हिभिः ॥ ३१६ ॥
नाट्यवेश्मनिषण्णानां सिंहानां गलगर्जितैः ।
क्रियते घोरगम्भीरमुरजास्फालनभ्रमः ॥ ३१७ ॥
हेमरत्नगवाक्षेषु तन्तुजालवितानके ।
तूर्णनाभैर्विरचिते शेरते घनरेणवः ॥ ३१८ ॥
दृष्ट्वा बिम्बितमात्मानं कुपितैर्वनवारणैः ।
दन्ताघातस्फुलिङ्गाङ्काः क्रियन्ते मणिभित्तयः ॥ ३१९ ॥
रामप्रवासपिशुनां नृपहीनामिमां पुरीम् ।
द्रष्टुं विषादजननीं जननीमिव नोत्सहे ॥ ३२० ॥
नन्दिग्रामे करोम्येष राघवागमनावधि ।
भूभारचिन्ता हृदये मौलौ मूर्ध्नि च पादुके ॥ ३२१ ॥
अभिधायेत्ययोध्यायां निधाय जननीजनम् ।
मुनीनां संमतं प्रायान्नन्दिग्रामं स सानुजः ॥ ३२२ ॥
जटी वल्कलभृत्तत्र ब्रह्मचारी फलाशनः ।
उवाह वसुधां वीरः पूजयन्रामपादुके ॥ ३२३ ॥
सिंहासने स विन्यस्य मणिकाञ्चनपादुके ।
सततं सकलास्थाने सिषेवे छत्रचामरैः ॥ ३२४ ॥

इति भरतव्रतग्रहणम् ॥ ७ ॥

अथ रामोऽपि संचिन्त्य चिरं लक्ष्मणमब्रवीत् ।
भुक्तं वनमिदं त्यक्त्वा गच्छामः काननान्तरम् ॥ ३२५ ॥
विमलत्वाद्वनस्यास्य संचारात्पिशिताशिनाम् ।
शनकैर्मुनयः सर्वे वनमन्यमितो गताः ॥ ३२६ ॥
इदं च भरतानीकं मदस्यन्दनवाजिभिः ।

---

१. 'गजस्यन्दन-' शा०.

मृदितं तच्छकृन्मूत्रपरिक्लिन्नतृणं वनम् ॥ ३२७ ॥
उक्त्वेति सीतानुगतो रामः सौमित्रिणा सह ।
पवित्रचरितस्यात्रेर्जगामाश्रममश्रमः ॥ ३२८ ॥

इति भरतपर्व ॥ ८ ॥

तत्र तं तेजसां राशिमृषिं विरचिताञ्जलिः ।
प्रणनाम कृतातिथ्यस्तेन स्निग्धाभिभाषितः[1] ॥ ३२९ ॥
पत्नीं पतिव्रतां तस्य वृद्धसिद्धनमस्कृताम् ।
अनसूयां गिरा पत्युर्ववन्दे जनकात्मजा ॥ ३३० ॥
दशवर्षसहस्राणि यया तीर्थे कृतं तपः ।
फलमूलान्यनावृष्ट्यां जह्नुकन्यां च यासृजत् ॥ ३३१ ॥
दशरात्रायतां रात्रिं चक्रे देवहिताय या ।
तां प्रणम्य व्रतक्षामां जराशुभ्रशिरोरुहाम् ॥ ३३२ ॥
पुण्यां पुण्यार्जितामत्रेर्मूर्तामिव तपःश्रियम् ।
जहर्ष जानकी तस्याश्चरित्रेऽभ्यधिकादरा ॥ ३३३ ॥
अनसूया जगादाथ प्रणतां तां पुरःस्थिताम् ।
शीलव्रतपताकेव कम्पमाना जरावशात् ॥ ३३४ ॥
दिष्ट्या पुत्रि त्वया प्राप्तं सतीव्रतपवित्रितम् ।
सद्यशस्त्रिदशश्लाघ्यं वने पत्युः सपर्यया ॥ ३३५ ॥
नातः परतरं किंचित्कुलस्त्रीणां परं व्रतम् ।
यत्सदा भक्तिपूतेन मनसा भर्तृसेवनम् ॥ ३३६ ॥
संमुखं निहताः शूरा ज्ञाननिष्ठास्तपस्विनः ।
प्रयान्ति परमं धाम भर्तृभक्ता हि योषितः ॥ ३३७ ॥
प्रजानां दैवतं राजा पितरौ दैवतं सताम् ।
विप्राणां दैवतं वह्निर्नारीणां दैवतं पतिः ॥ ३३८ ॥
इयं सुधामयी कान्तिरिदं लीलामयं वचः ।
भर्तृभक्तिप्रणयिना शीलेन तव शोभते ॥ ३३९ ॥

---

१. 'भाषिणा' शा०.

गौरीव चन्द्रचूडस्य रोहिणीवामृतत्विषः।
संमता ह्यसि रामस्य कमला श्रीपतेरिव ॥ ३४० ॥
सुरार्हमपरिम्लानं माल्यं वस्त्रविभूषणम्।
दिव्यं विलेपनं चेदं गृहाणाश्लिष्टरूपदम् ॥ ३४१ ॥
इत्युक्त्वास्यै ददौ दिव्यं माल्याम्बरविभूषणम्।
प्रणता प्रीतिदायं च प्रतिजग्राह जानकी ॥ ३४२ ॥
विस्रम्भप्रीतिवात्सल्यान्मुनिपत्न्याथ जानकी।
पृष्टा जन्मकथामूचे सुधामधुरवादिनी ॥ ३४३ ॥
पुरा जनकभूपालो मेनकां नाककामिनीम्।
दृष्ट्वा तत्संगमे पुत्रलाभाय विदधे मतिम् ॥ ३४४ ॥
जाते मनोरथे तस्य वागुवाचाशरीरिणी।
अयोनिजमपत्यं ते भविष्यत्यचिरादिति ॥ ३४५ ॥
ततः क्रतुक्रियारम्भे विपुले तस्य भूपतेः।
हेमलाङ्गलकृष्टायाः संजाताहं सुता भुवः ॥ ३४६ ॥
कालेन वर्धमानायां मयि पित्रा स्वयंवरः।
धनुरारोपणपणः कल्पितो नृपसंगमे ॥ ३४७ ॥
अशक्तास्ते नृपा रुद्रचापारोपणकर्मणि।
मयि शौर्याभिमाने च ययुर्भग्नमनोरथाः ॥ ३४८ ॥
ततो यदृच्छयाप्तेन धनुषो भङ्गकारिणा।
प्राप्ताहमार्यपुत्रेण सेवासौभाग्यभागिनी ॥ ३४९ ॥
मुनिपत्नी निशम्यैतत्प्रीत्या प्रोवाच जानकीम्।
मधुरं ते वचः पुत्रि न तृप्तिं विंदधाति[1] मे ॥ ३५० ॥
आसन्नेयं शशिमुखी चन्द्रिका रुचिराम्बरा।
तारांशुहारा त्वमिव श्यामा कुमुदहासिनी ॥ ३५१ ॥
गम्यतामन्तिकं पत्युरित्युक्त्वा विरराम सा।
सीतापि प्रेयसः पार्श्वं जगाम प्रणिपत्य ताम् ॥ ३५२ ॥

---

१. 'विददाति' शा०.

विलोक्य राघवः सीतां भूषितां दिव्यभूषणैः ।
रत्नकल्लोलशबलां पीयूषलहरीमिव ॥ ३५३ ॥
पीताम्बरवतीं पुण्यरेणुव्याप्तां लतामिव ।
विस्मयौत्सुक्यहर्षाणां वश्यतां तुल्यमाययौ ॥ ३५४ ॥

इत्यत्रिदर्शनम् ॥ ९ ॥

ततः प्रातः प्रणम्यात्रिं हृष्टो रामस्तदाज्ञया ।
विवेश दण्डकारण्यं सानुजो दयितासखः ॥ ३५५ ॥
मुनिभिर्विहितातिथ्यो भूपातिशयविस्मितैः ।
उवाच वासवसमः स तत्र त्रिदिवोपमे ॥ ३५६ ॥
तमूचुर्मुनयो ज्ञात्वा रामं विश्रुतविक्रमम् ।
त्वद्वीर्यगुप्तमधुना निर्विघ्नं तात नस्तपः ॥ ३५७ ॥
वर्णाश्रमाणां गुरवस्तपस्त्राणात्तपस्विनाम् ।
त्वद्विधाः पृथिवीपाल हेलया फलभागिनः ॥ ३५८ ॥
इत्युक्त्वा मुनिभिः प्रीत्या पूजितो रघुनन्दनः ।
स्थित्वा तत्र निशामेकां वनं प्रातर्व्यगाहत ॥ ३५९ ॥
स वीरः सह जानक्या व्रजन्धन्वी सलक्ष्मणः ।
ददर्श कज्जलश्यामं निशीथमिव राक्षसम् ॥ ३६० ॥
व्याजृम्भि पिङ्गलश्मश्रुप्रभापरिकराननम् ।
खद्योतापूर्णपर्यन्तगुहागेहमिवाचलम् ॥ ३६१ ॥
मलिनेनातिमहता घनशोणितवर्षिणा ।
निजेन पातकेनेव संवीतं गजचर्मणा ॥ ३६२ ॥
दीप्तशीलिशिखप्रान्तप्रोतकेसरिकुञ्जरम् ।
अकालप्रलयारम्भमिव भूतभयंकरम् ॥ ३६३ ॥
नासापुटकुटीनिर्यन्निःश्वासप्रलयानिलैः ।
कुर्वाणं फुल्लसालानां कम्पातङ्ककदर्थनाम् ॥ ३६४ ॥
तं वीक्ष्य चकिता सीता लोलैरालोकितैर्दिशाम् ।
चकार हरिणीनेत्रवर्गसर्गमिवासकृत् ॥ ३६५ ॥

सा भयोद्भ्रान्तनयनभ्रमद्भ्रमरविभ्रमा ।
लतेव मारुतावर्तवलिता पतिमैक्षत ॥ ३६६ ॥
राक्षसोऽपि भृशं क्रुद्धः शब्देनापूरयन्दिशः ।
दोर्भ्यामादाय वैदेहीं राघवाभिमुखोऽवदत् ॥ ३६७ ॥
धन्विनौ जटिलौ चित्रं विपरीतव्रतौ युवाम् ।
भक्ष्यौ मे विधिनादिष्टौ स्त्रीसहायौ प्रमादिनौ ॥ ३६८ ॥
दुर्बला मुनयो यत्र दुर्जया यत्र राक्षसाः ।
लज्जैव योषितो यत्र धनुषश्च परिग्रहः ॥ ३६९ ॥
इयं ते ललिता योषिन्मुनिमानसहारिणी ।
प्रमत्तस्येव राजश्रीः प्रसह्य ह्रियते मया ॥ ३७० ॥
राक्षसोऽहं विराधाख्यो विराधितजगत्त्रयः ।
विश्रुतो मुनिमांसादः काननेऽस्मिन्कृतास्पदः ॥ ३७१ ॥
इति संरम्भसावेगं ब्रुवाणे पिशिताशने ।
उवाच लक्ष्मणं रामः प्रियापरिभवार्दितः ॥ ३७२ ॥
सुता जनकराजस्य विवृद्धान्तःपुरे सती ।
पश्य लक्ष्मण मे पत्नी कृष्यते घोररक्षसा ॥ ३७३ ॥
इति भ्रातुर्वचः श्रुत्वा सौमित्रिः प्रत्यभाषत ।
संरम्भः कोऽयमार्यस्य दासे तव पुरः स्थिते ॥ ३७४ ॥
शरान्कोपाङ्कुराकारानित्युक्त्वाप्राहिणोत्खरान् ।
ये भित्त्वा राक्षसं घोरं रक्ताङ्का विविशुः क्षितिम् ॥ ३७५ ॥
विराधोऽप्यधिकं क्रुद्धः शूलं कालानलोल्बणम् ।
लक्ष्मणोरसि चिक्षेप रामस्तच्चाकरोद्द्विधा ॥ ३७६ ॥
शराभ्यां राक्षसं भित्त्वा शूलं शूलं दिवौकसाम् ।
तृतीयेनास्य चिच्छेद हृदि जीवितबन्धनम् ॥ ३७७ ॥
स बाणभिन्नहृदयः पतन्भुवि निशाचरः ।
जगाद रुधिरोद्गारवदनो गद्गदाक्षरः ॥ ३७८ ॥

---

१. 'मयि' शा०. २. 'विगलद्' ख.

शतह्रदाया जातोऽहं विराधो नाम राक्षसः ।
वीर त्वयाद्य निहतः शापान्मुक्तस्तमोमयात् ॥ ३७९ ॥
पुराहं तुम्बुरुर्नाम गन्धर्वो विभवोन्मदः ।
रम्भासक्तः कुबेरेण शप्तस्तदभिलाषिणा ॥ ३८० ॥
त्वत्तो वधावधिः शापः स चायं क्षपितो मया ।
स्वस्ति तेऽस्तु व्रजाम्येष त्रिदिवं त्वत्प्रसादतः ॥ ३८१ ॥
अवटे क्षिप मे कायं संस्कारो ह्येष रक्षसाम् ।
शरभङ्गमितो गत्वा पश्य श्रेयःपदं मुनिम् ॥ ३८२ ॥
इतो योजनमुत्क्रम्य सार्धं तस्याश्रमस्थितिः ।
इत्युक्त्वा लक्ष्मणाक्षिप्तशरीरः स दिवं ययौ ॥ ३८३ ॥

इति विराधवधः ॥ १० ॥

हत्वा विराधं काकुत्स्थः परिष्वज्य च वल्लभाम् ।
लक्ष्मणानुगतो वीरः शरभङ्गाश्रमं ययौ ॥ ३८४ ॥
अस्मिन्नवसरे-शक्रः स्यन्दनेनाग्निवर्चसा ।
शरभङ्गं समभ्येत्य बभाषे त्रिदशैः सह ॥ ३८५ ॥
भगवन्पूततपसस्तव स्वाधीनतां गताः ।
सर्वे सुकृतिनां लोका ब्रह्मणः पदमाप्नुहि ॥ ३८६ ॥
इत्युक्त्वा राममायान्तं दूरादालोक्य सानुजम् ।
सहस्रनेत्रस्त्रिदशानुद्धर्षविवशोऽवदत् ॥ ३८७ ॥
अनेन सुमहत्कार्यं सुरकार्यं यशस्विना ।
संपूर्णकृत्यं कालेन द्रक्ष्याम्येनमकिल्बिषम् ॥ ३८८ ॥
इत्युक्त्वा मुनिमामन्त्र्य देवैः सह शचीपतिः ।
दिवमाचक्रमे कुर्वन्प्रभाप्रावरणा दिशः ॥ ३८९ ॥
रामोऽपि सानुगं दूरात्प्रयान्तं वीक्ष्य वज्रिणम् ।
प्रणनाम समभ्येत्य शरभङ्गं कृताञ्जलिः ॥ ३९० ॥
प्रस्थितो ब्रह्मसदनं गन्तुं सोऽपि महामुनिः ।
प्रणयात्कर्तुमातिथ्यं राघवाय व्यलम्बत ॥ ३९१ ॥

सोऽब्रवीत्तपसा राम मया लोकाः सनातनाः ।
संप्राप्तास्तान्गृहाण त्वं पूज्यत्वात्सर्वमर्हसि ॥ ३९२ ॥
इत्युक्ते मुनिना रामो बभाषे विनयानतः ।
दर्शनं भवतामेव ब्रह्मधाम्नोऽधिकं मम ॥ ३९३ ॥
किं तपोभिरपर्यन्तैः किं यज्ञैर्बहुडम्बरैः ।
किं वा जलभृतैस्तीर्थैर्दर्शने त्वादृशां सति ॥ ३९४ ॥
निजपुण्यार्जितांल्लोकान्गमिष्यामि कृतोचितः ।
उक्त्वेत्यपूजयत्तस्य विश्वकारुण्यपुण्यताम् ॥ ३९५ ॥
सुतीक्ष्णस्याश्रमे राम मुनेर्वासस्तवोचितः ।
शरभङ्गो निगद्येति विग्रहं त्यक्तुमुद्ययौ ॥ ३९६ ॥
सप्तधातुमयं देहं सर्पनिर्मोकवन्मुनिः ।
त्यक्त्वाग्नौ पावकाकारः कुमारः समपद्यत ॥ ३९७ ॥
ततः स दिवमाक्रम्य परं शक्रपुरःसरः ।
ब्रह्मधाम ययौ धात्रा विहितस्वागतः स्वयम् ॥ ३९८ ॥

इति शरभङ्गदर्शनम् ॥ ११ ॥

शरभङ्गे गते व्योम्ना तदाश्रमनिवासिनः ।
मुनयोऽभ्याययुः सर्वे रामं सत्यपराक्रमम् ॥ ३९९ ॥
वैखानसा निराहारा वालखिल्या मरीचिपाः ।
अश्मकुण्ठाः पयोभक्षा मृगाजगरगोव्रताः ॥ ४०० ॥
दन्तोलूखलिनो व्योमनिलयाः पवनाशिनः ।
सततं सलिले मग्ना नग्नाः स्थण्डिलशायिनः ॥ ४०१ ॥
पञ्चातपा निरालम्बा वृक्षशाखाग्रलम्बिनः ।
अदृश्या धूमपाः पादाङ्गुष्ठाधाराः फलाशिनः ॥ ४०२ ॥
तमूचुर्विनयानम्रं[1] तमभ्येत्य तपस्विनः ।
चण्डांशुमालाः कपिलाः कुर्वाणास्तेजसा दिशः ॥ ४०३ ॥

१. 'मुनयो नम्रं' शा०.

एते त्वां मुनयो धन्यं तपोरक्षापरिक्षमम्।
वर्णाश्रमगुरुं वीरं पश्यन्ति गुणगौरवात् ॥ ४०४ ॥
दातॄणां यज्ञशीलानां यतीनां तीर्थसेविनाम्।
रक्षणात्क्षितिपाः सत्यं फलषड्भागभागिनः ॥ ४०५ ॥
अरक्षमाणाः क्ष्मापाला ब्राह्मणा ब्रह्मवर्जिताः।
धनिनो दानहीनाश्च भुवो भाराय केवलम् ॥ ४०६ ॥
अल्पावशेषतां नीता वनेऽस्मिन्राक्षसैर्वयम्।
तपःक्षयभयात्तेषु शापोऽस्माभिर्न चोज्झितः ॥ ४०७ ॥
राक्षसान्क्षपय क्षिप्रं मुनिसंक्षयदीक्षितान्।
वयं त्वामधुना वीर शरण्यं शरणं गताः ॥ ४०८ ॥
इति श्रुत्वा मुनिगिरं राघवो रचिताञ्जलिः।
उवाच सत्त्वधवलं दन्तांशुविशदं वचः ॥ ४०९ ॥
भवन्त एव लोकेषु शरण्याः शरणार्थिनाम्।
किं त्वाज्ञासंविभागे वः पात्रं पुण्यवतां वरः ॥ ४१० ॥
एषोऽहं भवतामर्थे सज्जः कण्टकशोधने।
स्वयं मे निश्चयो ह्येष शासनानुग्रहोऽधिकः ॥ ४११ ॥
इत्युक्त्वा तान्समामन्त्र्य सुतीक्ष्णस्याश्रमं मुनेः।
जगाम रामः कामस्य रम्यं धाम शमस्य च ॥ ४१२ ॥

इति तापसाभयदानम् ॥ १२ ॥

सुतीक्ष्णं तीक्ष्णतपसां तीक्ष्णांशुमिव तेजसाम्।
निधिं प्रणम्य काकुत्स्थः स्थितिं भेजे तदाज्ञया ॥ ४१३ ॥
तत्र तेन कृतातिथ्यः सुखं नीत्वा विभावरीम्।
प्रातश्चचार रम्यासु तत्तपोवनभूमिषु ॥ ४१४ ॥
तं सज्जकार्मुकं दृष्ट्वा सायकेष्वधिकादरम्।
उवाच सीता संचिन्त्य राक्षसक्षयदीक्षितम् ॥ ४१५ ॥
आर्यपुत्र कथं नाम यत्नेनैव निशाचराः।
मृग्यन्ते ते हि नाद्यापि निकारपदवीं श्रिताः ॥ ४१६ ॥

नोत्तरन्ति प्रकोपस्य पारं किल भवद्विधाः।
न यावदपराधेन सेतुर्धृतः पुरो महान् ॥ ४१७ ॥
असत्यं शीलविरहः प्राणहिंसा च देहिनाम्।
प्रकृष्टं पातकं प्राहुर्न[1] यशः कर्मदोहदम् ॥ ४१८ ॥
जन्मापूर्वमसत्यं ते शीलध्वंसस्य का कथा।
सांप्रतं निर्विकारेषु हिंसा रक्षःसु नोचिता ॥ ४१९ ॥
अधिज्यं ते धनुरिदं नायुद्धेन प्रशाम्यति।
अवश्यमुद्यतं शस्त्रं प्रतारयति दारुणम् ॥ ४२० ॥
न्यासीकृतं मुनिः कश्चित्कृपाणं केनचित्पुरा।
ररक्ष सुचिरं हस्ते धृत्वा त्यक्तकमण्डलुः ॥ ४२१ ॥
न्यासपालनकष्टेन स संत्यक्ताखिलक्रियः।
खड्गग्रहप्रसङ्गेन चक्रे मनसि शूरताम् ॥ ४२२ ॥
स क्रूरतां गतः काले पुण्यान्निजपदाच्च्युतः।
अधिज्यं मा कृथाश्चापं नाथ रक्षस्व सांप्रतम् ॥ ४२३ ॥
प्रणयादिदमुक्तोऽसि न परिज्ञानगौरवात्।
क्षन्तुमर्हसि मे नाथ स्त्रीस्वभावोदितं वचः ॥ ४२४ ॥
श्रुत्वेति जानकीवाक्यं प्रहृष्टो रघुनन्दनः।
उवाच सीते जानीषे सर्वं वक्तुमनिन्दितम् ॥ ४२५ ॥
रक्षोभिरभिभूतानां रक्षायै निश्चितो मया।
मुनीनां दीप्ततपसामयमाज्ञापरिग्रहः ॥ ४२६ ॥
इत्युक्त्वा सानुजो रामः प्रययौ मैथिलीसखः।
पश्यन्निजयशःशुभ्रपुष्पसितासिता लताः ॥ ४२७ ॥
स व्रजन्दिवसस्यान्ते शिथिलत्विषि भास्करे।
सयौवनायां संध्यायां ददर्श विपुलं सरः ॥ ४२८ ॥
सतां वृत्तमिव स्वच्छं वनश्रीमणिदर्पणम्।
मज्जत्करिकराक्षेपक्षोभशीकरदुर्दिनम् ॥ ४२९ ॥

१. 'रयशः' शा०

उत्फुल्लकमलैर्व्याप्तं लोलालिशबलोदरैः।
मुखैर्मधुमदाताम्रैर्भ्रान्ताक्षैः सुदृशामिव ॥ ४३० ॥
पवनान्दोलितोदारफुल्लेन्दीवरसुन्दरम्।
लीलाकटाक्षशबलं केलिवेश्म रतेरिव ॥ ४३१ ॥
विलोक्य लोलकल्लोलदोलारूढसरोरुहम्।
तत्सरः सरसस्तेषां बभूव नयनोत्सवः ॥ ४३२ ॥
तत्र संदेहितामोदमत्तालिकुलनिःस्वनैः।
गीतवाद्यरवं रामः शुश्राव श्रवणामृतम् ॥ ४३३ ॥
किमेतदिति पृष्टोऽथ मुनिस्तेन कुतूहलात्।
उवाचेदं वचो राम दमकर्णैः पदं मुनेः ॥ ४३४ ॥
स हि वाताशनः स्थाणुभूतो वर्षायुतं तपः।
तेपे बभूवुस्त्रिदशा येन प्रभ्रंशशङ्किताः ॥ ४३५ ॥
विघ्नायाप्सरसः पञ्च तैर्विसृष्टास्तदाश्रमम्।
प्रययुर्यौवनोन्मत्ता मदनोन्मादभूमयः ॥ ४३६ ॥
तासां विवलितापाङ्गसंगतानङ्गविभ्रमैः।
दमकर्णिर्ययौ क्षिप्रं प्रौढप्रीतिविधेयताम् ॥ ४३७ ॥
महागिरिगुहास्थैर्यमपि चेतो महात्मनाम्।
पातयन्त्यप्रयत्नेन तरङ्गिण्यो वराङ्गनाः ॥ ४३८ ॥
स्मरस्य यदनायत्तं रागस्याविषयं च यत्।
तन्मुनेर्मानसं तासां केलिकार्मुकतामगात् ॥ ४३९ ॥
स सुन्दरतरं कृत्वा नवं लीलामयं वयः।
ताभिस्तु सहितोऽहानि व्यगाहत महोत्सवः ॥ ४४० ॥
तस्यास्मिन्सरसस्तीरे सुरनारीविलासिनः।
गीतवाद्यरसोत्सेकः सुगतः श्रूयते ध्वनिः ॥ ४४१ ॥
अत्याश्चर्यमयं श्रुत्वा विस्मितो रघुनन्दनः।
चिरं तस्थौ ययुर्यावद्वने सार्धाः समा नव ॥ ४४२ ॥

ततः कथापरिचितं मनोरथपथोचितम् ।
रामः सुतीक्ष्णनिर्दिष्टमगस्त्यस्याश्रमं ययौ ॥ ४४३ ॥

इति सुतीक्ष्णाश्रमनिवासः ॥ १३ ॥

स सीतासहितो गच्छन्नगस्त्याश्रमकाननम् ।
उवाच लक्ष्मणं पश्य संतोषविषदा दिशः ॥ ४४४ ॥
आश्रमोऽयं श्रमहरस्तस्य पुण्यात्मनो मुनेः ।
नूनं यदेता जृम्भन्ते हृदयानन्दसंपदः ॥ ४४५ ॥
भृङ्गाक्षमालावलयव्यग्रपल्लवपाणयः ।
पलाशिनो वल्कलिनो भान्त्येते मुनयो यथा ॥ ४४६ ॥
प्रशान्तवैररजसां सिंहेभफणिबर्हिणाम् ।
प्रेमप्रणयिनी चेष्टा निर्विकारैव दृश्यते ॥ ४४७ ॥
शीलवृत्तिः शमेनेव दानेनेव दयालुता ।
मुनिना दक्षिणेयं दिग्विभाति द्यौरिवेन्दुना ॥ ४४८ ॥
घोराविल्वलवातापी पुरा दैत्यौ बभूवतुः ।
यत्प्रतापेन सातङ्का बभूव भुवनत्रयी ॥ ४४९ ॥
मायामेषाकृतिं कृत्वा सदा भ्रातरमिल्वलः ।
ब्राह्मणेभ्यो वधायैव ददौ तन्मांसभोजनम् ॥ ४५० ॥
तृप्तानामथ विप्राणां कुक्षिं भित्त्वातिदारुणः ।
वातापी निर्ययौ क्षिप्रमित्यासीद्ब्राह्मणक्षयः ॥ ४५१ ॥
कालेनाथ मुनीन्द्रोऽसौ तेनागस्त्यो निमन्त्रितः ।
सिद्धं वातापिमांसेन[1] संस्कृतं प्राप भोजनम् ॥ ४५२ ॥
एहीति हर्षादाहूते भ्रात्रा[2] भ्रातरि दानवे ।
जीर्णो मयेति विहसन्नुवाचोद्गारवान्मुनिः ॥ ४५३ ॥
इल्वलं भ्रातृनिधनात्क्रुद्धं क्रोधान्महामुनिः ।
ददाह दुरितच्छेदा[3]च्चक्षुषा सूर्यतेजसा ॥ ४५४ ॥

---

१. 'वातापिर्नि' स्यात्. २. 'भ्रातर्भ्रात' शा०. ३. 'च्छेत्ता च' ख.

तस्येदमाश्रमपदं पुण्यार्हं कुम्भजन्मनः।
विन्ध्यो यदाज्ञयाद्यापि धत्ते भूमिसमानताम् ॥ ४९५ ॥
प्रणम्यो भगवानेष चुलकापीतसागरः।
इत्युक्त्वा राघवः प्रायादगस्त्यभ्रातुराश्रमम् ॥ ४९६ ॥
इतील्वलोपाख्यानम् ॥ १४ ॥

तं प्रणम्य ततो गत्वा प्रहृष्टो रघुनन्दनः।
अगस्त्यस्याश्रमं पुण्यं विससर्जानुजं पुनः ॥ ४९७ ॥
विनयाल्लक्ष्मणेनाथ शिष्यस्यावेदितो मुनेः।
विवेश शासनात्तस्य प्रह्वो दशरथात्मजः ॥ ४९८ ॥
विधिना प्रणिपत्याथ सानुजो दयितासखः।
मुनीन्द्रं तद्विनिर्दिष्टमातिथ्यं प्राप राघवः ॥ ४९९ ॥
सुखोपविष्टे पुरतः काकुत्स्थे मुनिरब्रवीत्।
स्वगुणैर्गुरुतां यातः सत्कारार्होऽसि राघव ॥ ४६० ॥
पूजामभ्यागतो यस्मान्नासादयति शक्तितः।
परत्र मिथ्यासाक्षीव स मांसं निजमश्नुते ॥ ४६१ ॥
अतिथिर्विमुखो यस्य याति पूजां विना गृहात्।
स तस्य पापं विन्यस्य पुण्यं हृत्वा पलायते ॥ ४६२ ॥
पूज्यस्त्वमस्य जगतो राजा विरजसां वरः।
गृहाण वैष्णवं चापं विहितं विश्वकर्मणा ॥ ४६३ ॥
यः सर्वदितिजेन्द्राणां ययौ निधनदूतताम्।
सायकं ब्रह्मदत्तं च तूणावक्षय्यसायकौ ॥ ४६४ ॥
तप्तहेमप्रभं खड्गं जयायैव ददानि ते।
अभेद्यं च तनुत्राणमिदं वज्रभृतः प्रियम्।
रथं मातलिसूतं च कार्यकालोपयोगिनम् ॥ ४६५ ॥
इत्युक्त्वासौ ददौ रत्नं दीप्तं सर्वं रथं विना।
दत्त्वा पुनरुवाचेदं प्रसादविषदाशयः ॥ ४६६ ॥
कच्चिद्वने न खेदो वः कच्चिन्नोत्कण्ठते मनः।
तासु राज्यतरुस्फीतफलसंभोगभूमिषु ॥ ४६७ ॥

बालिकेयं सखी सीता सुकुमारी सुखोचिता ।
स्नात्वा त्वद्भक्तिपीयूषैर्म्लानिं नायाति कानने ॥ ४६८ ॥
धन्यो जनकभूपालः साध्वी यस्येयमात्मजा ।
प्रायेण न भवन्त्येव लोके सत्यव्रताः स्त्रियः ॥ ४६९ ॥
विभवेष्वनुरागिण्यो विरागिण्यो विपत्सु च ।
अनार्याः कृच्छ्रसंभार्याः पुरुषाणां हि योषितः ॥ ४७० ॥
सुबद्धा अपि शीर्यन्ते म्लानिं यान्ति क्षणेन च ।
दूरस्था एव शोभन्ते पुष्पमाला इवाङ्गनाः ॥ ४७१ ॥
यासामोष्ठपुटे रागः परं मलिनता हृदि ।
गुणभ्रान्त्येव मुष्णन्ति जानीते कस्तदाशयम् ॥ ४७२ ॥
आसन्नदोषाश्चपलाः क्रूरकर्मपरिग्रहाः ।
एता मुहूर्तरागिण्यो घोराः संध्या इव स्त्रियः ॥ ४७३ ॥
इयं तु लीलाभरणा भर्तृव्रतपरायणा ।
रवेः प्रभेव ते सीता न दोषासङ्गभागिनी ॥ ४७४ ॥
इयं वनमही सीतापादन्यासपवित्रिता ।
सेव्यतामधुना प्राप्ता त्वद्बाहुबलपालिता ॥ ४७५ ॥
पुरा भार्गवशापेन देशोऽयं दण्डभूभुजा ।
त्यक्तो निरुदकच्छायो बभूवातिभयंकरः ॥ ४७६ ॥
योजनार्धसहस्रेऽस्मिन्पादे विन्ध्यस्य दक्षिणे ।
पर्जन्या नैव ववृषुर्ववुश्च न समीरणाः ॥ ४७७ ॥
ततोऽहं सुरकार्यार्थी संघर्षे मेरुविन्ध्ययोः ।
हिमाद्रिशिखराच्छून्यां प्राप्तः श्वेतामिमां पुरीम् ॥ ४७८ ॥
प्रावृट्जलदारम्भसंभावितनवाङ्कुरा ।
अथेयं विहिता भूमिर्मया सर्वभयोज्झिता ॥ ४७९ ॥
कालेनाथ पुनर्घोरैर्व्याप्तेयं राक्षसैर्मही ।
तत्र त्वद्दोष्णि संनद्धे संरम्भो न ममोचितः ॥ ४८० ॥

१. 'शिखराच्छ्वेतात्प्राप्तः शून्यामिमां' ख.

इत्युक्ते मुनिना रामो धन्यतामात्मनोऽवदत् ।
दर्शनाभाषणैस्तस्य हर्षपूर्णाश्रयोऽभवत् ॥ ४८१ ॥

इत्यगस्त्यदर्शनम् ॥ १५ ॥

ततो गोदावरीतीरे रम्ये पञ्चवटीतटम् ।
जगामागस्त्यनिर्दिष्टं स्थितये रघुनन्दनः ॥ ४८२ ॥
स गच्छन्पथि रुद्धांशुं सपक्षमिव भूधरम् ।
ददर्श तेजसां राशिर्वृद्धं गृध्रं जटायुषम् ॥ ४८३ ॥
राक्षसोऽयमिति ज्ञात्वा मुनित्राणकृतक्षणः ।
अभ्यद्रवद्वधायास्य रामः सौमित्रिणा सह ॥ ४८४ ॥
सोऽब्रवीद्गृध्रराजोऽहं जटायुरिति विश्रुतः ।
विस्रम्भभूरभून्मित्रं राजा दशरथो मम ॥ ४८५ ॥
ज्येष्ठे प्रजासृजां सर्गे योऽभूद्दक्षः प्रजापतिः ।
बभूवुः कन्यकास्तस्य भूतसंतानमातरः ॥ ४८६ ॥
अदित्याद्यासु देवीषु संभूते कश्यपान्मुनेः ।
सुरासुरमुखे तासु विश्वसर्गे समन्ततः ॥ ४८७ ॥
असूत विनता पुत्रौ काश्यपौ तेजसां निधी ।
आदित्यसूतमरुणं गरुडं च खगेश्वरम् ॥ ४८८ ॥
अरुणस्यास्मि तनयः संपाती च ममाग्रजः ।
युवां सख्युः क्षितिपतेर्दिष्ट्या पश्यामि पुत्रकौ ॥ ४८९ ॥
इत्युक्त्वा गृध्रराजेन परिष्वक्तौ नृपात्मजौ ।
ननन्दतुस्तमभ्यर्च्य दयितं सुहृदं पितुः ॥ ४९० ॥

इति जटायुसमागमः ॥ १६ ॥

ततो मरकतश्यामतालतालीमनोरमाम् ।
रामे पञ्चवटीं प्राप्ते चक्रे सौमित्रिराश्रमम् ॥ ४९१ ॥
तत्र प्रसन्नमधुराः स्निग्धाः पश्यन्वनस्थलीः ।
उवाच रामः सौमित्रिं नयनानन्दनिर्भरः ॥ ४९२ ॥

एते गोदावरीतीरतारशीकरमारुताः ।
लतावधूनां कुर्वन्ति स्फारं कामलता इव ॥ ४९३ ॥
अदूरे पद्मिनी चेयं दृश्यते हंसनूपुरा ।
क्रियते मधुपैर्यस्यां विलोलालकविभ्रमः ॥ ४९४ ॥
एताः सिद्धवधूहस्तन्यस्तसेकोचिता लताः ।
तासां भजन्ते सादृश्यं संभिन्नैः स्तबकस्तनैः ॥ ४९५ ॥
उत्कण्ठाकोमलं केलिगीतं किंनरयोषिताम् ।
शृण्वन्ति वलितग्रीवाः स्तब्धकर्णाः कुरङ्गकाः ॥ ४९६ ॥
विद्याधरीणां कोऽप्येष रतिशय्यारसो नवः ।
अनिशं यान्ति मञ्जर्यो यत्पल्लवदरिद्रताम् ॥ ४९७ ॥
मञ्जुगुञ्जद्विहङ्गेषु काननेषु समन्ततः ।
विश्रान्ता इव दृश्यन्ते स्वान्तसंतोषसंपदः ॥ ४९८ ॥
शुभ्राभ्रनिकराकारनिर्झरैः श्वेतपातिभिः ।
भान्ति शीकरनीहारदुकूलिन्यो वनश्रियः ॥ ४९९ ॥
वाताः ससौरभाः शीता मधुरो मधुपध्वनिः ।
शस्यश्यामा मही चेति काननेऽस्मिन्महोत्सवः ॥ ५०० ॥
इत्युक्त्वा पल्लवगृहे स निनाय मनोहरे ।
रजनीं रजतोद्द्योतग्रहराजिविराजिताम् ॥ ५०१ ॥
प्रातो गोदावरीं रामः ससीतः सानुजो ययौ ।
कलहंसकुलक्काणशिञ्जानरशनामिव ॥ ५०२ ॥
अथातिदारुणः प्रातः खलः क्रुद्ध इव क्षुधा ।
दुःसहो दिनपर्यन्तेऽचिरात्क्षीव इवाधमः ॥ ५०३ ॥
सुखसेव्यश्च मध्याह्ने च्युतो नीचः पदादिव ।
निरुद्धाशो घनौघेन लोभेनेव दिनेश्वरः ॥ ५०४ ॥
शीतादकृत्रिमोत्कम्पः सीत्काराचार्यतां गतः ।
रोमोद्गमगुरुः स्त्रीणां हेमन्तः प्रत्यदृश्यत ॥ ५०५ ॥

दिशो हेमन्तनीहारधूसरा वीक्ष्य लक्ष्मणः ।
व्योम धूमान्धकारं च जगाद रघुनन्दनम् ॥ १०६ ॥
आर्य हेमन्तसंनाहव्यासस्य व्योमदन्तिनः ।
धत्ते तुषारनिकरः करशीकरवर्षताम् ॥ १०७ ॥
कथावशेषसौभाग्यास्तुहिनम्लानपङ्कजाः ।
एता विभान्ति पद्मिन्यो जरयेव वराङ्गनाः ॥ १०८ ॥
लज्जयेव घनच्छायो दृश्यते न च दृश्यते ।
शशी धूसरतां यातः कुलीन इव मानुषः ॥ १०९ ॥
धर्मराजप्रियामाशां सेवमानो दिवाकरः ।
शीलभ्रष्ट[1] इव नृपः प्रयातो निष्प्रतापताम् ॥ ११० ॥
परिम्लानमुखच्छायाः सोच्छ्वासाः संततानिलैः ।
याच्ञयेव महान्तोऽपि लुब्धतां यान्ति वासराः ॥ १११ ॥
रजन्यो दीर्घतां यातास्तमसा निष्कला अपि ।
दुराशा इव मुग्धानां लुब्धेषु कुटिलात्मसु ॥ ११२ ॥
क्षीणदोषः क यातोऽसौ कालो विपदमानसः ।
इतीव दुःखिता बाष्पं दिशो वर्षन्ति धूसराः ॥ ११३ ॥
संत्यक्तपत्राभरणा विस्मृतस्तवकस्मृ[2]ताः ।
मौनव्रता इवाभान्ति लताः प्रोषितषट्पदाः ॥ ११४ ॥
भुजोपधानास्त्वेतासु हिमशीतासु रात्रिषु ।
त्वद्भक्त्या भरतः शेते दुःखेन भुवि भूपतिः ॥ ११५ ॥
यातास्त्रयोदश समा वर्षशेषव्रतोऽधुना ।
मयूर इव पर्जन्यं भरतस्त्वां प्रतीक्षते ॥ ११६ ॥
लक्ष्मणेनेत्यभिहिते भरतस्नेहविक्लवः ।
गोदावरीतटे स्नात्वा ययौ रामः स्वमाश्रमम् ॥ ११७ ॥

इति हेमन्तवर्णनम् ॥ १७ ॥

---

१. 'भ्रष्टो नृप इव' ख. २. 'स्मिताः' ख.

ततः शूर्पनखा नाम राक्षसी रावणस्वसा ।
रामं यदृच्छया याता ददर्श मदनद्युतिम् ॥ ९१८ ॥
सिंहस्कन्धं महाबाहुं कान्तं कमललोचनम् ।
शौर्यशृङ्गारयोर्योग्यमिव संकेतमन्दिरम् ॥ ९१९ ॥
तं वधूसहितं दृष्ट्वा सा बभूवाभिलाषिणी ।
कान्तिं रतिसनाथस्य बिभ्राणं पुष्पधन्वनः ॥ ९२० ॥
सा बभाषे विरूपाक्षी रामं राजीवलोचनम् ।
भेरीभैरवगम्भीरस्वरा मधुरभाषिणम् ॥ ९२१ ॥
को भवान्कानने कान्तः स्त्रीसहायो धनुर्धरः ।
जटी श्रीमान्न च नृपो न च रक्तो न वा मुनिः ॥ ९२२ ॥
विपरीतोऽयमाचारो यद्वने स्त्रीसहायता ।
वेशश्च नानुरूपोऽयं यच्चापं यच्च वल्कलम् ॥ ९२३ ॥
इति पृष्टस्तया रामः स्वभावसरलाशयः ।
निजजन्मकथामूचे वनवासे च कारणम् ॥ ९२४ ॥
तच्छ्रुत्वा सावदत्कामबाणसंपातकातरा ।
दिग्दाहमिव कुर्वाणा दृक्पातैर्बभ्रुदारुणैः ॥ ९२५ ॥
अहं शूर्पनखा नाम खरदूषणयोः स्वसा ।
भ्रातरो मे दशग्रीवकुम्भकर्णविभीषणाः ॥ ९२६ ॥
निःसारां मन्दसंचारां निःसहामबलामिमाम् ।
मानुषीं त्यज संभोगे न यस्यां निर्दयोत्सवः ॥ ९२७ ॥
सेयं निर्माल्यमालेव त्यागमर्हति ते वधूः ।
हेमपद्ममयीं मालामिव कण्ठे कुरुष्व माम् ॥ ९२८ ॥
देशेष्वमर्त्यसेव्येषु रमस्व सहितो मया ।
गुल्फरज्जुरियं योषा त्यज्यतां धीमता त्वया ॥ ९२९ ॥
इति ब्रुवाणामसकृत्सस्मितो रघुनन्दनः ।
तामुवाच स्थितामग्रे दृश्यां निर्दिश्य लक्ष्मणम् ॥ ९३० ॥

अयं सुमुखि मे भ्राता रतिशून्य इव स्मरः।
युवाकृतदारविधिरिच्छति त्वादृशीं वधूम्॥ ९३१॥
राघवेणेत्यभिहिते सा सौमित्रिमभाषत।
दिव्यसंभोगसुभगो भव वीर भजस्व माम्॥ ९३२॥
सोऽब्रवीदस्य दासोऽहमार्यस्यारण्यचारिणः।
अनेन रूपेण कथं दासपत्नी भविष्यसि॥ ९३३॥
आर्यस्यैवोचिता सुभ्रु भार्या सौभाग्यभागिनी।
भवती चारुसौन्दर्या विजयन्ती जगत्त्रये॥ ९३४॥
निशम्यैतद्गता रामं तं त्यक्त्वा लक्ष्मणोन्मुखी।
चक्रे स्मरानिलालोला सा दोलेव गतागतम्॥ ९३५॥
ततो वैलक्ष्यमापन्ना सुचिरात्स्मरमोहिता।
ज्ञात्वा तत्संगमे विघ्नं सीतामभ्याद्रवत्क्रुधा॥ ९३६॥
काली करालवदना सा सीतां हन्तुमुद्यता।
बभूवेन्दुकलालुब्धराहुच्छायानुकारिणी॥ ९३७॥
तामाकृष्य रुषा रामः क्षणं लक्ष्मणमब्रवीत्।
दुरन्तः परिहासोऽयं न हिंस्राः केलिभाजनम्॥ ९३८॥
आशीविषैः परिष्वङ्गः पिशुनैर्गुह्यमन्त्रणम्।
अवश्यं भयमादत्ते परिहासश्च दुर्जनैः॥ ९३९॥
वज्राशनिविनिष्पेषनिर्घोषविषमस्वनैः।
पश्यास्यास्तर्जनैरेव मैथिली मोहमागता॥ ९४०॥
इत्युक्तो रघुनाथेन लक्ष्मणस्तु भयाकुलः।
चिच्छेद करवालेन राक्षस्याः कर्णनासिकम्॥ ९४१॥
जलार्द्रभेरीगम्भीरभैरवस्वरराविणी।
सदा पीतं वमन्तीव मुखेनासृग्जगाम सा॥ ९४२॥

---

१. 'युवाप्यकृतदारत्वादिच्छति' ख.

नासिकारक्तसंसिक्तविस्रास्रस्रुतिनिर्झरा ।
गृहं भ्रातुः खरस्यैत्य सा स्ववृत्तान्तमभ्यधात् ॥ ९४३ ॥

इति शूर्पनखाविरूपणम् ॥ १८ ॥

खरः खरतराकोप[1]ः स्वसुराकर्ण्य निग्रहम् ।
दिदेश राघवौ हन्तुं चतुर्दश निशाचरान् ॥ ९४४ ॥
वने शूर्पनखादिष्टवर्त्मना ते प्रहारिणः ।
अभ्येत्य ददृशुः कान्तासखं काकुत्स्थमास्थितम् ॥ ९४५ ॥
रामोऽपि राक्षसान्दृष्ट्वा पुनः शूर्पनखाग्रगान् ।
आरोप्य लीलया चापं बभूव समरोन्मुखः ॥ ९४६ ॥
उत्सृष्टामथ तैः कोपाद्दीप्तायुधपरम्पराम् ।
चिच्छेद विशिखैः क्षिप्रं राघवश्चित्रलाघवः ॥ ९४७ ॥
ततश्चतुर्दश शरान्संतप्तकनकोक्षितान् ।
प्राहिणोद्यैर्बभुः क्षिप्रं विद्युत्परिचिता इ[2]व ॥ ९४८ ॥
ते राक्षसान्विनिर्भिद्य स्पष्टान्विकटकङ्कटान् ।
विविशुर्वसुधां दीप्तास्तेषां जीवा इवो[3]त्कटाः ॥ ९४९ ॥
ततो निपतितान्वीक्ष्य छिन्नपक्षानिवाचलान् ।
राक्षसान्राक्षसी भीत्या क्रन्दन्ती प्रययौ द्रुतम् ॥ ९५० ॥
खरोऽपि तद्गिरा ज्ञात्वा राघवाग्निपतङ्गताम् ।
यातान्निशाचरान्वीरान्संनद्धो निर्ययौ द्रु[4]तम् ॥ ९५१ ॥
चतुर्दश सहस्राणि रक्षसां भीमकर्मणाम् ।
सेनाग्रे निर्ययुस्तस्य त्रिदशत्रासकारिणः ॥ ९५२ ॥
स तप्तकाञ्चनरथध्वजकङ्कटकार्मुकः ।
बभौ दावानलव्याप्तः संचारीव म[5]हीधरः ॥ ९५३ ॥
अथ राक्षस[6]संभारात्कम्पमाने महीतले ।
दुर्निमित्तगणः प्रायाद्घोरविप्लवतुल्यताम् ॥ ९५४ ॥

---

१. 'कारः' शा०. २. 'दिशः' ख. ३. 'त्कराम्' ख. ४. 'स्वयम्' ख.
५. 'महाचलः' ख. ६. 'संमर्द' ख; 'संरम्भा' शा०.

रक्षःसैन्यसमुद्भूतधूलिग्रस्ते नभस्तले ।
विन्यस्य लक्ष्मणे सीतां रामः कवचमादधे ॥ ९५५ ॥
आमुक्तहेमकवचः सज्जप्राज्यशरासनः ।
सुरद्विषां पुरस्तस्थौ स धूर्जटिरिवापरः ॥ ९५६ ॥
ततः क्षणेन रक्षोभिः पूरिते राघवाश्रमे ।
उदभूद्घोरगम्भीरः समराम्बरदुन्दुभिः ॥ ९५७ ॥
तेन शब्देन महता त्रस्ताः समृगपक्षिणः ।
दुद्रुवुस्तापसास्तूर्णमपुनर्वलिताननाः ॥ ९५८ ॥
ततस्ते राक्षसा दृष्ट्वा पुरतस्तेजसां निधिम् ।
राघवं कान्तमत्युग्रं तस्थुश्चित्रार्पिता इव ॥ ९५९ ॥
सैन्यं निश्चलमालोक्य खरः प्रोवाच दूषणम् ।
किमयं ध्वजिनीसङ्घः परसैन्यं न दृश्यते[1] ॥ ९६० ॥
एतदालोक्यतां तावदित्युक्तस्तेन दूषणः ।
रथेन पृथुवेगेन सैन्यमध्याद्विनिर्ययौ ॥ ९६१ ॥
स दृष्ट्वा राममत्युग्रकोदण्डं स्थितमग्रतः ।
चण्डांशुमिव दुर्धर्षपरिवेषं जगत्क्षये ॥ ९६२ ॥
परावर्त्य रथं तूर्णमभ्येत्य खरमब्रवीत् ।
एष रामः स्थितो धन्वी रक्षसां गतिविघ्नकृत् ।
येनैषां स्थगितानीव चेतांसि वचनानि च ॥ ९६३ ॥
श्रुत्वेति क्रोधदविषा खरो वह्निर्ज्वलन्निव ।
अभ्याद्रवत्स्वयं रामं रथेन घननादिना[2] ॥ ९६४ ॥
ततः क्षपाचराः सर्वे परिवार्य समन्ततः ।
अदृश्यं चक्रिरे रामं प्रदीप्तायुधवर्षिणः ॥ ९६५ ॥
तस्य निर्भिद्यमानस्य घोराभिः शस्त्रवृष्टिभिः ।
किंशुकाशोकसंकाशं शोणितेनाभवद्वपुः ॥ ९६६ ॥

१. 'परः सैन्यं विनश्यति' क. २. 'घनघोषेण' शा०.

ततः शितशरासारैर्निर्यद्भिः किरणोत्करैः ।
चण्डांशुरिव दुःप्रेक्ष्यः सोऽभवत्रिदशद्विषाम् ॥ ९६७ ॥
तेषां स्फुरत्प्रभापूरैः केयूरमणिकङ्कटैः ।
हेमदीप्तशिरस्त्राणां कुण्डलैर्हेममण्डितैः ॥ ९६८ ॥
भुजदण्डैः सकोदण्डैः सतोमरकरैः शरैः ।
मातङ्गैर्भिन्नसर्वाङ्गैश्छिन्नकायैर्महाहयैः ॥ ९६९ ॥
रथैरुन्मथितैश्छिन्नैश्छत्रैर्ध्वजगजैरपि ।
चकार मेदिनीं रामश्छन्नामद्भुतविक्रमः ॥ ९७० ॥
प्रभग्ने रक्षसां सैन्ये दूषणो मुनिदूषणः ।
चकाराद्दश्यमभ्येत्य रामं निर्विवरैः शरैः ॥ ९७१ ॥
द्रुतशस्त्रशिलावर्षैर्दूषणाश्रमनिर्भरैः ।
राक्षसैश्छाद्यमानोऽसौ धैर्याद्रिर्न व्यकम्पत ॥ ९७२ ॥
जघान दूषणस्यास्य रथं रामः प्रमाथिनः ।
सोऽप्यस्मै प्राहिणोद्धोरं गदापरिघपट्टिशम् ॥ ९७३ ॥
ततश्चकर्त भल्लाभ्यां निर्जितारित्रजौ भुजौ ।
रामो विरामः पापानां दूषणस्य सभूषणौ ॥ ९७४ ॥
स पपात पृथूरस्कः कृतबाहुर्द्रुमः सृजन् ।
उत्तिष्ठति पुनः किंस्विदिति कम्पमिव क्षितेः ॥ ९७५ ॥
दूषणे निहते [1]घोरकोपदीप्ताः समाययुः ।
महाकपालः स्थूलाक्षः प्रमाथी चेति दानवाः ॥ ९७६ ॥
ते शूलपट्टिशप्रासवर्षिणस्तेजसां निधेः ।
रामस्य पुरतश्चक्रुर्मेघलीलां रवेरिव ॥ ९७७ ॥
ततो राघवदोर्दण्डकृष्टकोदण्डनिर्गता ।
बाणपङ्क्तिरभूत्तेषां वीथीव यमसद्मनि ॥ ९७८ ॥
सायकानामथ शतैः शतानि पिशिताशिनाम् ।
सहस्रैश्च सहस्राणि जघान रघुनन्दनः ॥ ९७९ ॥

---

१. 'क्रूर' ख.

क्षयक्षणे राक्षसास्तं प्राप्तमेकमनेकताम् ।
ददृशुर्विश्वसंहारविश्वरूपमिवान्तकम् ॥ ९८० ॥
ततः स्वयं समायातो योद्धुं क्रोधोद्धतं खरम् ।
निवार्य त्रिशिरा[1] नाम राक्षसो राममद्रवत् ॥ ९८१ ॥
स ललाटे त्रिभिर्बाणैर्दीप्तैर्विव्याध राघवम् ।
ये प्रभाजटिलास्तस्य हेममालातुलां ययुः ॥ ९८२ ॥
ततो मनोरथमिव च्छित्त्वा तस्य रथं शरैः ।
स शिरांस्यहरत्त्रीणि शिखराणि गिरेरिव ॥ ९८३ ॥
हते त्रिशिरसि क्रूरे रामेणाश्चर्यकारिणा ।
भग्नेषु युधि रक्षःसु स्वयमभ्याद्रवत्खरः ॥ ९८४ ॥
ततः खरशरासारापूरिते भुवनोदरे ।
बभूव सर्वभूतानां संहार[2]रजनीभ्रमः ॥ ९८५ ॥
रामबाणहताग्राणां तेषां राक्षसपत्त्रिणाम् ।
ज्वालाभिर्विद्युदुद्दाममालाङ्कमभवन्नभः ॥ ९८६ ॥
ततश्चकर्त रामस्य मुष्टे[3]श्चापं खरः शरैः ।
रत्न[4]काञ्चनचित्रं च कवचं विकचप्रभम् ॥ ९८७ ॥
अथान्यं वैष्णवं चापमादाय रघुनन्दनः ।
हेमप्रभापरिकरं ध्वजं चिच्छेद रक्षसः ॥ ९८८ ॥
ध्वजस्य पततस्तस्य स्फुटैर्मणिकणाश्रुभिः ।
रक्षःश्रीः प्ररुरोदेव नववैरिपराभवात् ॥ ९८९ ॥
दीप्ते निपतिते तस्य ध्वजे साक्षादिवौजसि ।
वेश्येव कृपणस्याभूद्वीर्यसाम्यात्पराङ्मुखी ॥ ९९० ॥
ततः खरस्यातिखरैः शरैर्दशरथात्मजः ।
दारितः प्रोन्ममाथास्य रथं सारथिकार्मुकम् ॥ ९९१ ॥
स हताश्वं समुत्सृज्य स्यन्दनं शरविक्षतः ।
भुवि तस्थौ गदापाणिर्निहताशेषसैनिकः ॥ ९९२ ॥

---

१. 'त्रिशिखो' शा०. २. 'संहारे' शा०. ३. 'मुष्टौ' ख. ४. 'कनक' ख.

विषमे वर्तमानं तं विहस्योवाच राघवः ।
विभूतिस्ते क्षयं याता पापमेवाक्षयं पुनः ॥ ५९३ ॥
बत वाताकुलाश्वत्थदललोलाः खलश्रियः ।
शरीरशेषतां यातो यद्भवान्रक्षसां विभुः ॥ ५९४ ॥
न रथो न गजो नाश्वो न मित्राणि न मन्त्रिणः ।
न बान्धवा वा तिष्ठन्ति पर्यन्ते सुकृतादृते ॥ ५९५ ॥
कानि कानि न मित्राणि स्निग्धाः के के न बान्धवाः ।
संपद्व्यतिकरे पुंसां के न नाम निरन्तराः ॥ ५९६ ॥
स्फुरन्ति तावदैश्वर्यकुसुमप्रकराः पुनः ।
सर्वसंमार्जनी यावन्नोदेति कलुषा मतिः ॥ ५९७ ॥
अधुना तनुशेषोऽसि क नु ते ते पदानुगाः ।
स्वार्जितान्येव कर्माणि प्रयान्त्येव सहायताम् ॥ ५९८ ॥
यत्त्वया मुनयः पाप भक्षिताः क्षणदाचर ।
तदेवाद्य पुरः सर्वं पातकं तव धावति ॥ ५९९ ॥
नीचानां दुःसहायानामैश्वर्यक्रूरकर्मणाम् ।
स्वप्नदृष्टमिवाशेषं प्रयाति स्मृतिशेषताम् ॥ ६०० ॥
धर्मद्विषः प्रवृद्धस्य दुर्वृत्तस्य प्रमादिनः ।
ते एते मद्भुजोत्सृष्टा गुरवो गुरवः शराः ॥ ६०१ ॥
राघवेणेत्यभिहिते खरः क्रोधाकुलोऽवदत् ।
प्राकृतान्राक्षसान्हत्वा मूर्ख मिथ्या प्रगल्भसे ॥ ६०२ ॥
अहो मोहादहंकारक्षीबः खलु विकथ्यसे ।
भवन्ति महतामेव संपदो विपदस्तथा ॥ ६०३ ॥
अनया गिरिघातिन्या गदया वज्रवेगया ।
शिरश्चतुरजिह्वस्य तव यातु सहस्रधा ॥ ६०४ ॥
इत्युक्त्वास्मै गदां घोरां प्राहिणोत्कीर्णपावकाम् ।

१. 'विभूतयः' शा०. २. 'प्रभुः' ख. ३. 'गच्छन्त्यन्ते' ख. ४. 'तवैते,' 'एते ते' इति वा स्यात्.

तरवस्तेजसा यस्याः प्रययुर्भस्मशेषताम् ॥ १०५ ॥
तामापतन्तीं कणशः काकुत्स्थः सायकैर्व्यधात् ।
असंभृतां रिपुवधे जयाशामिव रक्षसाम् ॥ १०६ ॥
इयं ते प्रत्ययस्थानं मया निर्दारिता गदा ।
किमन्यद्बलसर्वस्वं यथा दर्प इवाभवत् ॥ १०७ ॥
इत्युक्त्वा राघवः क्रूरैः शरैः खरमपूरयत् ।
खरोऽपि तरुमुन्मूल्य राममेवाद्रवत्क्रुधा ॥ १०८ ॥
स्रवद्रुधिरपूरस्य तस्य हस्तगतं तरुम् ।
चकार रामस्तिलशो जयशेषावलम्बनम् ॥ १०९ ॥
अथ रक्तवसामोदमत्तोऽथ पिशिताशनः ।
राममेवाभ्ययाद्वेगाद्राहुः सूर्यमिवोत्कटः ॥ ११० ॥
ततो घोरतरं रामः शरं वज्रधरप्रियम् ।
तं ससर्जोर्जितबलः संक्षयायैव रक्षसः ॥ १११ ॥
निर्गन्धस्तेन सहसा निपपात निशाचरः ।
अकस्मात्प्राप्तविभवो दुर्नयेनैव दुर्जनः ॥ ११२ ॥
हते नक्तंचरे तस्मिन्प्रहृष्टाः परमर्षयः ।
अभ्येत्यापूजयन्रामं सुरसिद्धगणैः सह ॥ ११३ ॥

इति खरदूषणवधः ॥ १९ ॥

ततः शूर्पनखा दृष्ट्वा रक्षसां भीमकर्मणाम् ।
कृतमेकेन रामेण घोरं कदनमाहवे ॥ ११४ ॥
जगाम रावणं स्मृत्वा लङ्कामातङ्कदूषिता ।
व्योम्ना महाब्धिमुत्तीर्य शोकामर्षपुरःसरा ॥ ११५ ॥
सा प्रविश्य विमानाग्रसंगतं दशकन्धरम् ।
ददर्श सचिवैः क्रूरैः सेव्यमानं सभातले ॥ ११६ ॥
रक्तचन्दनशोणेन लक्षितं पृथुवक्षसा ।
नीलसंध्यारुणाभेन तटेनेवाञ्जनाचलम् ॥ ११७ ॥

१. 'सुसंभृतां' ख.

शेषभोगानुकारेण हारेण हिमवर्चसा।
स्कन्धोल्लासितकैलासनिर्झरेणेव[1] शोभितम्[2] ॥ ११८ ॥
स्वर्वधूचामराधूतकिंचित्स्रस्तसितांशुकम्।
वेलापवनपर्यस्तफेनकूटमिवाम्बुधिम् ॥ ११९ ॥
अहंकारस्य महतो वेधसेव विनिर्मितम्।
निवासभवनं[3] भूरि भुजस्तम्भविभूषणम्[4] ॥ १२० ॥
बभ्रुभ्रूश्मश्रुकिरणप्रदीप्ताननकाननम्।
क्षयाभ्रमिव [5]संवर्तदहनोद्गारदारुणम् ॥ १२१ ॥
वक्रैः स्कन्धान्तरासक्ततमःसंघट्टपाटलैः।
स्पष्टदंष्ट्रांशुपटलैः समुद्धाटितदिक्तटम् ॥ १२२ ॥
मण्डितं कुण्डलैः कर्णदोलारचितताण्डवैः।
कल्पान्तमिव मार्तण्डमण्डलैर्बहुभिर्वृतम् ॥ १२३ ॥
विचित्ररत्नमुकुटैराक्षिपन्तं गिरेः प्रभाम्।
तुङ्गश्रृङ्गवनोत्सङ्गनृत्यच्चित्रशिखण्डिनः ॥ १२४ ॥
अभिभूतेन्दुमहसा यशसा त्रिदिवौकसाम्।
भयपुञ्जे कृतेनेव च्छत्रव्याजेन सेवितम् ॥ १२५ ॥
ग्रस्तलोकेश्वरैश्वर्यैरुन्मूलितसुरोत्सवैः।
आसन्नैरायुधैर्दीप्तं विद्युद्भिरिव तोयदम् ॥ १२६ ॥
विधत्ते जययात्रासु यस्य प्रारम्भदुन्दुभिः।
त्रस्तप्रियापरिष्वङ्गसंविभागं दिवौकसाम् ॥ १२७ ॥
यद्भयान्निभृतं भानुरुदेत्यभ्रासितावधि।
चरन्ति च शनैर्वल्लीविलासावधयोऽनिलाः ॥ १२८ ॥
रणे विमानितारातिर्यशस्त्रैलोक्यपुष्पकम्।
यो जहार कुबेरस्य विमानाग्र्यं च पुष्पकम् ॥ १२९ ॥

१. 'शिखरेणेव' ख. २. 'सेवितम्' ख; शा०. ३. 'विलास' ख. ४. 'विभूषितम्' ख. ५. 'संरक्त' ख.

जयाय सर्वजगतां हुत्वा वह्नौ शिरांसि यः ।
सुरासुरप्रतापाग्निग्रासशिक्षामिवाकरोत् ॥ १३० ॥
यत्सैनिककरालूनकल्पपादपपल्लवाः ।
क्रन्दन्तीव भयोद्भ्रान्तैर्भ्रमरैर्नन्दनश्रियः ॥ १३१ ॥
ऐरावणोऽपि यद्भीत्या भृङ्गानां दानवर्जितः ।
कदर्य इव भृत्यानां यातो निरुपजीव्यताम् ॥ १३२ ॥
सुन्दरीं सुन्दरी नाम तक्षकस्य प्रियां प्रियाम् ।
यो जहार विषाहारं तं दृष्ट्वा विरहादिव ॥ १३३ ॥
दृष्ट्वा तमूचे सोच्छ्वासा छिन्ननासा निशाचरी ।
जननी दुर्निमित्तानाममङ्गलकुटुम्बिनी ॥ १३४ ॥
अहो बत दुरारोहं शृङ्गमासाद्य संपदाम् ।
आसन्नदुःसहापातः प्रसुप्तो न विबुध्यसे ॥ १३५ ॥
भूपतिं विभवक्षीवमविज्ञातक्षयोदयम् ।
ग्राम्यं विदग्धनारीव न संपद्भजते चिरम् ॥ १३६ ॥
कार्यकालमतिक्रान्तं सुखासक्तो न वेत्ति यः ।
अक्षयाः संक्षयमुखे हुतास्तेन विभूतयः ॥ १३७ ॥
दुर्दर्शनं व्यसनिनं त्यजन्ति नृपतिं प्रजाः ।
पतिं वृद्धमिवेर्ष्यालुं कामिन्यो नवयौवनाः ॥ १३८ ॥
सर्वत्रानुसचारस्य प्रजाकार्याण्यपश्यतः ।
अन्धस्य द्यूतगोष्ठीव स्ववशा श्रीर्न भूपतेः ॥ १३९ ॥
कवीनां प्रतिभा चक्षुः शास्त्रं चक्षुर्विपश्चिताम् ।
ज्ञानं चक्षुर्महर्षीणां चराश्चक्षुर्महीभृताम् ॥ १४० ॥
क्लीबो यथा गृहाचारं न वेत्ति गृहिणीजितः ।
राष्ट्रवृत्तिं न जानीते रतिवश्यस्तथा नृपः ॥ १४१ ॥
अहो बत परां कोटिमारूढोऽसि प्रमादिनः ।
विभवस्तव विभ्रष्टो दीर्यते यशसा सह ॥ १४२ ॥

कथं नाम न जानीषे घोरं व्यसनमागतम् ।
आसन्नक्रकचाग्रेण लूनेयं श्रीलता तव ॥ ६४३ ॥
राक्षसाः खरमुख्यास्ते रामेण रणशालिना ।
नीताः सर्वे जनस्थाने दयिता बाष्पशेषताम् ॥ ६४४ ॥
अनुद्योगहतारम्भा यस्येयं प्रभविष्णुता ।
प्रयान्ति प्रसभं तस्य तेजांसि च यशांसि च ॥ ६४५ ॥
मदमन्थरसंचारा विलासालसदृष्टयः ।
दीपा इव न पश्यन्ति नृपाः स्वमपि विग्रहम् ॥ ६४६ ॥
लोकपालान्समुत्पाट्य प्राप्य त्रैलोक्यधीरताम् ।
चित्रं हतान्मनुष्येण नानुजान्वेत्सि सानुगः ॥ ६४७ ॥
अल्पप्रदो बहुक्रोधः कृतवैरो निरुद्यमः ।
प्राप्नोत्यवज्ञां नृपतिर्वेश्यारागीव निर्धनः ॥ ६४८ ॥
छिनत्त्येवायसं शस्त्रमद्रव्यं विषयं विषम् ।
नीचावसानप्रभवो मन्युर्मर्माणि मानिनाम् ॥ ६४९ ॥
जितक्रोधस्य वीरस्य बन्दीकृतसुरस्त्रियः ।
तवाप्यभग्नमानस्य मानुषेण पराभवः ॥ ६५० ॥
लक्ष्मणेन सह भ्रात्रा रामो दशरथात्मजः ।
रक्षसां दण्डकारण्ये मन्ये कालः समुत्थितः ॥ ६५१ ॥
सीता नाम वरारोहा दृष्टा तस्य मया वधूः ।
सोऽपि यद्वदनेनेन्दुः प्रयातः पुनरुक्तताम् ॥ ६५२ ॥
सा कान्तिरपरिम्लाना ते गुणा गणनोचिताः ।
नवं च तद्वपुस्तस्याः स्त्रीणामपि विलोभनम् ॥ ६५३ ॥
त्वदर्थं हर्तुमिच्छामि यावत्तां चारुलोचनाम् ।
रामानुजादयं तावन्मया प्राप्तः पराभवः ॥ ६५४ ॥
इति रावणतर्जनम् ॥ २० ॥
इति शूर्पनखावाक्यमाकर्ण्य दशकंधरः ।
भ्रूभङ्गैर्दशभिः कुर्वन्कम्पलोला दिशो दश ॥ ६५५ ॥

कोऽयं रामः कथं रामः किंधर्मः किंपराक्रमः।
इति कोपाकुलालापनिर्घोषैः पूरयन्सभाम् ॥ ६५६ ॥
जन्म कर्म च रामस्य श्रुत्वा स्वस्रा निवेदितम्।
विषादामर्षसंघर्षखेदार्द्रवदनः श्वसन् ॥ ६५७ ॥
ध्यात्वा मुहूर्तमाकम्पवक्रव्यावर्तिकुण्डलः।
विसृज्य सचिवान्सर्वान्रथशालां ययौ स्वयम् ॥ ६५८ ॥
स तत्र मेघनिर्घोषैः पिशाचवदनैः खरैः।
युक्तं समारुह्य रथं क्षणाद्व्योम व्यगाहत ॥ ६५९ ॥
स व्रजन्रोषदीप्तोऽपि सीतामेव व्यचिन्तयत्।
मृत्युस्थानेऽपि मूर्खाणां करोति मदनः पदम् ॥ ६६० ॥
रथेन हेमदीप्तेन व्रजतस्तस्य खे वपुः।
बभौ कनककूटस्य नीलाद्रेरिव सर्वतः ॥ ६६१ ॥
स मन्दमारुतान्दोलिचन्दनागुरुपल्लवे।
तमालतालहिन्तालश्यामले जलधेस्तटे ॥ ६६२ ॥
ददर्श दिव्यं न्यग्रोधं सुचन्द्रं नाम विश्रुतम्।
शतयोजनदीर्घाभिर्हेमशाखाभिरुज्ज्वलम् ॥ ६६३ ॥
तस्य शाखाप्रदेशेषु वालखिल्या मरीचिपाः।
वैखानसाश्च मुनयश्चरन्ति विपुलं तपः ॥ ६६४ ॥
अमृताहरणे यस्मिन्नादाय गजकच्छपौ।
तार्क्ष्यः कनकशैलाभः शाखायां समुपाविशत् ॥ ६६५ ॥
चरणाक्रान्तिभग्नां तां शाखां मुनिजनावृताम्।
तद्रक्षायै समादाय ययौ व्योम्ना खगेश्वरः ॥ ६६६ ॥
निषादविषयं हत्वा तया विपुलविग्रहः।
गत्वा जहार पीयूषं निर्जितत्रिदिवेश्वरम् ॥ ६६७ ॥
तं दिव्यं तरुमारुह्य ददर्श दशकंधरः।
पारेसमुद्रमुन्निद्रतरुरम्यं तपोवनम् ॥ ६६८ ॥

---

१. 'रूपः' शा०. २. 'क्रोध' शा०. ३. 'विचिन्तयन्' शा०. ४. 'नीलाभ्रे' शा०.

अचिरात्संस्थितं तत्र कृष्णाजिनजटाधरम् ।
पुराणसचिवं प्राप मारीचं रजनीचरम् ॥ ६६९ ॥
पूजितस्तेन विनयात्तमुवाच दशाननः ।
कुर्वन्गिरिगुहागर्भे गर्जत्पर्जन्यविभ्रमम् ॥ ६७० ॥
सचिवो धीमतां धुर्यः कार्याणां प्रथमा गतिः ।
भवानेव सदास्माकं श्रीरक्षापरिखाचलः ॥ ६७१ ॥
अभग्नप्रणयो नित्यं त्रैलोक्यविजयोत्सवे ।
त्वद्बुद्धिविभवः पूर्वं पश्चान्मम पराक्रमः ॥ ६७२ ॥
तुल्यं द्वावेव मे यातौ जगज्जयसहायताम् ।
मन्त्रश्च मायागम्भीरः खड्गव्यग्रश्च मे भुजः ॥ ६७३ ॥
ममायं श्रूयतामद्य यदपूर्वः[1] पराभवः ।
लज्जन्ते यत्कथामात्रे मन्मुखानि परस्परम् ॥ ६७४ ॥
भ्रातरो मे महाशूरा जन्मस्थाने धृताः पुरा ।
खरमुख्या हतास्तेऽद्य मनुष्येण पदातिना ॥ ६७५ ॥
चतुर्दश सहस्राणि रक्षसां क्रूरकर्मणाम् ।
हतानि मम रामेण भगिनी च विरूपिता ॥ ६७६ ॥
कान्ता तस्यास्ति दयिता सीतानाम सितस्मिता ।
लावण्यबिन्दवो यस्याः पुपुषुः कमलेन्दवः ॥ ६७७ ॥
मायामृगतनुं कृत्वा तां पुरो रत्नविग्रहम् ।
हत्वा सलक्ष्मणं रामं हन्तुमिच्छामि तामहम् ॥ ६७८ ॥
ततस्तया स रहितः क्रियाहीन इव द्विजः ।
लुप्तशक्तिर्मम परं सुखच्छेद्यो भविष्यति ॥ ६७९ ॥
श्रुत्वेति वक्रं मारीचः क्षपाचरपतेर्वचः ।
तमूचे त्रासशुष्कास्यः कम्पमानः कृताञ्जलिः ॥ ६८० ॥
बत लङ्कापते कोऽयं जातस्ते मतिविप्लवः ।
अन्तं यास्यति यो मन्ये विभवस्य कुलस्य च ॥ ६८१ ॥

१. 'जन्मापूर्वः' शा०.

धूर्ताः प्रियं वदन्त्येव मूर्खाः शृण्वन्ति च प्रियम्।
न वदन्ति न शृण्वन्ति सर्वथा साधवोऽप्रियम्॥ १८२॥
ऐश्वर्यपद्ममधुपा धूर्ता मधुरवादिनः।
विशन्त्येवाशयं राज्ञामवमानपराङ्मुखाः॥ १८३॥
धूर्तानां मधुरा वाणी मधुरा वल्लभा यथा।
न तथेन्दुर्न मदिरा न मृगाक्षी न वल्लकी॥ १८४॥
हितोपदेशविद्वेषकलुषाभिमुखी मतिः।
जनस्य जायते जातु विनाशायोद्यते विधौ॥ १८५॥
अकार्यप्रणयी घोरो राज्ञां प्रायेण दुर्नयः।
महतो राज्यवृक्षस्य मूलघाती परश्वधः॥ १८६॥
देहिनां नूनमासन्ने दुःसहव्यसनानले।
प्रथमं मोहधूमेन मलिनीक्रियते मतिः॥ १८७॥
समदप्रमदापाङ्गभङ्गभङ्गुरविभ्रमाः।
सत्यं विभूतयो राज्ञां मतिमोहपिशाचिकाः॥ १८८॥
म्लायन्ति क्षिप्रभोगेन निःसारविरसान्तराः।
वेश्या चित्रद्युतिर्माला श्रीश्च दूरमनोहरा॥ १८९॥
कष्टं केनोपदिष्टस्ते दुःसहो मोहविभ्रमः।
घोरस्ते संपदां योऽयं क्षयहेतुरिवोत्थितः॥ १९०॥
अहो वत न जानीषे रामस्याद्भुतकर्मणः।
चारहीनः प्रमादी च यशस्त्रैलोक्यविश्रुतम्॥ १९१॥
विश्वामित्रमखत्राणे स शरं प्राहिणोन्मयि।
क्षिप्तोऽहं जलधेः पारे यत्पक्षपवनैः क्षणात्॥ १९२॥
कथं नु दयितां तस्य सीतामग्निशिखामिव।
शिशुदंष्ट्रामिव हरेर्मोहादादातुमिच्छसि॥ १९३॥
चूडामणिमिवादाय शिरसा शासनं पितुः।
चरत्यरण्ये काकुत्स्थः क्षपयन्घोरराक्षसान्॥ १९४॥

दुरन्तमृत्युचरणे मैथिलीहरणे मया ।
नवातङ्कहतां लङ्कां विधवामिव मा कृथाः ॥ ६९५ ॥
ये मदत्यक्तमर्यादा न शृण्वन्ति हितं वचः ।
तेषां मृत्युं प्रयातानां न पुनः संगमः श्रिया ॥ ६९६ ॥
मुनिमांसाशनक्रूरो राक्षसाभ्यामहं सह ।
कदाचिद्दण्डकारण्ये संप्राप्तो राघवाश्रमम् ॥ ६९७ ॥
स मां सानुगमालोक्य मुनिरक्षाकृतक्षणः ।
धनुराकृष्य दीप्ताग्रां प्राहिणोत्सायकत्रयीम् ॥ ६९८ ॥
त्रस्तो जवादहं मुक्तस्तौ तु रात्रिंचरौ हतौ ।
आयुःशेषे कृतान्तोऽपि नूनं याति वयस्यताम् ॥ ६९९ ॥
ततः प्रभृति संन्यस्तशस्त्रोऽयं त्यक्तकिल्बिषः ।
त्रासात्तापसतां यातो वैराग्यं रक्षसां कुतः ॥ ७०० ॥
तपोवनेऽस्मिन्पश्यामि सजटावल्कलान्भयात् ।
वृक्षानपि पृथुस्कन्धान्राघवान्सशिलीमुखान् ॥ ७०१ ॥
दिवि दिक्षु क्षितौ स्वप्ने सजने विजने पुनः ।
सत्यं रामसहस्राणि भयात्पश्यामि तन्मयः ॥ ७०२ ॥
राज्यं रात्रिश्च रामा च रागो राजाथ राशयः ।
रामनामाङ्कवर्णाङ्कास्त्रासं संजनयन्ति मे ॥ ७०३ ॥
त्याज्या यदि न ते लक्ष्मीर्जीवितं यदि वल्लभम् ।
तन्मुञ्च रामवैरेच्छां प्रमाणं यदि मद्वचः ॥ ७०४ ॥
इति नीतिमतः पथ्यं मारीचस्येति तद्वचः ।
श्रुत्वा बभाषे लङ्केशः किंचिदागतविक्रियः ॥ ७०५ ॥
अहो बतातिवीरस्य तवाप्यसदृशं वचः ।
श्रूयते कालजीर्णे वा सर्वमेव विपर्ययात् ॥ ७०६ ॥
प्रतिपक्षपदे मर्त्यस्तत्रापि नयचिन्तनम् ।
किं किं लज्जार्हमस्माभिः सीतालोभेन न श्रुतम् ॥ ७०७ ॥

१. 'तेषामुष्णीसहासिन्या' ख; 'तेषामुत्रस्य यातानां' शा०. २. 'नामाद्यवर्णा' ख.

अधुनैवंविधं वृद्ध न वक्तव्यं त्वया वचः ।
कर्तव्यमेव तु पुनर्भक्तियोगान्मयेप्सितम् ॥ ७०८ ॥
यदि रामशरापातसंपाताद्भयमीक्षसे ।
प्रियं कार्यमकृत्वा मे जीविताशापि ते कुतः ॥ ७०९ ॥
तस्मात्कुरुष्वाभिमतं मम प्रणयिनो[1] विभोः ।
स्वामिसंमानपाथेयं धर्म्यं च निधनं सताम् ॥ ७१० ॥
श्रुत्वेति दशकण्ठस्य मारीचः कठिनं वचः ।
उवाच निःश्वसन्ध्यात्वा दैवस्याज्ञामकुण्ठिताम् ॥ ७११ ॥
अहो बत दुरन्तोऽयं दुःसहस्तव दुर्ग्रहः ।
यः शमं यास्यति व्यक्तं सहैश्वर्यसुखादिभिः ॥ ७१२ ॥
प्रत्यासन्नविनाशानां हितविद्वेषकारिणाम् ।
आतुराणामिवापथ्ये प्रायेणाभ्यधिका रुचिः ॥ ७१३ ॥
स्वच्छन्दकारिणो धातुः शासनान्यायवर्त्मनः ।
भ्रष्टं कः क्षमते धर्तुं श्वभ्रादिव महागजम् ॥ ७१४ ॥
सुचिराद्धत शत्रूणां फलितस्ते मनोरथः ।
ऐश्वर्यतुङ्गश्रृङ्गाग्रात्स्वयं निपतितोऽसि यत् ॥ ७१५ ॥
रामोऽभिरामचरितो विरामः शत्रुसंपदाम् ।
गुणारामः कथं नाम चरामस्तस्य विप्रियम् ॥ ७१६ ॥
मोहादहृदयस्यान्तर्यत्नन्यस्तं हितामृतम् ।
न राहोरिव निःशेषं मुहूर्तमपि तिष्ठति ॥ ७१७ ॥
तस्मात्प्राणपणेनाद्य करोम्यभिमतं तव ।
प्रत्युपस्थितनाशानां नाशायैव हि संगमः ॥ ७१८ ॥
इतो रघुपतेर्बाणस्त्वमितो मृत्युचोदितः ।
किं करोमि त्वदर्थं मेऽवरं रामाद्वधो वरः ॥ ७१९ ॥
शृणु चेदं समुत्पाद्य वैरं रामेण धन्विना ।
त्रिदिवे भुवि पाताले न ते स्थानं भविष्यति ॥ ७२० ॥

१. 'नः प्रभोः' क.

करोमीति वचः श्रुत्वा मारीचस्य दशाननः।
शतकर्ण इव क्षिप्रं कुम्भकर्णाग्रजोऽभवत् ॥ ७२१ ॥
इति मारीचवाक्यम् ॥ २१ ॥

ततः स्यन्दनमारोप्य मारीचं राक्षसेश्वरः।
निजव्यसनविस्तीर्णं विवेश विवशो वनम् ॥ ७२२ ॥
दण्डकारण्यमासाद्य तालतालीनिरन्तरम्।
पुंनागबकुलाशोककर्णिकारवनोज्ज्वलम् ॥ ७२३ ॥
निषण्णनिर्भयमृगाकीर्णकान्ततपोवनम्।
फुल्लवल्लीवितानाग्रगुञ्जन्मञ्जुकपिञ्जलम् ॥ ७२४ ॥
निर्यन्निर्झरझाङ्कारश्रुतिमन्थरकुञ्जरम्।
संसर्पत्फेनपटलीदुकूलधवलापगम् ॥ ७२५ ॥
संचरद्दिव्यललनाचरणाङ्कितसैकतम्।
मुनिकन्यावलिन्यग्रपुष्पनीवारपल्लवम् ॥ ७२६ ॥
वराहमहिषश्यामं समेघौघमिवाम्बरम्।
साट्टहासमिव स्फारिस्फुरत्केसरिकेसरम् ॥ ७२७ ॥
जटालमिव संचारिचमरीचारुचामरम्।
बहुनेत्रमिवालोलशिखण्डिकृतताण्डवम् ॥ ७२८ ॥
सरोमाञ्चमिवोदञ्चन्नवशष्पमुखाङ्कुरम्।
जातस्वेदमिवोन्मीलदवश्यायपयःकणम् ॥ ७२९ ॥
सनिःश्वासमिव स्फूर्जत्कुसुमामोदमारुतम्।
साकम्पमिव सावेगविहङ्गाघूर्णितद्रुमम् ॥ ७३० ॥
प्रहृष्टमिव सूर्यांशुविकसन्नलिनीवनम्।
नवोन्मादमिवोत्तुङ्गप्लवङ्गवलयाकुलम् ॥ ७३१ ॥
उद्वीक्ष्य कुसुमोद्भूतरेणुप्रावरणं वनम्।
ऊचे क्षपाचरपतिः मारीचं प्रणयानतः ॥ ७३२ ॥
अयं स सीताललितालोकनामृतनिर्झरः।
धाम कामस्य मारीच रुचिरो राघवाश्रमः ॥ ७३३ ॥

भिन्नेन्द्रनीलसच्छायनिबिडैः कदलीवनैः ।
विभात्येषा शुकश्यामकञ्चुकीवाश्रमस्थली ॥ ७३४ ॥
अत्र सा मन्मथमही मैथिली पृथुलोचना ।
व्यक्तं वसति वैलक्ष्यकारिणी हारिणी दृशाम् ॥ ७३५ ॥
अन्तर्हितो भवन्क्षिप्रं सिद्ध्यै मायामहोदधेः ।
इत्युक्तो दशकण्ठेन मारीचः प्रययौ पुरः ॥ ७३६ ॥
सोऽभवद्रत्नहरिणः कचस्काञ्चनमौक्तिकः ।
समस्तकौतुकवासो रसो मूर्त इवाद्भुतः ॥ ७३७ ॥
प्रवालशृङ्गो रत्नाभः स बभौ मौक्तिकाङ्कितः ।
सफेनमणिकल्लोलः संचारीव महोदधिः ॥ ७३८ ॥
रत्नान्युच्चित्य विहितः सजीवो रावणाज्ञया ।
हस्तोपायनसारङ्ग इव रोहिणभूभृताम् ॥ ७३९ ॥
गर्भवासे सुधाम्भोधौ संक्रान्तमणिमौक्तिकः ।
च्युतोऽङ्कादिव चन्द्रस्य दशग्रीवभयान्मृगः ॥ ७४० ॥
चतुरश्चारुसंचारी संचरन्नाश्रमे पुनः ।
ययौ सितासिताताम्रो वनलक्ष्मीकटाक्षताम् ॥ ७४१ ॥
कुसुमावचयासक्ता मैथिली तं व्यलोकयत् ।
संसारवैचित्र्यकृतो विधातुरिव वर्णकम् ॥ ७४२ ॥
निर्वर्ण्य तमभूत्सीता क्षिप्रमाश्चर्यनिश्चला ।
वस्तु सातिशयं कस्य न मुष्णाति हठान्मनः ॥ ७४३ ॥
विस्मिता राममभ्येत्य सा बभाषे सितस्मिता ।
हसन्ती पुष्पवल्लीनां भृङ्गान्वदनसौरभैः ॥ ७४४ ॥
आर्यपुत्र विचित्रोऽयं कनकाङ्गः कुरङ्गकः ।
करोति नयनानन्दं मणिमद्बिन्दुसुन्दरः ॥ ७४५ ॥
आस्तीर्णमासनं कान्तमस्य चित्रेण चर्मणा ।
उचितं त्वत्सनाथायाः शयनं च ममेप्सितम् ॥ ७४६ ॥

इति सीतावचः श्रुत्वा दृष्ट्वा हेममयं मृगम्।
उवाच रामः सौमित्रिं स्मितधौताधरद्युतिः॥ ७४७॥
पश्य लक्ष्मण चित्राङ्गः सारङ्गो रत्नभूतिभिः[1]।
करोति त्वचि लुब्धाया जानक्याः कौतुकोत्सवम्॥ ७४८॥
जृम्भमाणस्य पश्यास्य पद्मरागमयीमिव।
जिह्वां दशनमुक्तालीमध्य[2]नायकतां गताम्॥ ७४९॥
चतुर्भिर्विद्रुममयैः शृङ्गैः कुटिलकोटिभिः।
कीर्णांशुभिः करोत्येष दिशः पल्लविता इव॥ ७५०॥
एषोऽहमस्य पदवीं व्रजाम्याकृष्टकार्मुकः।
भवता त्वप्रमत्तेन रक्ष्या जनकनन्दिनी॥ ७५१॥
इत्युक्त्वा चापमाकृष्य रामः सारङ्गमाद्रवत्।
तूर्णं व्रजन्तं वेगेन मनोरथमिवात्मनः॥ ७५२॥

इति मृगदर्शनम्॥ २२॥

क्व दृष्टो हेमहरिणः का स्पृहा तस्य चर्मणि।
प्रायेणादीयते मोहः कर्मणा महतामपि॥ ७५३॥
क्वचिदन्तर्हितं क्षिप्रं क्वचित्प्रकटविग्रहः।
मेघपुञ्जावृते व्योम्नि शशीव स ययौ मृगः॥ ७५४॥
जगाम रामस्तेनाशु कृष्टो विस्मयकारिणा।
चित्रमायाप्रसङ्गेन संसारेणेव सक्तधीः॥ ७५५॥
तस्मै मुमोच काकुत्स्थः सायकं ब्रह्मनिर्मितम्।
प्राग्भिन्नहृदयो येन मृगोऽभूत्क्षणदाचरः॥ ७५६॥
तालमात्रं समुत्प्लुत्य स पपात शराहतः।
दंष्ट्राकरालवक्त्राग्रनिर्यद्रुधिरनिर्झरः॥ ७५७॥
मायया स समालम्ब्य रामस्य सदृशं स्वरम्।
हा लक्ष्मण हतोऽस्मीति चुक्रोश करुणस्वरम्॥ ७५८॥

---

१. 'भङ्गिभिः' शा०. २. 'प्राप्य' ख; 'मध्ये' स्यात्.

आतुराक्रन्दनं श्रुत्वा लक्ष्मणो नूनमेष्यति।
रावणस्तद्विरहितामवाप्स्यति स मैथिलीम् ॥ ७५९ ॥
इति ध्यात्वा विनद्योच्चैर्लक्ष्मणेत्याकुलेन्द्रियः।
प्राणाँस्तत्याज मारीचो न च भक्तिं निजप्रभोः ॥ ७६० ॥

इति मारीचवधः ॥ २३ ॥

रामस्तं निहतं दृष्ट्वा निशाचरमशङ्कत।
पूर्वं कथयति प्रायो मनः पुंसः शुभाशुभम् ॥ ७६१ ॥
अदूरान्मैथिली श्रुत्वा पत्युरार्तस्वरं सती।
रक्षःपराभवत्रस्ता तूर्णं लक्ष्मणमभ्यधात् ॥ ७६२ ॥
गच्छ जानीहि सौमित्रे मित्रं भ्रातरमागतम्।
रक्षसां वहुमायानां वीरं निपतितं मुखे ॥ ७६३ ॥
स ते गुरुः सखा वन्धुः प्रियाः प्राणा वहिश्चराः।
अरण्ये निःसहायोऽसिन्नार्हत्यरिपराभवम् ॥ ७६४ ॥
वचः श्रुत्वेति जानक्याः सौमित्रिर्धैर्यसागरः।
तामूचे मा कृथाः शङ्कां मिथ्यैवार्यपराक्रमे ॥ ७६५ ॥
रणेष्वभिमुखस्तस्य न जातोऽद्यापि किं तु ते।
ललनासुलभं स्नेहवैक्लव्यं जृम्भतेतराम् ॥ ७६६ ॥
नूनं रामं न जानीषे भर्तुर्विक्रममूर्जितम्।
त्रायस्वेति कथं भ्रातुस्तस्य वक्रे वचः स्फुरेत् ॥ ७६७ ॥
व्रजामि कथमार्येण कृष्णसारानुकारिणा।
धृतोऽहं तव रक्षायै राक्षसा हि वहुच्छलाः ॥ ७६८ ॥
लक्ष्मणेनेत्यभिहिते निशम्य जनकात्मजा।
ऊचे त्रासाद्धि दैत्यानां कोपस्य च वशं गता ॥ ७६९ ॥
अभग्नविक्रमस्यापि निश्चितौ न जयाजयौ।
निर्गीर्णः किं न वृत्रेण देवो वज्रधरः पुरा ॥ ७७० ॥
आतुराक्रन्दनं श्रुत्वा कथं निःसंभ्रमो भवान्।

भ्रातरः शत्रवो नूनं पुंसामेकार्थभागिनः ॥ ७७१ ॥
स्वजनाद्भयमस्तीति तत्त्वज्ञाः सत्यमूचिरे ।
क्षयक्षणेषु जागर्ति न विज्ञातान्तरः परः ॥ ७७२ ॥
क एवं नाम जानीते मिथ्याप्रणययन्त्रितः ।
यज्ज्ञातापि प्रियो भ्रातुर्विनिपातं प्रतीक्षते ॥ ७७३ ॥
व्यक्तं स्फुरति ते कापि पापादनुचिता मतिः ।
जानन्नपि न जानीषे येन मां भर्तृजीविताम् ॥ ७७४ ॥
श्रुत्वेति सीतावक्त्रेन्दोः कलङ्कमिव वाच्यताम् ।
भीतो बभूव सौमित्रिर्वज्रेणेव विदारितः ॥ ७७५ ॥
सोऽब्रवीत्प्राञ्जलिः सीतां मातस्त्वं दैवतं मम ।
न युक्तमुत्सहे वक्तुं वाग्बाणनिहतस्त्वया ॥ ७७६ ॥
दृढग्रहा अप्यबलाः पेशलाः कुटिलाशयाः ।
मित्रभ्रातृविभेदिन्यः सर्वथा कुटिलाः स्त्रियः ॥ ७७७ ॥
गुणा जनापवादान्ताः दुष्पुत्रान्ताः कुलस्त्रियः ।
स्त्रीभेदान्ताः सुहृत्स्नेहा दुर्नयान्ताश्च संपदः ॥ ७७८ ॥
मातस्त्वया दुरुक्तेऽस्मिन्साक्षिणो हि वनेचराः ।
व्रजामि राघवं द्रष्टुं पान्तु त्वां वनदेवताः ॥ ७७९ ॥
इत्युक्त्वा विमनास्तूर्णं परिम्लानाननः श्वसन् ।
जगाम रामपदवीं लक्ष्मणः क्ष्मां विलोकयन् ॥ ७८० ॥
इति लक्ष्मणप्रयाणम् ॥ २४ ॥

अत्रान्तरे दशग्रीवे प्रविष्टे काननं स्वयम् ।
भयाच्चकम्पिरे वृक्षाः प्रययौ न च मारुतः ॥ ७८१ ॥
त्वङ्गत्तुङ्गतरङ्गाग्रभङ्गिन्योऽपि शनैः शनैः ।
तरङ्गिण्यो ययुर्भीत्या मूकसारसनूपुराः ॥ ७८२ ॥
ततः पिधाय विपुलं विग्रहं दशकंधरः ।
भिक्षुरूपोऽभवद्वृद्धः स्नायुशेषतनुः श्वसन् ॥ ७८३ ॥

१. 'भाविनः' क; शा०.

मुण्डः कमण्डलुच्छत्रदण्डाङ्कः श्रमकम्पितः ।
योगीव ध्यानलोलाक्षः सीतामन्तर्विचिन्तयन् ॥ ७८४ ॥
भुजङ्ग इव संछन्नः कुटिलस्तृणपल्लवैः ।
ददर्शाभ्येत्य वैदेहीं राहुः शशिकलामिव ॥ ७८५ ॥
आसीनां पर्णशालाग्रे पीतकौशीयकांशुकाम् ।
लतामिवानिलोदञ्चत्पुष्पकिञ्जल्कपिञ्जराम् ॥ ७८६ ॥
तामुत्फुल्लपलाशाक्षीं संवीक्ष्य नलिनाननाम् ।
जगाम कामस्य वशं वशीकृतजगत्त्रयः ॥ ७८७ ॥
लुलितां व्याजभीत्येव सकम्पविकलाक्षराम् ।
प्रत्यग्रमदनाकारो गद्गदां गिरमादधे ॥ ७८८ ॥
शृङ्गारशिक्षाकरिणी हरिणी हारिलोचना ।
का त्वं लावण्यनलिनी मलिनीकृतचन्द्रिका ॥ ७८९ ॥
इमौ ते कुरुतः कान्तिं करौ कमलकोमलौ ।
तारुण्यपारिजातस्य नवपल्लवविभ्रमम् ॥ ७९० ॥
इयं ते कान्तितटिनी हारफेनावली सिता ।
चक्रवाकयुगेनेव स्तनद्वन्द्वेन भूषिता ॥ ७९१ ॥
क्षयक्षीणस्य शशिनो दग्धस्य च मनोभुवः ।
धात्रा त्वं निर्मिता सुभ्रु कच्चित्संजीवनौषधिः ॥ ७९२ ॥
रक्ताधरदलं नेत्रभ्रमरं सितकेसरम् ।
इदं ते भाति कान्तिश्रीनिवासकमलं मुखम् ॥ ७९३ ॥
नेदमप्सरसां रूपं गन्धर्वीणां कथैव का ।
दूरे विद्याधरस्त्रीणां कासि कस्य कुतोऽथ वा ॥ ७९४ ॥
अस्मिन्घोरतरव्यालरक्षःपक्षिगणे वने ।
कथमेकैव वससि त्रस्तेवेन्दुद्युतिर्दिवः ॥ ७९५ ॥
गेहे त्रैलोक्यजयिनामिदमर्हति ते वपुः ।
उत्तुङ्गरत्नहर्म्याग्रशृङ्गोत्तुङ्गावतंसकम् ॥ ७९६ ॥

इति क्षपाचरपतेः श्रुत्वा जनकनन्दिनी ।
चकारातिथ्यसत्कारं निर्व्याजमुनिगौरवात् ॥ ७९७ ॥
तस्मै निजकुलं रामवृत्तान्तं च निवेद्य सा ।
मद्भर्तुर्लप्स्यसे पूजां प्रतीक्षस्वेत्युवाच तम् ॥ ७९८ ॥
स सीतावचनं श्रुत्वा प्रसह्य हरणोत्सुकः ।
तामूचे दन्तकिरणैर्दंष्ट्रां प्रकटयन्निव ॥ ७९९ ॥
अहं स विश्वविजयी वसतिः सर्वसंपदाम् ।
द्रावणस्त्रिदशेन्द्रस्य रावणो लोकरावणः ॥ ८०० ॥
हेमप्रकारजघना सरिन्नाथोर्मिमेखला ।
रत्नांशुकवती लङ्का निःशङ्कायतनं मम ॥ ८०१ ॥
अविश्रान्तोत्सवा सा श्रीस्ते भोगाश्चावियोगिनः ।
त्वत्संगमेन मे यान्तु त्रैलोक्यस्पृहणीयताम् ॥ ८०२ ॥
भ्रातुर्वैश्रवणस्यापि विमानं मानिनो मया ।
अग्र्यमैश्वर्यवृक्षस्य पुष्पकं पुष्पकं हृतम् ॥ ८०३ ॥
सुरैस्त्रैणं तृणं मन्ये न धीर्विद्याधरीषु मे ।
शोचामि सुभ्रु वीक्ष्य त्वामन्यस्त्रीक्षपितं वयः ॥ ८०४ ॥
धिक्सुखं त्वद्विहीनानां का विभूतिस्त्वया विना ।
अकाम एव कामोऽसौ यस्य त्वं नावलम्बनम् ॥ ८०५ ॥
प्रसादः क्रियते सुभ्रु विहारस्तव रोचताम् ।
मया सह विशालाक्षि लङ्कोपवनभूमिषु ॥ ८०६ ॥
यत्प्रसादं प्रतीक्षन्ते सुरगन्धर्वकिंनराः ।
प्रणयी ते जनः सोऽयं स्वदारेषु निरादरः ॥ ८०७ ॥
श्रुत्वैतत्कोपसंतप्ता वज्रपातोपमं वचः ।
जगाद जानकी रूक्षं सती मानेन निर्भया ॥ ८०८ ॥
अहो बतातिविषमं विषं पातुं समीहसे ।
यस्यामोदेन समदः सानुगो न भविष्यसि ॥ ८०९ ॥

गुणरत्नसुधाम्भोधिर्नयनानन्दबान्धवः।
औचित्यस्योचितं धाम श्यामः कमललोचनः॥ ८१० ॥
विश्वरक्षामणिर्वीरः पतिर्मे धन्विनां वरः।
प्रांशुः प्राज्यभुजस्तम्भस्तम्भितारिमनोरथः॥ ८११ ॥
भगीरथ इवानल्पसर्पत्कीर्तिसुरापगः।
यस्याग्रे न प्रकाशन्ते तेजांसि च तपांसि च॥ ८१२ ॥
प्रतापधाम्नस्तस्याहं रामस्य सहचारिणी।
प्रभेव भास्वतो नित्यं निशाचरकुलाशनेः॥ ८१३ ॥
तां स्प्रष्टुमिच्छसि कथं मोहान्मां त्यक्तजीवितः।
जिह्वामिव गजारातेर्जृम्भमाणस्य जम्बुकः॥ ८१४ ॥
मोहोऽयं ते निपातो वा विपाकः कुकृतस्य वा।
ऐश्वर्यं कुलमात्मानं यत्स्वयं हन्तुमिच्छसि॥ ८१५ ॥
आसन्नदुःसहापातात्त्वत्तो व्यक्तं क्षपाचर।
संपन्मूलहताद्वृक्षाद्विहंगालीव विद्रुता॥ ८१६ ॥
रामस्य विप्रिये कस्त्वं मत्तेभस्येव गर्दभः।
शार्दूलस्येव शशकः सुपर्णस्येव वायसः॥ ८१७ ॥
इति सीतावचः श्रुत्वा सकोपो राक्षसेश्वरः।
ऊचे कन्दर्पकारुण्यात्क्रूरोऽपि मधुराक्षरम्॥ ८१८ ॥
न मामर्हसि लोलाक्षि प्रत्याख्यातुं शुचिस्मिते।
यस्याज्ञा त्रिदशाधीशशिखाशेखरशालिनी॥ ८१९ ॥
अस्मिन्ममाननवने रुषा भ्रूभङ्गसंगते।
निपतन्ति विमानेभ्यः स्रस्तायुधधराः सुराः॥ ८२० ॥
नोष्णांशुस्तापमादत्ते मद्भयाद्भीरुमारुताः।
नोद्धतं परिसर्पन्ति विनीताः सेवका इव॥ ८२१ ॥
अस्तु त्रैलोक्यलक्ष्मीस्ते सपत्नी मत्परिग्रहात्।
त्वत्संगमसुधासिक्ता भवन्तु मम संपदः॥ ८२२ ॥

अल्पायुषा मनुष्येण किं रामेण हतौजसा ।
तं कञ्चुकं भुजंगीव त्यज दिव्योपभोगिनी ॥ ८२३ ॥
श्रुत्वा तत्कोपताम्राक्षी कम्पिता जनकात्मजा ।
आज्यप्रज्वलितेवाग्नेः शिखा प्रोवाच रावणम् ॥ ८२४ ॥
विनष्टाः सर्वथा सर्वे वराकाः क्षणदाचराः ।
येषां परोक्षे त्वद्दोषाद्विनाशोऽयमुपस्थितः ॥ ८२५ ॥
धिगेतां गर्हितां लोके दुराचारानुजीविताम् ।
यया सुप्ताः क्षयं यान्ति निर्दोषा अपि सेवकाः ॥ ८२६ ॥
विमुञ्च परदारेच्छां मा गमः प्रलयं मुधा ।
रामदर्शनपर्यन्तं जीवितं किं न शोचसि ॥ ८२७ ॥
याते चापप्रणयितामार्यसूनोर्भुजद्रुमे ।
पाप प्रयास्यसि क्षिप्रं दुर्नयख्यातिशेषताम् ॥ ८२८ ॥
क्षणाद्दिक्षु निरुद्धासु रामचापच्युतैः शरैः ।
मातुरप्युदरे नूनं न ते स्थानं भविष्यति ॥ ८२९ ॥
विद्युद्विलासिनां व्योम्नि दिगन्तव्यापिनां भुवि ।
सर्वथा रामबाणानां पातालेऽप्यहता गतिः ॥ ८३० ॥
करिष्यत्युपदेशं ते मृत्योर्भ्रूभङ्गभङ्गुरा ।
चापवल्ली रघुपतेस्त्रैलोक्योत्सेकतर्जनी ॥ ८३१ ॥
अभेद्यतां वक्षसस्ते कुलिशोल्लेखलक्ष्मणः ।
करिष्यन्ति हतां घोरा राघवस्य शराः खराः ॥ ८३२ ॥
करपत्रशिलापाकवज्रकण्टकसंकटैः ।
अवश्यमुत्खाततनू रामबाणैः प्रतुष्यसि ॥ ८३३ ॥
इत्युक्तः परुषं रामपत्न्या नक्तंचरेश्वरः ।
निष्पिष्य पाणिना पाणिं घोरं स्वं वपुराददे ॥ ८३४ ॥
सोऽभूत्त्रिदशसंनाशकारिवक्त्रवनोत्कटः ।
स्पष्टदंष्ट्रावटाट्टालघटाघटितदिक्तटः ॥ ८३५ ॥

१. 'न तां' शा०.

शुभ्राभ्रविभ्रमास्तस्य ययुर्दंष्ट्रांशुसंचयाः।
व्योमाब्धिमध्यविस्फारफेनकूटाट्टहासताम्॥ ८३६ ॥
मिथःसंघट्टसंजातस्फुलिङ्गा कुण्डलावली।
बभौ तस्यार्कमालेव कल्पान्तोल्काग्निवर्धिनी॥ ८३७ ॥
रक्तमाल्याम्बरधरः प्रदीप्तविविधायुधः।
सोऽभूद्दावानलालोलः ससंध्याभ्र इवाचलः॥ ८३८ ॥
तुषार[1]तारस्तस्योच्चैः स्फटिकस्यन्दनिर्झरः।
बभार हारः करकावृष्टिशोभां घनाकृतेः॥ ८३९ ॥
उद्ययुर्भूरिकेयूरकान्तिकन्दलिनो भुजाः।
अहंपूर्विकयेवास्य जानकीहरणोत्सुकाः॥ ८४० ॥
सोऽब्रवीत्क्षुभिताम्भोधिघोरनिर्घोषभीषणम्।
दोलालीलामिव मुहुर्भ्रूभङ्गैरादिशन्दिशाम्॥ ८४१ ॥
मूढे हितं न जानीषे तत्त्वेनाभिहितं मया।
असत्यप्रणयाः सत्यशङ्किन्यः सर्वथा स्त्रियः॥ ८४२ ॥
पश्य भ्रूक्षेपमात्रेण विश्वविप्लवकारिणा।
स्वर्गं करोमि पाताले पातालं वा सुरालये॥ ८४३ ॥
भजस्व जितमृत्युं मां त्यज मर्त्यं क्षणायुषम्।
क्लीबस्तत्याज राज्यं यः स्त्रीवाक्येन विनष्टधीः॥ ८४४ ॥
नद्यो निम्नानुसारिण्यः कदर्याभिरताः श्रियः।
नार्यो नीचानुरागिण्यो धूर्ताधीनाश्च बुद्धयः॥ ८४५ ॥
प्रायः प्रीतिर्विरूपेषु निर्गुणेष्वधमेषु च।
बालानामबलानां च नित्याभ्यासेन जायते॥ ८४६ ॥
सान्त्विताप्यप्रियं ब्रूषे प्रणयं नाभिमन्यसे।
दर्पात्परिभवन्त्येव योषितो हृदि लालिताः॥ ८४७ ॥
एष स्वयं प्रसह्य त्वां हराम्यधमरागिणीम्।
सुखभोग्याः स्त्रियः सत्यमाक्रम्यैव वशीकृताः॥ ८४८ ॥

१. 'द्वार' शा०.

अतोऽन्यदुत्सहे वक्तुं घोरमप्रियवादिनि ।
किं करोम्यतिदुर्वृत्तं मनो मग्नमिदं त्वयि ॥ ८४९ ॥
इत्युक्त्वा तां स जग्राह क्रोधान्धो राक्षसाधिपः ।
उर्वोः केशेषु चाकृष्य करेण कदलीमिव ॥ ८५० ॥
तं दृष्ट्वाञ्जनशैलाभं हरन्तं जानकीं बलात् ।
दंष्ट्राकरालं सत्रासं दुद्रुवुर्वनदेवताः ॥ ८५१ ॥
तस्यादृश्यत निर्घोषघोरः काञ्चनपिङ्गलः ।
खरयुक्तो रथः स्फूर्जद्विद्युद्दीप्त इवाम्बुदः ॥ ८५२ ॥
स वैदेहीं समादाय स्यन्दनेन पताकिना ।
खं विवेश भयोद्भ्रान्तां स्वर्नदीं दर्शयन्निव ॥ ८५३ ॥
गृहीता तेन सा तन्वी बभौ तालवनत्विषा ।
अकालकालमेघेन प्राचीव शशिनः कला ॥ ८५४ ॥
सा श्वभ्रपतितेवोग्रभयमीलितलोचना ।
किमेतदिति नाज्ञासीत्क्षणं मोहहतेव धीः ॥ ८५५ ॥
कृच्छ्रेण संज्ञामासाद्य करुणं विललाप सा ।
उद्ग्रीवैराश्रममृगैः साश्रुमालोकिता मुहुः ॥ ८५६ ॥
हा लक्ष्मण विमूढाहं भ्रातुस्ते दयिता सती ।
हृता त्वद्वाक्यविमुखी रक्षसा धीमतां वर ॥ ८५७ ॥
हा नाथ ह्रियमाणां मां राक्षसेन बलीयसा ।
त्रैलोक्यरक्षासंनद्ध प्रियां कथमुपेक्षसे ॥ ८५८ ॥
स्वस्त्यस्तु वः कर्णिकारचूतपल्लवकेसराः ।
रक्षसा रामरहिता हृताहमबला बलात् ॥ ८५९ ॥
गोदावरि नमामि त्वां गिरीणामयमञ्जलिः ।
सर्वे शंसत रामाय रक्षसा[1] वल्लभा हृता ॥ ८६० ॥
सत्त्वेभ्यश्च मुनिभ्यश्च नमः कीर्तिः प्रयातु वः ।
परित्रस्तजनत्राणपवित्रकथनप्रथाम् ॥ ८६१ ॥

---

१. 'राक्षसेन हृतां प्रियाम्' ख.

श्रुत्वैतन्नोचिरे किंचित्सत्रासास्त्रिदशा अपि ।
को रावणोग्रदहने स्वयं पतितुमीश्वरः ॥ ८६२ ॥

इति सीतापहरणम् ॥ २९ ॥

तस्याः क्रन्दितमाकर्ण्य जटायुर्गृध्रभूपतिः[1] ।
उवाच रावणं दूरात्पादपे महति स्थितः ॥ ८६३ ॥
जनापवादकलिले पौलस्त्यकुलमुन्नतम् ।
अहो नु पातकश्वभ्रे पातितो भवता स्वयम् ॥ ८६४ ॥
लोभः परवधूवाञ्छा नृशंसत्वमसत्यता ।
शुद्धजन्मपटे पुंसामेताः कर्दमविप्रुषः ॥ ८६५ ॥
लज्जैषा यदि भूपालः परदारान्परामृशेत् ।
त्रातारो[2] यदि हन्तारो रक्षितारो नु तत्र के ॥ ८६६ ॥
प्रभविष्णुर्न तत्कुर्यात्साधूनां संगमेषु यत् ।
प्राप्नोति पृथुधिक्कारगर्हाभारकदर्थनाम् ॥ ८६७ ॥
रामस्य शुद्धयशसः पत्नी धर्मनिधेः कुलात् ।
हरतस्तव वक्त्राणि न लज्जन्ते परस्परम् ॥ ८६८ ॥
अरुणस्यात्मजं धर्म्यं पुराणं सत्पथि स्थितम् ।
वृद्धं जटायुषं नाम गृध्रराजमवेहि माम् ॥ ८६९ ॥
त्वया हर्तुं न शक्यैषा मयि जीवति जानकी ।
अरणिर्वृषलेनेव शत्रुश्रीरिव भीरुणा ॥ ८७० ॥
अहो नु मदनान्धेन रामस्य हरता प्रियाम् ।
कण्ठे हारधिया मूढ कालव्यालः कृतस्त्वया ॥ ८७१ ॥
भुञ्जन्ते परिणामार्हं शक्यमेव च कुर्वते ।
फलोचितं च जल्पन्ति साधवो दूरदर्शिनः ॥ ८७२ ॥
अशक्यं पापमलिनं संपदुन्मूलनक्षमम् ।
जीवितान्तकरं घोरं मा कृथाः कर्म गर्हितम् ॥ ८७३ ॥

---

१. 'भूधरः' ग्रा०. २. 'भ्रातरो' क-ख.

षष्टिर्वर्षसहस्राणि प्रयातानि ममायुषः ।
श्रुतमद्यैव दृष्टं च परस्त्रीहरणं मया ॥ ८७४ ॥
कथं मम वचः पथ्यमवधीर्यैव धावसि ।
अधुनैव मया भग्नं पश्यन्तु त्वां नभश्चराः ॥ ८७५ ॥
इति गृध्रपतेः श्रुत्वा वचनं रावणोऽवदत् ।
दंष्ट्राकरालमिव खं कुर्वन्कोपस्मितांशुभिः ॥ ८७६ ॥
चिरादन्विष्य लब्धोऽसि नूनं कालेन खेचर ।
निर्भयो यन्ममाप्यग्रे बभाषे प्रतिभान्वितम् ॥ ८७७ ॥
वृद्धोऽपि मां न जानासि लोकेषु प्रथितं कथम् ।
जीर्णं शरीरमथ वा खिन्नस्त्वं त्यक्तुमिच्छसि ॥ ८७८ ॥
येनोप्यते विसंवादिनिर्वाहविपुलं वचः ।
तदसत्यपुरीषस्य निर्गमच्छिद्रमाननम् ॥ ८७९ ॥
इत्युक्त्वा कोपताम्राक्षो राक्षसः पक्षिणां वरम् ।
कर्णिकालीननाराचैस्तीक्ष्णैः क्षिप्रमपूरयत् ॥ ८८० ॥
वज्राग्रनखराभ्यां च चरणाभ्यां विदार्य तम् ।
खगः फुल्लमिवाशोकं चकार रुधिरारुणम् ॥ ८८१ ॥
दशग्रीवभुजोत्सृष्टा गृध्रराजं दशेषवः ।
विविशुः पृथुशूत्काराः सनिःश्वासा इवोरगाः ॥ ८८२ ॥
ततः कोपाकुलः पक्षी पक्षाभ्यां राक्षसप्रभोः ।
बभञ्ज दीप्ररत्नांशुपिञ्जरं सशरं धनुः ॥ ८८३ ॥
तस्य हेममयं दीप्तं प्रतापमिव कङ्कटम् ।
छित्त्वा जघानाशु रथं मनोरथमिवायतम् ॥ ८८४ ॥
पपात राक्षसेन्द्रस्य छत्रं तच्चरणाहतम् ।
पुलस्त्यवंशो मलिनो जानकीहरणादिव ॥ ८८५ ॥
छिन्नायुधं हतरथं तमुवाच विहंगमः ।
त्यज रामस्य महिषीं प्राणान्रक्ष सह श्रिया ॥ ८८६ ॥

---

१. 'च्चप्रतिमं' क.

नेयं श्रीः सहते शुद्धशीलमानससारसी ।
धिक्कारमलिनं पाप प्रवादजलदागमम् ॥ ८८७ ॥
तेषामेव विभात्येष निष्कलङ्को यशःशशी ।
शीलं विभूषणं येषां धर्मो बन्धुर्दया प्रिया ॥ ८८८ ॥
अनायत्तं कृतान्तस्य साधूनां जीवितं यशः ।
सश्वासमेव मरणं शीलत्यागः शरीरिणाम् ॥ ८८९ ॥
अवश्यं त्यक्तसद्वृत्तः पौलस्त्य न भविष्यसि ।
न ह्यनासन्ननाशानामुदेति मलिना मतिः ॥ ८९० ॥
इत्युक्त्वा निपपातास्य पृष्ठे वज्रनखः खगः ।
स चकम्पे चिरं येन क्षितिकम्प इवाचलः ॥ ८९१ ॥
मौलिरत्नांशुशबलैस्तमाकृष्य शिरोरुहैः ।
चक्रे स शक्रचापाङ्क लीलाभ्रमिव भूधरम् ॥ ८९२ ॥
वामेनाङ्केन वैदेहीमवष्टभ्य दशाननः ।
तलाघातेन मुष्टिभ्यां पद्भ्यां च निजघान तम् ॥ ८९३ ॥
स रावणकराघातैस्तैरकम्पितविग्रहः ।
तं संभ्रमाद्भुतरुषां विधेयं विदधे खगः ॥ ८९४ ॥
ततः सीतां समुत्सृज्य संरुषद्दशकंधरः ।
तुण्डाग्रपक्षचरणांश्चिच्छेदास्य महासिना ॥ ८९५ ॥
कृपाणकृत्तसर्वाङ्गं विहंगं पतितं भुवि ।
आर्ताभिसृत्य वैदेही परिष्वज्य शुशोच तम् ॥ ८९६ ॥
एवं शरीरं तत्याज सीतार्थं गृध्रभूपतिः ।
आपन्नत्राणसज्जानां प्राणः सत्त्ववतां तृणम् ॥ ८९७ ॥

इति जटायुवधः ॥ २१ ॥

क्षणशेषायुषि क्षोणीमालिङ्ग्यैव जटायुषि ।
स्थिते रुधिरदिग्धाङ्गे चुक्रोश जनकात्मजा ॥ ८९८ ॥
सा रावणेनाभिसृता संभ्रमव्याकुलांशुका ।
वृक्षानप्यभिदुद्राव संत्रस्ता शरणैषिणी ॥ ८९९ ॥

तस्या भुजङ्गकुटिलं केशपाशं क्षपाचरः।
जवेनाभ्येत्य जग्राह कालपाशमिवात्मनः॥ ९०० ॥
तस्यां केशेषु कृष्टायां घोरेण तमसा वृताः।
दिशो नीलाम्बरेणेव बभूवुः पिहिताननाः॥ ९०१ ॥
तां वीक्ष्य राक्षसाकृष्टां धुतपल्लवपाणयः।
मञ्जर्यो मधुपालापाः प्रलापिन्यश्चकम्पिरे॥ ९०२ ॥
मुखराभरणां व्योम्ना तामादाय जगाम सः।
क्वणन्मधुकरां वल्लीमुन्मूल्येव महानिलः॥ ९०३ ॥
बभौ भुजवने तस्य सीतामुखसरोरुहम्।
दृश्यं क्वचिददृश्यं च शशीव घनपञ्जरे॥ ९०४ ॥
रावणेन हृतां ज्ञात्वा रामस्य दयितां बलात्।
कृतं कार्यममन्यन्त चतुर्मुखमुखाः सुराः॥ ९०५ ॥
ततः पपात चरणान्मुखरो मणिनूपुरः।
वैदेह्या राक्षसत्रासमुक्ताक्रन्द इव क्षितौ॥ ९०६ ॥
हारमुक्ताफलान्यस्याः पतितानि चकाशिरे।
दिवः प्रक्षीणपुण्यानि नक्षत्राणीव भूतले॥ ९०७ ॥
तस्या विभूषणान्युग्रवेगगामिनि रावणे।
कुसुमानीव मञ्जर्या व्यशीर्यन्त समन्ततः[1]॥ ९०८ ॥
उद्भ्रान्तभृङ्गभ्रूभङ्गाः सीतां शाखाभुजैर्मुहुः।
न भेतव्यमिति प्राहुर्वृक्षाः पक्षिरुतैरिव॥ ९०९ ॥
सिंहव्याघ्रा अपि रुषा सीताच्छायानुयायिनः।
दंष्ट्राकरालैर्वदनैर्दशाननमतर्जयन्॥ ९१० ॥
सीतापराभवामर्षमर्षणानुशयाकुलः।
वैलक्ष्यादिव चण्डांशुर्बभूवापाण्डुमण्डलः॥ ९११ ॥
दीप्तमौलिप्रभादामवेगदीर्घीकृतं बभौ।
दशास्यस्य गतौ हैमं मानसूत्रमिवाम्बरे॥ ९१२ ॥

---

१. 'दिशो दश' शा०.

गिरिशृङ्गगतान्यत्र साधुरूपान्प्लवङ्गमान्।
विलोक्य सीता तत्याज भूषणान्युपलब्धये ॥ ९१३ ॥
ततः सागरमुल्लङ्घ्य लङ्कां प्राप दशाननः।
रामचापच्युत इव क्षिप्रपाती शिलीमुखः ॥ ९१४ ॥
रामपत्नीं समादाय राजधानीं विवेश सः।
स्वकुलक्षयदावाग्नेः शिखां पूर्वोद्गतामिव ॥ ९१५ ॥
रामस्य चरितं ज्ञातुं गूढानष्टौ स राक्षसान्।
विससर्ज जनस्थाने सर्वप्राणिविचिन्तकान् ॥ ९१६ ॥
नानारत्नमयीं हेमहर्म्यामन्तःपुरावलीम्।
दिव्यामदर्शयत्तस्या दर्पान्धो दशकंधरः ॥ ९१७ ॥
रक्षायै राक्षसीस्तस्या विधाय विकृताननाः।
मेने स्वाधीनतां यातां स तामन्तकमोहितः ॥ ९१८ ॥
सोऽब्रवीद्रक्षसां विश्वजयिनां विश्रुतौजसाम्।
द्वाचत्वारिंशदुग्राणां कोट्यो मम पदानुगाः ॥ ९१९ ॥
सुरकिंनरगन्धर्वविद्याधरमृगीदृशाम्।
सीते शतसहस्राणि कामं मम परिग्रहः ॥ ९२० ॥
इयं मणिमयी लङ्का विमानं पुष्पकं च मे।
दुर्लभं त्रिदशेन्द्राणां मनोरथगतेरपि ॥ ९२१ ॥
सोऽहं त्रिभुवनश्लाघ्यपरिवारपरिच्छदः।
त्वदधीनः शशिमुखि त्वदालोकनजीवितः ॥ ९२२ ॥
यस्य मे भ्रूलतोत्क्षेपवर्तिन्यो विश्वसंपदः।
सोऽहं त्वदाज्ञाप्रणयी जयत्यसमसायकः ॥ ९२३ ॥
अस्मिन्कल्पलतोद्याने रमस्व सुभगे मया।
इदं पीनस्तनोदग्रं न चिरं चारु यौवनम् ॥ ९२४ ॥
त्यज रामगतामाशां नेयं प्राप्यापरैः पुरी।
संकल्पाः पङ्गवो यस्यां का तत्र मरुतां गतिः ॥ ९२५ ॥

वदनेन्दुरयं लोकलोचनानन्दबान्धवः ।
न ते सितसिते भाति विषादजलदावृतः ॥ ९२६ ॥
प्रसीद सुमुखि स्मेरास्त्वत्पादनखकान्तयः ।
मयैताः प्रणतौ नीता मौलिमालावतंसताम् ॥ ९२७ ॥
अशिक्षितप्रणामानां मानोन्नतिभृतां सदा ।
शिरसां मम सुश्रोणि नवोऽयं विनयक्रमः ॥ ९२८ ॥
श्रुत्वेति दशकण्ठस्य वैदेही दुःसहं वचः ।
ऊचे धृत्वा तृणं मध्ये निर्भया मरणैषिणी ॥ ९२९ ॥
दुर्वृत्त दुर्नयस्यास्य दर्पस्य विभवस्य च ।
अवश्यं तव काकुत्स्थः क्षयदीक्षां विधास्यति ॥ ९३० ॥
चौरस्येव प्रलापोऽयं वध्यभूमिं श्रितस्य ते ।
मूढ स्वस्थोऽसि मिथ्यैव मृत्योरङ्कगतः कथम् ॥ ९३१ ॥
सुहृद्भिर्विहर क्षिप्रं कुपितं च प्रसादय ।
रामभ्रूभङ्गदृष्टानां न पुनस्तैः समागमः ॥ ९३२ ॥
मण्डलीकृतचापस्य रामार्कस्य शरांशुभिः ।
भविष्यति क्षयोऽवश्यं तमसामिव रक्षसाम् ॥ ९३३ ॥
तपःक्लेशार्जितां लक्ष्मीं रक्ष राक्षसदुर्लभाम् ।
चित्रधूम इवैश्वर्यं विनाशयति दुर्नयः ॥ ९३४ ॥
श्रीलता मूलपरशुर्यशः शीतांशुवारिदः ।
ऐश्वर्यजलधेरौर्वः शुभाय कस्य दुर्नयः ॥ ९३५ ॥
एतास्तव दुराचार जीवितेन सह श्रियः ।
दुर्नयादिष्टमार्गेण यान्ति कालोपहारताम् ॥ ९३६ ॥
मां कोपाकुलितः क्षिप्रं भक्षय क्षणदाचर ।
न प्राप्याहं त्वया पाप श्वपाकेनेव यज्ञभूः ॥ ९३७ ॥
इति ब्रुवाणां वैदेहीं प्रत्युवाच दशाननः ।
अद्यापि परुषं सीते सहते रावणो वचः ॥ ९३८ ॥

संवत्सरेण यदि मे सीते[1] नैष्यति वश्यताम्।
सूदास्त्वां दारयिष्यन्ति ततो मम महानसे ॥ ९३९ ॥
इत्युक्त्वा राक्षसस्त्रीणां व्याघ्रीणां हरिणीमिव।
हस्ते चिक्षेप तां तन्वीमशोकवनिकान्तरे ॥ ९४० ॥
सा राक्षसीभिर्घोराभिस्तर्ज्यमाना वरानना।
निमग्ना न सं[2](?)माधातुमगाधे व्यसनोदधौ ॥ ९४१ ॥
अत्रान्तरे ब्रह्मवाक्यात्स्वयं देवः सुरेश्वरः।
विधाय निद्रया मोहं राक्षसीनामलक्षितः ॥ ९४२ ॥
अभ्येत्य सीतां प्रोवाच शुचिचारित्रभूषणाम्।
पुत्रि रामेण न चिरात्संगमस्ते भविष्यति ॥ ९४३ ॥
इत्याश्वास्य शनैः सीतां तस्यै विग्रहधारणम्।
दिव्यं ददौ हविस्तृष्णाक्षुत्क्लमापहरं परम् ॥ ९४४ ॥

इति हविःप्रदानम् ॥ २७ ॥

रामोऽपि हेमहरिणाकारं हत्वा क्षपाचरम्।
सीतामुत्कण्ठितो द्रष्टुं शङ्कमानो न्यवर्तत ॥ ९४५ ॥
स दुःखपिशुनं श्रुत्वा स्वरं गोमायुपक्षिणाम्।
अज्ञात्वापि वधूवृत्तं हा सीतेति वदन्मुहुः ॥ ९४६ ॥
स दृष्ट्वा लक्ष्मणं दूरात्समायान्तमधोमुखम्।
राक्षसैर्भक्षितां सीतां निःसंशयममन्यत ॥ ९४७ ॥
कथं त्रस्तकुरङ्गाक्षीं जानकीं विजने वने।
त्यक्त्वा गतोऽसि सौमित्रे जीवितं मे हृतं त्वया ॥ ९४८ ॥
इति ब्रुवाणः सावेगः शङ्कादिष्टेन वर्त्मना।
उपसृत्य ददर्शाशु सीतारहितमाश्रमम् ॥ ९४९ ॥
ततः स पतितः श्वभ्रे घोरे वा मकराकरे।
ज्वालाकराले वह्नौ वा न किंचिद्बुबुधे क्षणात् ॥ ९५० ॥

---

१. 'न समेष्यसि वश्यताम्' ख-शा०. २ 'समादातु' क-शा०.

मनःसुब्रह्मचारिण्या सीतयैव विना कृतः ।
धृत्या सोऽभून्नवोद्भूतप्रभूतव्यसनाहतः ॥ ९५१ ॥
तस्य शोकाभिभूतस्य मोहमीलितचेतसः ।
सीतास्मृतिरपि क्षिप्रं क्वाप्यस्पन्ददृशो ययौ ॥ ९५२ ॥
संज्ञामासाद्य शनकैः सबाष्पं वीक्ष्य लक्ष्मणम् ।
ऊचे प्रिया मम त्यक्ता कथमेकाकिनी त्वया ॥ ९५३ ॥
व्यक्तं कान्तिमयं तस्या वपुः कुसुमकोमलम् ।
राक्षसैर्भक्षितं घोरैः शून्ये धिक्के प्रमादिताम् ॥ ९५४ ॥
इत्युक्तः शोकतप्तेन भ्रात्रा सौमित्रिराकुलः ।
उवाच दुःखवैलक्ष्यदैत्यानां वशमागतः ॥ ९५५ ॥
त्वत्तुल्यस्वरमाक्रन्दं श्रुत्वा मायामृगस्य सा ।
व्रजेति शङ्कितमतिर्मामूचे दैवमोहिता ॥ ९५६ ॥
आर्यस्य विक्रमज्ञेन वारितापि मयासकृत् ।
उवाच परुषं तत्त्येन मामविशत्तमः ॥ ९५७ ॥
मयि त्वत्पदवीं याते तद्वाक्यशरदारिते ।
मन्ये भवन्तमन्वेष्टुं सापि स्वयमितो गता ॥ ९५८ ॥
इति भ्रातुर्वचः श्रुत्वा रामः शोकविषाकुलः ।
चक्रारूढ इवाकाशं दिशश्च क्षणमैक्षत ॥ ९५९ ॥
तमेवाश्रममालोक्य तानेव च महीरुहान् ।
सीतामेकामपश्यन्स विललापाश्रुगद्गदः ॥ ९६० ॥
अयि प्रिये कदा नाम मन्युरेवंविधस्त्वया ।
गृहीतो मयि येनासि लताजालैस्तिरोहिता ॥ ९६१ ॥
अयं ते नर्मसचिवः शुकः किमपि मूकताम् ।
गतस्त्वद्विरहाद्विद्वानिव मूढसभां श्रितः ॥ ९६२ ॥
अयं स्तिमिततां यातः शिखी त्वत्केलिनर्तकः ।
संचयस्त्वत्कटाक्षाणां राशीभूत इवानिशम् ॥ ९६३ ॥

विलासगतिशिष्यस्ते नूपुरारावतस्करः ।
न केलिकलहंसोऽयं शशीवाह्नि विराजते ॥ ९६४ ॥
संत्यक्तशष्पकवलः शिशुर्लीलाकुरङ्गकः ।
साश्रुस्त्वामीक्षते दिक्षु ग्रीवावलनविभ्रमैः ॥ ९६५ ॥
कोऽयं कठोरः कठिने मयि मानग्रहाग्रहः ।
गम्भीरः केन निर्बन्धो येन मौनं न मुच्यते ॥ ९६६ ॥
अयि प्रसीद सरले किर कर्णसुधां गिरम् ।
मिथ्या मदकलालापमानं मुञ्चन्तु कोकिलाः ॥ ९६७ ॥
इति शोकानलाक्रान्ते रामे तारप्रलापिनि ।
प्रतिशब्दैर्गिरिगुहाश्चुक्रुशुर्गद्गदैरिव ॥ ९६८ ॥
बभूवुर्भूरिमधुपालापशिञ्जानपङ्कजाः ।
आश्रमोपान्तवाप्योऽपि प्रलापमुखरा इव ॥ ९६९ ॥
रामं शोचन्तमालोक्य रोमन्थच्छेदनिश्चलाः ।
हरिण्यो मुमुचुर्बाष्पं निःस्पन्दायतलोचनाः ॥ ९७० ॥
स विचिन्वन्प्रियां वल्लीनिकुञ्जगहने वने ।
बभ्रामोद्भ्रान्तहृदयस्खलद्गतिविशृङ्खलः ॥ ९७१ ॥
फुल्लारविन्दवृन्देषु नीलोत्पलवनेषु च ।
स शुशोच मुखं तन्व्या दृशश्च ललितायताः ॥ ९७२ ॥
स किंजल्करजःपुञ्जपिञ्जरां वीक्ष्य मञ्जरीम् ।
पीतांशुकां शशिमुखीं शङ्कमानः समाद्रवत् ॥ ९७३ ॥
क्व सीतेति स पप्रच्छ चेतनाचेतनान्वने ।
शुचः प्रियवियोगोत्था दुःसहा महतामपि ॥ ९७४ ॥
सोऽब्रवीदेष वकुलः स्फुटं जानाति मे प्रियाम् ।
व्याप्तः समस्तमधुपैर्दिग्द्वीपान्तरचारिभिः ॥ ९७५ ॥
यत्पादनलिनन्यासस्तवाभूत्कुसुमश्रिये ।
अशोक शंस तां सीतामशोकं कुरु मामपि ॥ ९७६ ॥

१. 'शोचते' ख०.

मात्सर्योपहतो नूनं ममायं गजयूथपः।
लीलागतिसपत्नीं तां कथं कथयति प्रियाम् ॥ ९७७ ॥
नैते वदन्ति दयितां निसर्गविजितास्त्वया।
चमर्यः केशपाशेन दृग्विभागैः कुरङ्गकाः ॥ ९७८ ॥
हा प्रिये कुत्र दृश्यासि क्व च[1] नः संगमस्त्वया।
यदेते तरलाः क्वापि गन्तुं प्राणा ममोद्यताः ॥ ९७९ ॥
व्यक्तं मृगानुगेनैव भक्षिता राक्षसेन सा।
निगीर्णस्तन्मुखशशी सशरीरेण राहुणा ॥ ९८० ॥
क्व सा विलासललिता दृष्टिर्लोलामृतच्छटा।
रागाब्धिफेनधवलं क्व च तद्विभ्रमस्मितम् ॥ ९८१ ॥
चित्रं नवनवोल्लेखविनोदव्यसनी विधिः।
चित्रं बल इवाकाले तदुन्मूलनलालसः ॥ ९८२ ॥
जाने निजासनाम्भोजाज्जातं जाड्यं प्रजासृजा।
पुनः कर्तुमशक्यानि स्वकृतानि निहन्ति यत् ॥ ९८३ ॥
विलासवल्ली निर्लूना हतो विभ्रमपादपः।
किं नाम न हृतं धात्रा हरता हरिणीक्षणाम् ॥ ९८४ ॥
अक्ष्णोः स्पन्दनमप्यासीद्यस्या विघ्नो विलोकने।
सा कथं सह्यते कान्ता मनोरथपथं गता ॥ ९८५ ॥
हा प्रिये क्व नु यातासि[2] दर्शय क्षणमाननम्।
पूर्णेन्दुमिव लावण्यसुधासिन्धुसमुद्गतम् ॥ ९८६ ॥
रतिर्विरहितेनेव शोकान्तेनेव धीरता।
मतिर्मोहहतेनेव हारितासि प्रिये मया ॥ ९८७ ॥
इत्युक्त्वा मोहमापेदे रामोऽपि धृतिसागरः।
वियोगसारे संसारे स्नेह एव विपाशनम् ॥ ९८८ ॥
सर्वथा गुणसंनद्धा जीवमत्स्यापहारिणी।
वियोगे वडिशाकृष्टिः स्नेहवृत्तिः शरीरिणाम् ॥ ९८९ ॥

---

१. 'पुनः' शा०. २. 'यास्यामि' शा०.

संज्ञामासाद्य शनकैरपश्यन्दयितां पुरः ।
दिवापि निखिलं लोकं निरालोकं ददर्श सः ॥ ९९० ॥
स निःस्पन्दतनुः स्थित्वा पङ्कमग्न इव द्विपः ।
पुनर्बभ्राम विपिने विषपीत इव स्खलन् ॥ ९९१ ॥
धृतिं न लेभे वल्लीपु स्थलीषु नलिनीषु च ।
कल्पवल्लीपरिभ्रष्टः स षट्पद इवाकुलः ॥ ९९२ ॥
रम्यं घोरं समं श्वभ्रं प्रियं द्वेष्यं स्थलं जलम् ।
ध्यानैकाग्रः स योगीव सर्वं तुल्यममन्यत ॥ ९९३ ॥
स शशीव निशाहीनः परिम्लानाननद्युतिः ।
विलोकयन्वनमहीं दीनः प्रोवाच लक्ष्मणम् ॥ ९९४ ॥
संचारिणी मनोवृत्तिः क्व मे लक्ष्मण सा प्रिया ।
गतदीपशिखापात्रं तया हीनमवेहि माम् ॥ ९९५ ॥
सीताविरहसंतप्तं व्यक्तमुत्क्रान्तजीवितम् ।
अरक्षितस्मरनिधिं स्वर्गे द्रक्ष्यति मां पिता ॥ ९९६ ॥
रक्षश्चूर्णीकृतं तस्याः स्रस्तमेतद्विभूषणम् ।
हेमरत्नकणैः कीर्णं पश्य पुष्पैश्च मेदिनीम् ॥ ९९७ ॥
द्रुतविद्रुमसंकाशप्रत्यग्ररुचिरश्रुतिः ।
सीताहेतोर्वदत्येषा युद्धं राक्षसयोरिव ॥ ९९८ ॥
इहैव भक्षिता नून राक्षसाभ्यां मृगेक्षणा ।
वनेऽस्मिन्निःसहायस्य धृतिर्मूर्तिमतीव मे ॥ ९९९ ॥
इतः क्रोशान्तरे पश्य तपनीयमयं महत् ।
छत्रं रत्नशलाकाढ्यं स्रस्तं सूर्यमिवाम्बरात् ॥ १००० ॥
मणिमौक्तिकहेमाङ्कं वैडूर्यगुणमायतम् ।
भग्नं धनुरिदं पश्य मेघसंघादिव च्युतम् ॥ १००१ ॥
विशीर्णं पश्य विपुलं कवचं काञ्चनाचितम् ।
संध्याभ्रमिव वातेन पातितं गिरिशेखरात् ॥ १००२ ॥

१. 'समं सम' शा०.

सरत्नहेमसंनाहाः पिशाचवदनाः खराः ।
एते क्षितौ निपतिता मेघाः सेन्द्रायुधा इव ॥ १००३ ॥
रथाक्षमात्राः कस्येमे मृत्युदण्डोपमाः शराः ।
अमानुषं महद्युद्धं भग्नाश्च कथयन्ति ये ॥ १००४ ॥
इह त्रस्तकुरङ्गाक्षी सा नूनं मम जीवितम् ।
विजित्य राक्षसं युद्धे राक्षसेनैव भक्षिता ॥ १००५ ॥
लावण्यस्य विलासस्य गुणानां मन्मथस्य च ।
ऐकत्र[1] क नु तत्तुल्यसंगमो भविता पुनः ॥ १००६ ॥
क नु सा गजगामिन्या मदलीलालसा गतिः ।
विलासे राजहंसानामुपदेशोपयोगिनी ॥ १००७ ॥
पाणिपल्लविनी तस्यास्तारुण्यतरुमञ्जरी ।
क सा विलासवसतिः स्तनस्तबकिता[2] तनुः ॥ १००८ ॥
मृणालवल्लीमसृणे क ते भुजलते तनोः ।
यत्पुरा[3] क्रियते कोऽपि कराभ्यां कमलभ्रमः ॥ १००९ ॥
क तन्मनःशिलोल्लेखलीलातिलकलाञ्छनम् ।
वदनं नवलावण्यनिधानमिव मुद्रितम् ॥ १०१० ॥
तस्याः सितच्छटाचन्द्रकलालावण्यतस्करी ।
क सा मूर्तिः[4] स्मरस्येव शृङ्गारोद्यानकौमुदी ॥ १०११ ॥
शोणाधरांशवस्तस्या बिम्बबन्धूकबन्धवः ।
रागसागरसंजाताः क ते विद्रुमपल्लवाः ॥ १०१२ ॥
मनः[5]प्रसादविषदाः क ते चारुदृशो दृशः ।
विवल्लीनरत्नाङ्काः सुधावीचिच्छटा इव ॥ १०१३ ॥
कामकार्मुकभङ्गिन्यो भ्रूविलासकलाः क ताः ।
नासावंशालिकच्छत्रे लीलाकुवलयस्रजः ॥ १०१४ ॥

---

१. 'एकता' शा०. २. 'किनी' शा०. ३. 'यत्परः' क. ४. 'कीर्तिः' शा०.
५. 'मानं' शा०.

अहो बतातिनैष्ठुर्यं गतस्य कठिनं विधेः ।
तस्यामपि क्षये यस्य प्रसह्य प्रसृता मतिः ॥ १०१५ ॥
व्रज जानीहि सौमित्रे यदि जीवति जानकी ।
जलजाहरणे व्यग्रा जाह्नवीपुलिने स्थिता ॥ १०१६ ॥
इति तारप्रलापस्य लक्ष्मणस्तस्य शासनात् ।
भ्रान्त्वा मन्दाकिनीकूले न सा दृष्टेत्युवाच तम् ॥ १०१७ ॥
रावणेन हृतामस्यै सीतां शंसेति खेचरैः ।
प्रेरितापि न पौलस्त्यभयादूचे त्रिमार्गगा ॥ १०१८ ॥
राघवोऽपि प्रियतमावियोगविषविह्वलः ।
आयासं जीवितं मेने निवृत्तनयनोत्सवम् ॥ १०१९ ॥
स लुप्तसर्वस्व इव भ्रष्टो मार्गादिवाध्वगः ।
पुण्यक्षये विमानाग्रात्पतितस्त्रिदिवादिव ॥ १०२० ॥
शोकाग्नितप्तनिःश्वासधूसराधरपल्लवः ।
उवाच हारितधृतिर्गिरिं विरहमोहितः ॥ १०२१ ॥
गुहागहनगेहेषु वैदेही यदि ते स्थिता ।
गिरे तद्ब्रूहि वज्रोऽग्रैः शरैर्मे मा गमः क्षयम् ॥ १०२२ ॥
कूलमञ्जुलकुञ्जे सा यदि कल्लोलिनि त्वया ।
धृता तदेते शोषाय सज्जास्त्वयि ममेषवः ॥ १०२३ ॥
इति ब्रुवाणो महतीं पादमुद्रां महीतले ।
स दृष्ट्वा राक्षसेन्द्रस्य क्रुद्धः प्रोवाच लक्ष्मणम् ॥ १०२४ ॥
मिथ्यैव भर्त्सितः शैलो हृतानेन न मे प्रिया ।
विपुलं पश्य विकृतं राक्षसस्य महत्पदम् ॥ १०२५ ॥
सर्वाङ्गभरनिर्भग्नपादाग्रः खमितो गतः ।
मन्ये स सीतामादाय द्वितीयं नास्ति यत्पदम् ॥ १०२६ ॥
यमश्चेत्तु हतं विद्धि का श्लाघा रक्षसां वधे ।
किं मे प्रयान्ति विशिखाः कालस्यापि न कालताम् ॥१०२७॥

१. 'यमस्य' शा०. २. 'तीरे' शा०. ३. 'भ्रष्टः सार्थो' शा०.

किं वा करोमि सौमित्रे तं न पश्यामि खेचरम्।
पृच्छामि निर्जने कं वा वद गच्छामि कां दिशम् ॥१०२८॥
इति वादिनमामन्त्र्य तं शोकमकराकरे।
अन्तःशल्याहतमना धीरः प्रोवाच लक्ष्मणः ॥ १०२९ ॥
तुल्यजन्मनि संसारे वैलक्षण्यमिदं सताम्।
दुःखेऽपि मोहतमसा यदेषां स्पृश्यते न धीः ॥ १०३० ॥
सतां कृच्छ्रेषु पाण्डित्यमद्रव्यं दुःखभेषजम्।
न तत्सुखे विहारे वा विभवे चोपयुज्यते ॥ १०३१ ॥
गुरवोऽपि निमज्जन्ति व्यसनाब्धावसाधवः।
मग्नाः परमधो यान्ति लघवोऽप्यबुधाः खलाः ॥ १०३२ ॥
धैर्यं यदि न दुःखेषु नोदये विनयो यदि।
तदयं शिक्षितो मिथ्या विवेकः क्वोपयुज्यते ॥ १०३३ ॥
यदर्थं शोचति नरस्तच्छोकाहतचेतनः।
विनश्यति तदप्राप्त्या समूलः सोऽपि नश्यति ॥ १०३४ ॥
धृतिर्दुःखे मतिर्मोहे क्षान्तिः कोपे गुणे नतिः।
मतिः प्रभावे महतां सततं सहचारिणी ॥ १०३५ ॥
निरस्य शोकवैक्लव्यमार्य धैर्यमहोदधे।
अन्विष्यतां जनकजा विधिः सिद्धिं विधास्यति ॥ १०३६ ॥
इत्युक्तोऽपि न तत्याज स सीताविरहव्यथाम्।
शाम्यति प्रौढशोकाग्निर्नोपदेशाम्बुशीकरैः ॥ १०३७ ॥
सोऽब्रवीन्न सदाचारस्थितस्य मम मैथिली।
दैवेन रक्षिता मन्ये धर्मं नापेक्षते विधिः ॥ १०३८ ॥
धर्ममार्गानुगस्येष्टं यदि नाम विपद्यते।
तेन नास्तिक्यशङ्केव विदुषामपि जायते ॥ १०३९ ॥
विधिरद्य सकामोऽस्तु मम वामः शिवोऽस्तु वः।
सीतामनुगते धैर्ये जीवितं गन्तुमुद्यतम् ॥ १०४० ॥

व्यक्तं मामवमन्यन्ते मृदुं[1] देवाः कृपास्पदम् ।
कथयन्ति न ये सीतां सर्वज्ञा लोकसाक्षिणः ॥ १०४१ ॥
एषोऽहं त्यक्तमर्यादः शनैः[2] शकलिताचलम्[3] ।
करोमि ध्वस्तविबुधं त्रैलोक्यं सचराचरम् ॥ १०४२ ॥
अकिंनरमगन्धर्वमपिशाचमराक्षसम् ।
अपन्नगमभूतं च करिष्याम्यखिलं जगत्[4] ॥ १०४३ ॥
इति ब्रुवाणः सावेगं शोकक्रोधाग्नितापितः ।
विश्वसंक्षयसज्जोऽभूद्धनुराकृष्य राघवः ॥ १०४४ ॥

इति रामप्रलापः ॥ २८ ॥

आर्य संहर कोपाग्निमिति भ्रात्रा विबोधितः ।
सोऽपश्यदग्रे रक्ताक्षं लूनपक्षं जटायुषम् ॥ १०४५ ॥
तं भूधरमिवास्फारं गृध्रमालोक्य भूधरे ।
उवाच रामः कुपितश्चापमाकृष्य लक्ष्मणम् ॥ १०४६ ॥
गृध्ररूपमिमं घोरं पश्य लक्ष्मण राक्षसम् ।
अनेन नूनं सा तन्वी भक्षिता हरिणेक्षणा ॥ १०४७ ॥
इत्युक्त्वा दुःसहक्रोधः संधाय धनुषि क्षणात् ।
क्षुरप्रं वज्रवदनं स गृध्रपतिमाद्रवत् ॥ १०४८ ॥
तमापतन्तमाकृष्टशरं दृष्ट्वा विहंगमः ।
अल्पावशेषजीवोऽपि क्षामस्वरमभाषत ॥ १०४९ ॥
राम राम न नामाहं पापकर्मा निशाचरः ।
गृध्रोऽहं ते पितुर्मित्रं जटायुर्वरुणात्मजः ॥ १०५० ॥
सा प्रिया जीवितसुधा नयनानन्दकौमुदी ।
हृता तव दशास्येन प्राणाश्च मम संगरे ॥ १०५१ ॥
त्रातुं समुद्यतं सीतां गृध्रं मां दशकंधरः ।
न्यवधीद्युधि विध्वस्तरथसारथिकार्मुकः ॥ १०५२ ॥

---

१. 'मृत्युं देवाः क्षमास्पदम्' शा०. २. 'शरैः' स्यात्. 'त्यक्तमर्यादोऽहं शरैरचलं पर्वतमपि शकलिता खण्डं कर्ता' इति व्याख्या भवेत्. ३. 'शकलितः परम्' क. ४. 'ममास्तु विशिखैर्जगत्' शा०.

मत्वङ्गुचरणोत्कृत्तं तस्यै तच्छत्रमुत्तमम्।
रणोपकरणं चान्यद्दीप्तरत्नविभूषितम्॥ १०५३॥
इति तस्याकुलां श्रुत्वा रुधिरोद्गारगद्गदाम्।
गिरं रामोऽभवत्क्षिप्रं वज्रेणेव विदारितः॥ १०५४॥
स परिष्वज्य रक्ताढ्यं सीतार्थे क्षपितायुषम्।
रुरोद सानुजः शोचन्पितुर्मित्रं जटायुषम्॥ १०५५॥
हा सीताकरुणाक्रन्दश्रुतिसंत्यक्तजीवित।
हा सत्त्वसागरोदारधैर्यमानकुलाचल॥ १०५६॥
वनवासः प्रियादुःखं तत्रापि त्वद्वधश्रुतिः।
अहो मे भाग्यहीनस्य वज्रपातपरम्परा॥ १०५७॥
इत्युक्त्वा मोहमगमत्क्षणं रामः सलक्ष्मणः।
उद्गच्छत्प्राणशेषेण वीक्ष्यमाणो जटायुषा॥ १०५८॥
स शनैर्लब्धसंज्ञेन लक्ष्मणेन विबोधितः।
सीताहरणवृत्तान्तं पप्रच्छ खगशेखरम्॥ १०५९॥
पृष्टो गृध्रपतिस्तेन संस्तभ्य विषमव्यथाम्।
उवाच सा हृता राम रावणेन विहायसा॥ १०६०॥
वृन्दो नाम मुहूर्तोऽसौ यस्मिन्सीतां जहार सः।
हर्ता विपद्यते तस्मिन्हृतमासाद्यते पुनः॥ १०६१॥
अवश्यं लप्स्यसे सीतां निहत्य युधि राक्षसम्।
अतः परं न शक्नोमि वक्तुमुद्गतजीवितः।
हेमाभान्रश्मिमालाङ्कान्भ्रान्तान्पश्यामि पादपान्॥ १०६२॥
इत्युक्त्वा क्षितिसंलीनग्रीवो विक्षिप्तविग्रहः।
प्रसार्य चरणौ प्राणानुत्ससर्ज तपोनिधिः॥ १०६३॥
तस्मिन्वीरे दिवं याते सिद्धविद्याधरामराः।
पुण्यपुण्यार्जितां तस्य प्रशशंसुः शरण्यताम्॥ १०६४॥
अस्मिन्नसारे संसारे विनाशेऽवश्यभाविनि।

---

१. 'सामर्थ्यं' शा०

पुण्यभाजां भवत्येव परार्थे जीवितव्यथा ॥ १०६५ ॥
रामोऽपि तस्य संस्कृत्य शरीरं शोकविह्वलः[1] ।
धन्याय प्रददौ तस्मै जह्नुकन्याजलाञ्जलिम् ॥ १०६६ ॥

इति जटायुसत्क्रिया ॥ २९ ॥

गाहमानो वनं रामः सीताविरहमोहितः ।
करिणीविरहक्षामः करीव प्रययौ शनैः ॥ १०६७ ॥
सोऽपश्यन्मार्गमावृत्य भूधराकारमुत्थितम् ।
विवृतास्यभुजस्तम्भनिजप्राज्यभुजद्वयम्[2] ॥ १०६८ ॥
कबन्धमन्धतमसां वासबन्धुमकन्धरम् ।
कण्ठकोत्कटरोमाग्रसूचिव्यासोग्रविग्रहम् ॥ १०६९ ॥
तं दृष्ट्वा दानवं घोरं मूर्तं दुःखमिवात्मनः ।
बभूव सानुजः क्षिप्रं रामो विसमयनिश्चलः ॥ १०७० ॥
घोराजगरदीर्घाभ्यां भुजाभ्यां रामलक्ष्मणौ ।
आचकर्ष स पातालगुहाकारोदराननः ॥ १०७१ ॥
वक्त्रे क्षिप्रं समाकृष्टौ तौ तेन बलिनौ बलात् ।
अचलाविव निष्कम्पौ जग्मतुस्तस्य नान्तिकम् ॥ १०७२ ॥
कौ युवामिति तौ तेन पृष्टौ विस्मय[3]चेतसा ।
नामजातिकुलोपेतं निजवृत्तान्तमूचतुः ॥ १०७३ ॥
स तच्छ्रुत्वाब्रवीच्चित्रं पापानां निर्विवेकता ।
स्त्रीसखस्य वने वासो लोके लज्जाकरः परम् ॥ १०७४ ॥
पशुतुल्यौ मया मूर्खौ दिष्ट्या प्राप्तौ वने युवाम् ।
अन्यत्र भोजनात्सत्यं नोपयुक्तौ भवद्विधौ ॥ १०७५ ॥
जलार्द्रदुन्दुभिध्वानं श्रुत्वैव[4] तस्य तौ वचः ।
तदुत्तरार्हयोर्दृष्टिं[5] चक्रतुः करवालयोः ॥ १०७६ ॥
तस्याकर्षणसज्जस्य स्कन्दमूलोपहासिना ।
चिच्छेद दक्षिणं रामो भुजं सव्यं च लक्ष्मणः ॥ १०७७ ॥

---

१. 'विप्लवः' शा०. २. 'उदरास्यं शिलास्तम्भनिभ' शा०. ३. 'विस्मित' ख. ४. 'श्रुत्वैतत्तस्य तौ वचः' शा०. ५. 'त्तरं तयोः' क.

स कृत्तबाहुः कुलिशच्छिन्नपक्ष इवाचलः।
पपात रुधिरोद्गारैर्धातुनिर्झरवानिव ॥ १०७८ ॥
स हृष्टो राममवदत्त्वत्प्रसादादहं विभो।
विमुक्तः शापजनिताद्वैरूप्यादतिदुःसहात् ॥ १०७९ ॥
दनुर्नाम श्रियः पुत्रः पूर्वजो रूपवानहम्।
दिवाकरेन्दुवह्नीनामभवत्तुल्यदीधितिः ॥ १०८० ॥
लब्धप्रभावस्तपसा युधि निर्जितवासवः।
त्रासं दर्पादकरवं मुनीनां घोररूपकृत् ॥ १०८१ ॥
ततः स्थूलशिरा नाम कोपान्मामशपन्मुनिः।
कबन्धविकृतः पाप घोर एव भविष्यति ॥ १०८२ ॥
रामेण निकृत्तभुजः स्वं रूपं प्रतिपत्स्यसे।
इत्यहं तेन मुनिना शप्तः कोपाकुलोऽभवम् ॥ १०८३ ॥
शक्रोऽपि लब्धावसरः कुलिशेन जघान माम्।
येनाहं विशिराः क्षिप्रमिमां यातः कवन्धताम् ॥ १०८४ ॥
आहारार्थमिमौ बाहू वक्त्रं चेदं ममोदरे।
निर्मितं सुरराजेन मांसपिण्डोपमाकृते ॥ १०८५ ॥
सोऽहं त्वया कृत्तभुजः शापान्मुक्तोऽद्य राघव।
वृत्ते शरीरसंस्कारे निजं प्राप्स्यामि तद्वपुः ॥ १०८६ ॥
लब्धज्ञानः प्रियालाभोपायं वक्ष्यामि ते ततः।
श्रुत्वैतद्वह्निमादाय रामस्तमदहत्क्षणात् ॥ १०८७ ॥
अथोदतिष्ठत्स चितामध्यात्कमललोचनः।
दिव्याम्बरधरः स्रग्वी रत्नकेयूरशोभनः[1] ॥ १०८८ ॥
निर्मितश्चन्द्रचूडेन पूर्णचन्द्रनिभाननः।
रतिप्रलापकारुण्यात्पुष्पचाप इवापरः ॥ १०८९ ॥
विमानेनार्कवर्णेन गगनं वेगशालिना।
गाहमानः स सहसा जगाद रघुनन्दनम् ॥ १०९० ॥

---

१. 'शेखरः' क.

ऋष्यमूकगिरेः शृङ्गे सुग्रीवो वानरेश्वरः।
निरस्तो वालिना भ्रात्रा मतङ्गस्याश्रमे स्थितः॥ १०९१॥
तेन सख्यं विधाय त्वं सीतामधिगमिष्यसि।
एष ते दक्षिणः पन्था यत्र पम्पासरो महान्॥ १०९२॥
अनावृष्टिहते काले गुर्वर्थे फलहारिणाम्।
पुरा मतङ्गशिष्याणां पतिताः स्वेदबिन्दवः॥ १०९३॥
यत्र याता लताजालेष्वपरिम्लानपुष्पताम्।
यत्र सा सिद्धवसतिर्दृश्यते भास्वरप्रभा॥ १०९४॥
शुद्धमांसफलाहारा शीतवारिगतक्लमा।
तत्र दिव्यजनाकीर्णे देशे निर्वृत्तिमाप्स्यति॥ १०९५॥
तं गिरिं बदराहारो मतङ्गस्याज्ञया मुनेः।
शिशुमाराभिधो दैत्यः सततं परिरक्षति॥ १०९६॥
नात्र प्रवेशं लभते पापकर्मा न नास्तिकः।
स्वप्नदृष्टं शुभं तत्र प्रातः प्रत्यक्षमाप्स्यसि॥ १०९७॥
यस्याभिषेकरुचिरा गिरयो जङ्गमा इव।
मतङ्गशासनादत्र कुञ्जराननुकुर्वते॥ १०९८॥
स्वस्ति तेऽस्तु व्रज क्षिप्रं चेत्युक्त्वा कमलासुतः।
खं विवेशांशुभिः कुर्वन्कौमुदीविषदा दिशः॥ १०९९॥

इति कबन्धवधः॥ ३०॥

रमणीविरहध्यानविधुरः पाण्डुरद्युतिः।
रामः पूर्णनिशाहीनः शशीव तनुतां ययौ॥ ११००॥
दिनमुत्फुल्लनयनं निशां वा सनिशाकराम्।
न स सेहे सुवदनावदनध्याननिश्चलः॥ ११०१॥
स श्रीसुतोपदिष्टेन वर्त्मना शनकैर्व्रजन्।
ददर्श सिद्धशबरीं मूर्तामिव तपःश्रियम्॥ ११०२॥

१. 'पीत' शा०. २. 'भवांस्तत्र' ख-शा०. ३. 'प्स्यसे' ख; 'प्स्यते' शा०.

स्फाटिकेनाक्षसूत्रेण विभूषितकुचस्थलाम् ।
मुखेन्दुस्रुतलावण्यबिन्दुमालाङ्कितामिव ॥ ११०३ ॥
ललाटफलकालीनपुण्यभस्मत्रिपुण्ड्रकाम् ।
शुभ्रां धवलसंपृक्तचन्द्रामिव विभावरीम् ॥ ११०४ ॥
तां वल्कलवतीं दिव्यप्रभापटलपल्लवाम् ।
कल्पवल्लीमिवालोक्य क्लमं तत्याज राघवः ॥ ११०५ ॥
विलोक्य सानुजं रामं पूज्यापि प्रणनाम सा ।
वैराग्यधूतमनसामभिमानरजः कुतः ॥ ११०६ ॥
तामूचे राघवः प्रह्वामिदं ते विमलं तपः ।
करोत्यरागसंतोषहर्षस्तबकितं मनः ॥ ११०७ ॥
मोहहीनां मनोवृत्तिं रागद्वेषविषोज्झिताम् ।
कथयत्येव निर्विघ्नप्रसन्नमधुरं वपुः ॥ ११०८ ॥
विधत्ते हृदि वैषद्यं वैमल्यं च सुलोचने ।
पुण्यप्ररोहं च [1]तनौ दर्शनं पुण्यचेतसाम् ॥ ११०९ ॥
परिपूर्णतपःसिद्धिर्मनुना कथितास्ति मे ।
यस्यास्ते गुरवः सिद्धा मुनयो मोक्षगामिनः ॥ १११० ॥
इति रामवचः श्रुत्वा शबरी प्रत्यभाषत ।
साधो त्वद्दर्शनफला तपःसिद्धिरियं मम ॥ ११११ ॥
अजलं तीर्थममलमकायक्लेशदं तपः ।
अजीवितान्ता स्वगतिः सत्यं साधुसमागमः ॥ १११२ ॥
आश्रमोऽसौ मतङ्गस्य यत्र ते गुरवो मम ।
प्रयाताः परमां सिद्धिं ज्ञानपूता हुतानलाः ॥ १११३ ॥
अपरिम्लानकुसुमः प्रत्यग्रकुशपादपः ।
देशोऽयं तत्प्रसादेन सततं परिदृश्यते ॥ १११४ ॥
चिन्तयैव च कुर्वन्ति संनिधिं सप्तसागराः ।
निखिलान्यपि तीर्थानि निवसन्ति तदाज्ञया ॥ १११५ ॥

---

१. 'विसमालाशया' शा०.

वल्कलानि धृतान्यत्र स्नानधौतानि तैः पुरा ।
पश्य नाद्यापि शुष्कानि यातैर्वर्षशतैरपि ॥ १११६ ॥
स्वस्ति तेऽस्तु नमस्तुभ्यमेषाहं त्वदनुज्ञया ।
व्रजामि स्वोचितं धाम हुत्वा ज्ञानानिले तनुम् ॥ १११७ ॥
इत्युक्त्वा सिद्धशबरी शिरसा रामशासनम् ।
आदायाग्नौ तनुं हुत्वा पदं तेजोमयं ययौ ॥ १११८ ॥

इति शबरीदर्शनम् ॥ ३१ ॥

दिव्येन वपुषा तस्यां यातायां गतिमुत्तमाम् ।
स पम्पाभिमुखं गच्छन्रामः सौमित्रिमब्रवीत् ॥ १११९ ॥
मन्ये लक्ष्मण पुण्येऽस्मिन्देशे सा मम दुर्दशा ।
परिक्षीणा मनश्चेदं वक्ति सीतासमागमम् ॥ ११२० ॥
कदा नु पूर्णलावण्यसुधानिःस्यन्दसुन्दरम् ।
वदनेन्दुं मृगदृशो द्रक्ष्याम्यानन्दबान्धवम् ॥ ११२१ ॥
इति ब्रुवाणः संतप्तः प्रौढेन विरहाग्निना ।
उत्फुल्लकमलं रामः प्राप पम्पाभिधं सरः ॥ ११२२ ॥
विलासवलनालोलललनालोचनानुगैः ।
लीलालिवलयैर्व्याप्तं वालानिलचलोत्पलैः ॥ ११२३ ॥
सुरसिद्धाङ्गनास्नानलीनकालागुरुद्रवैः ।
दग्धमग्नस्मराङ्गारैरिव श्यामीकृतोदकम् ॥ ११२४ ॥
भ्रमद्भिर्भ्रमरैर्जुष्टं रजन्या प्रेरितैरिव ।
कुसुमानां प्रबोधाय प्रीतिदूतैस्तमःकणैः ॥ ११२५ ॥
मज्जद्भिः कुञ्जरकुलैः श्रितं जलधिशङ्कया ।
जलार्थिभिरिवाम्भोधैर्वज्रिभीतैरिवाचलैः ॥ ११२६ ॥
जलकेलिकलालोलविद्याधरमृगीदृशाम् ।
कुचकुङ्कुमकर्पूरपिशङ्गपरिपाण्डुरम् ॥ ११२७ ॥

---

१. 'बान्धवम्' शा०. २. 'शतैः' शा०.

अपि नन्दनभृङ्गानामुद्धूतैः कमलानिलैः ।
विदधानमिवामोदमहोत्सवनिमन्त्रणम् ॥ ११२८ ॥
लक्ष्मीविलाससंचारनूपुरारावविभ्रमैः ।
नादितं नलिनास्वादकषायैः कलहंसकैः ॥ ११२९ ॥
तीरोपान्तलतालास्यगुरुभिः शीकरानिलैः ।
आबद्धताण्डवाभोगं मुहुर्मुग्धशिखण्डिभिः ॥ ११३० ॥
अभिजातमिवासन्नजनतापक्लमापहम् ।
सदाचारमिवावासं श्रियो गुणगणाश्रयम् ॥ ११३१ ॥
सतां चित्तमिव स्वच्छं साधुसङ्गमिव स्थिरम् ।
धर्ममार्गमिवानन्तं मनोरथमिवायतम् ॥ ११३२ ॥
सद्विवेकमिव श्लाघ्यं संभोगमिव वल्लभम् ।
संसारमिव साश्चर्यं स्त्रीवृत्तमिव[1] दुस्तरम् ॥ ११३३ ॥
दर्पणं गगनस्येव सागरस्येव सोदरम् ।
कैलासस्येव हृदयं पूर्णेन्दोरिव मन्दिरम् ॥ ११३४ ॥
तद्विलोक्य सरो रामः प्रचलत्कमलोत्पलम् ।
सुगन्धिवक्त्रं लोलाक्ष्याः ससार स्मितकेसरम् ॥ ११३५ ॥
न तत्र लेभे काकुत्स्थः सीताविरहितो रतिम् ।
यत्सत्यं रमणीयानां स्वस्थे मनसि रम्यता ॥ ११३६ ॥
अचारु चारु सुखिनां चारु दुःखाय दुःखिनाम् ।
भव्यः स्वभावो भावानां न तत्त्वेनोपलभ्यते ॥ ११३७ ॥
प्रियाविरहसंतप्तं तं सिषेवे सशीकरैः ।
सरःकमलकिञ्जल्कपिञ्जरैस्तीरमारुतैः ॥ ११३८ ॥

इति पम्पासरोदर्शनम् ॥ २२ ॥

अथादृश्यत पञ्चेषुर्मङ्गलो[2] मधुपोत्सवः ।
वियुक्तरमणीकालः कालः कुसुमलाञ्छनः ॥ ११३९ ॥

---

१. 'स्त्रीचित्तमिव चञ्चलम्' क. २. 'मङ्गलं' क-ख.

कान्ताकटाक्षतरला मत्ताः कुसुमरेणुभिः ।
चेरुः शिलीमुखास्तुल्यं वसन्तस्य स्मरस्य च ॥ ११४० ॥
मानिनीमानमातङ्गमशोककलिकारजः ।
न सेहे नागगन्धोग्रः केसरी कुसुमाकरः ॥ ११४१ ॥
विबभौ स्तोकसंजातस्तवकस्तनबन्धुरः ।
भृङ्गालकाविलासिन्यो लताः किसलयाधरः ॥ ११४२ ॥
पुष्पप्रहासिनि वने तरूणां नवयौवने ।
निःश्वस्योवाच सौमित्रिं रामो रामाहृताशयः ॥ ११४३ ॥
पश्य लक्ष्मण कालोऽयं दुःसहः समुपस्थितः ।
सीतेव तनुतां याता जीविताशापि येन मे ॥ ११४४ ॥
प्रियाप्रणयसानन्दः कालकूजितकोकिलः ।
विडम्बयति मामेष मन्ये विरहमोहितम् ॥ ११४५ ॥
दयितां मदमत्तोऽयं दात्यूहः परिचुम्बति ।
ममैव मन्दभाग्यस्य दूरीभूतास्य न प्रिया ॥ ११४६ ॥
जगर्ज मञ्जरीकुञ्जे कलं भृङ्गस्तथा तथा ।
विलासहासिनीभोगं यातास्य कलिका यथा ॥ ११४७ ॥
चूतवल्लीमधुकरं मालिनीधूमधूसरम् ।
निवारयति लोलेन पश्य पल्लवपाणिना ॥ ११४८ ॥
एक एव प्रियाहीनो रामोऽस्मिं कुसुमागमे ।
इतीव जीवञ्जीवोऽयं विरौति दयितासखः ॥ ११४९ ॥
परागपीतकुसुमाः कुसुमापीतशेखराः ।
शृङ्गारभरणा भान्ति किंशुकाशोकचम्पकाः ॥ ११५० ॥
अदृश्यः पर्णकुसुमैः कर्णिकारोऽयमुन्नतः ।
कामी च भाति दयिताकुचकुङ्कुमपिञ्जरः ॥ ११५१ ॥
पुष्पितः सिन्धुवारोऽयं स्वैरं श्यामागमोत्सुकः ।
ज्योत्स्नापुञ्जपुटैरेव स्थितश्चन्द्रोऽवगुण्ठितः ॥ ११५२ ॥

---

१. 'राग' क-ख. २. 'सि कुसुमाकरे' शा०; 'रामोऽस्ति' स्यात्.

आलिङ्गति लतासालं नदी श्लिष्यति भूधरम्।
अप्यादत्ते नवौत्सुक्यं चैत्रश्चित्रमचेतसाम् ॥ ११९३ ॥
वसन्ते पुष्पसंतानसुभगामोदमन्दिराः।
हा प्रिये तरवो रम्या ममैते विषपादपाः ॥ ११९४ ॥
इति पुष्पानिलामोदमूर्छितो विरहातुरः।
रामः शोचन्प्रियतमां बभ्राम गिरिसानुषु ॥ ११९५ ॥
तं सानुजं धनुष्पाणिमृष्यमूकतटे स्थितः।
दूरादालोक्य सुग्रीवः किमप्याशङ्कितोऽभवत् ॥ ११९६ ॥
ततस्तदनुगाः सर्वे वानराः कम्पिताङ्गकाः।
उत्प्लुत्योत्प्लुत्य सहसा शिखराच्छिखरं ययुः ॥ ११९७ ॥
जवेन व्रजतां तेषां मलयं निलयं श्रियः।
उरुवाताहताः पेतुर्वृक्षाः कुसुमवर्षिणः ॥ ११९८ ॥
इति वसन्तवर्णनम् ॥ ३३ ॥

इति श्रीक्षेमेन्द्रविरचिते रामायणकथासारे समाप्तमारण्यपर्व।

---

ततः शिखरिशृङ्गस्थः सुग्रीवः प्रणतान्पुरः।
उवाच हनुमन्मुख्यान्सचिवान्वालिशङ्कितः ॥ १ ॥
शौर्याभिमानाभरणौ नवौ कमललोचनौ।
विजयव्यञ्जनभुजावेतौ शङ्कास्पदं मम ॥ २ ॥
प्रयुक्तौ वालिना नूनं वीरावस्मद्वधोद्यतौ।
तपोवने सायुधयोः संचारः कथमन्यथा ॥ ३ ॥
वाली नास्मासु निश्चिन्तश्छिद्रान्वेषी च सर्वथा।
वक्रः श्रीरक्षणे राज्ञां कर्कशो हि नयक्रमः ॥ ४ ॥
एतौ तस्मादितो गत्वा त्वं ज्ञात्वेङ्गितचेष्टितम्।
पृष्ट्वा वृत्तान्तमखिलं कृत्यं जानीहि यत्क्षमम् ॥ ५ ॥
सुग्रीवेणेत्यभिहिते हनुमान्पवनात्मजः।
प्रययौ ब्राह्मणवपुर्योगेन रघुनन्दनौ ॥ ६ ॥

---

१. 'कुलः' ख.

स तावुवाच कान्तेन गम्भीरेण महौजसा ।
कथितोदग्रवृत्तान्तरूपेणानेन कौ युवाम् ॥ ७ ॥
विक्रमस्य गुणानां च यशसामथ तेजसाम् ।
नयनग्राहिणी सत्यमियमात्मदशाकृतिः ॥ ८ ॥
सूर्याचन्द्रमसौ व्योम्नि शक्रोपेन्द्रौ त्रिविष्टपे ।
युवां परं यदि वने नरनारायणावृषी ॥ ९ ॥
दूतोऽहं वानरपतेः सुग्रीवस्य महौजसः ।
सचिवो हनुमान्नाम प्रीत्यर्थं समुपागतः ॥ १० ॥
श्रुत्वैतदमृतास्वादमधुरं राघवो वचः ।
तथ्यं सरन्दनोर्वाक्यं लब्धां सीताममन्यत ॥ ११ ॥
ततो न्यवेदयत्सर्वं लक्ष्मणो रामशासनात् ।
कुलं नाम च वैदेहीहरणं च हनूमते ॥ १२ ॥
हनुना कथितो ह्यस्य सुग्रीवः कार्यसिद्धये ।
सोऽयं शरण्यो लोकानां सुग्रीवं नाथमिच्छति ॥ १३ ॥
सुखं शेते भुजबलं यस्याश्रित्य शचीपतिः ।
सीताविरहितः सोऽयं रामः संश्रयमिच्छति ॥ १४ ॥
लक्ष्मणेनेति कथितं निशम्य पवनात्मजः ।
ताभ्यामेव सह प्रायात्स्वालयं हर्षनिर्भरः ॥ १५ ॥
ततो रामं स्थितः सालस्याविदूरे कपीश्वरः ।
सुपुष्पितवनैकान्ते भ्रमरैरुपकूजिते ॥ १६ ॥
तस्यैकां पर्णबहुलां शाखां छित्त्वा सुपुष्पिताम् ।
सालस्यास्तीर्य सुग्रीवो निपसाद सराघवः ॥ १७ ॥
तावासीनौ तथा दृष्ट्वा हनूमानपि लक्ष्मणम् ।
सालशाखां समानीय विनीतं स न्यवेशयत् ॥ १८ ॥
ततो विदितवृत्तान्तस्तद्गिरा प्लवगाधिपः ।
फणीव वल्कलं जीर्णं भयं तत्याज वालिजम् ॥ १९ ॥

उपसृत्य स संप्राप्तो रामं प्रीतिपुरःसरः ।
दंष्ट्रांशुपुष्पितमुखं प्रोवाच रचिताञ्जलिः ॥ २० ॥
हनूमता मे कथिता गुणाभरणता तव ।
आत्मानं बहु मन्येऽहं सफलं त्वत्समागमात् ॥ २१ ॥
अहो नु जीवितं श्लाघ्यं ममेदं यद्भवान्मया ।
अभिगम्याधिगम्योऽपि स्वयं सख्यं समीहते ॥ २२ ॥
अयं मे प्रसृतः पाणिः पाणिमालम्बते तव ।
दृशोः परिणतं पूर्वं सौगन्धं संप्रवर्तताम् ॥ २३ ॥
सुग्रीवस्येति वचसा रामेण प्रीतिशालिना ।
पीडिते पाणिना पाणौ हनुमान्वह्निमादधे ॥ २४ ॥
सख्यं राघवसुग्रीवौ कृत्वा पावकसाक्षिकम् ।
प्रहृष्टौ मित्रलाभेन तस्थतुर्हृष्टमानसौ ॥ २५ ॥
इति सुग्रीवसख्यम् ॥ १ ॥
ततः प्रोवाच काकुत्स्थं प्रह्वः प्लवगपुंगवः ।
दंष्ट्रांशुभिर्गुणाबद्धां प्रीतिमामन्त्रयन्निव ॥ २६ ॥
प्रियावियोगतप्तस्य तव राघव दुःसहम् ।
दुःखं ममापि संचारि करोति हृदये पदम् ॥ २७ ॥
अधुना त्यज्यतां शोकः प्रत्ययो यदि मद्गिराम् ।
विपुले स्कन्धपीठेऽस्मिन्भारोऽयं मे निधीयताम् ॥ २८ ॥
सत्यं सीतां तव गिरा रसातलगतामपि ।
उद्धरामि हताराति र्वराह इव मेदिनीम् ॥ २९ ॥
सीता दृष्टा हृतास्माभिर्दशास्येन विहायसा ।
क्रोशन्ती राम रामेति करुणं लक्ष्मणेति च ॥ ३० ॥
चतुर्भिः सचिवैः सार्धं स्थितं मां वीक्ष्य सा गिरौ
मुमोच रुचिरं वासो माल्यमाभरणानि च ॥ ३१ ॥
रुचिरा रावणस्याङ्कात्स्रस्तेयं भूषणावलिः ।
चक्रे नीलाभ्रसंदर्भभ्रष्टचक्रायुधभ्रमम् ॥ ३२ ॥

इत्युक्त्वा वानरपतिश्चारु वस्त्रं सभूषणम्।
अदर्शयद्गुहान्यस्तं रामाय मणिभास्वरम्॥ ३३॥
राघवोऽपि तदादाय विन्यस्य निबिडं हृदि।
क्व प्रियेति विलप्योच्चैर्निपपात महीतले॥ ३४॥
चिरेण संज्ञामासाद्य बाष्पसंरुद्धलोचनः।
सोऽभवद्घननीहारपटच्छन्न इवांशुमान्॥ ३५॥
स शोकामर्षसंतापपिशुनं निःश्वसन्मुहुः।
सुग्रीवमूचे सुगतः कां दिशं दशकंधरः॥ ३६॥
सोऽब्रवीन्न दिशं तस्य स्थानं वा पापकर्मणः।
जाने किंतु तमन्वेष्टुमश्रान्तोऽयं ममोद्यमः॥ ३७॥
गगने भुवि पाताले स्थलेऽथ सलिलेऽपि च।
स्थितस्यापि दशास्यस्य मत्सेना पृष्ठपातिनी॥ ३८॥
विक्रमस्यैव कालोऽयं शोकस्यावसरोऽत्र कः।
त्वद्विधा यदि शोचन्ति तत्का मम धृतेर्गतिः॥ ३९॥
क्व विपन्निम्नगावेगनिष्कम्पाः साधुभूधराः।
क्व वैक्लव्यकुटुम्बिन्यो मोहध्वान्तनिशाः शुचः॥ ४०॥
विवेकविपदालोकमतयः शास्त्रलोचनाः।
न मूढसुलभस्यास्य शोकस्यायतनं बुधाः॥ ४१॥
स्वाधीने पौरुषोत्साहे त्वदधीने रिपुक्षये।
आज्ञाधीनेषु चास्मासु कोऽयं चित्तविपर्ययः॥ ४२॥
इति सुग्रीववचनं निशम्य रघुनन्दनः।
मुखमुन्मृज्य वस्त्रेण धैर्येण च मनोमणिम्॥ ४३॥
उवाच तथ्यमुक्तोऽहं बन्धुना सुहृदा त्वया।
कृतं नाम सुहृत्कार्यं कुर्वते यद्भवद्विधाः॥ ४४॥
दुःखे विवेकवक्तारः सुखे विनयवादिनः।
पुण्यभाजां भवन्त्येव सुहृदो हृदयप्रियाः॥ ४५॥

अधुना त्वदधीनं मे कृतं प्रणयवत्सल ।
अन्वेषणे सुररिपोर्यत्नस्तूर्णं विधीयताम् ॥ ४६ ॥
जाने तव हृतं राज्यं भ्रात्रा निकृतिचेतसा ।
तत्कृत्यसंविभागेन धन्योऽयं क्रियतां जनः ॥ ४७ ॥
एते ममाप्रतिहता निहताऽरातिमण्डलाः ।
कार्तिकेयवने जाताः शराः शिखरिभेदनाः ॥ ४८ ॥
इति रामवचः श्रुत्वा सुग्रीवो हर्षनिर्भरः ।
अभिनन्द्यास्य सौहार्दमुवाच प्रणयानतः ॥ ४९ ॥
तदैव संपदां सत्यं यातो भाजनतामहम् ।
यदैव मे गुणोदारः प्रसादाभिमुखो भवान् ॥ ५० ॥
आर्या तव स्थिरा मैत्री गुणैकग्राहिणी सताम् ।
खलानां दोषसाराणां प्रीतिः श्रीरिव चञ्चला ॥ ५१ ॥
धनं परिच्छदं भोगाञ्जीवितं सर्वमेव वा ।
प्रतिपन्नास्त्यजन्त्येव परार्थे विमलाशयाः ॥ ५२ ॥
कान्तिः सुधाकरस्येव दिनभर्तुरिव प्रभा ।
तवेयं सहजा सत्यं प्रणयिप्रतिपन्नता ॥ ५३ ॥
अभग्नविक्रमो वाली विश्रुतो भुवनत्रये ।
विकलाः किल संकल्पा यज्जये जयिनामपि ॥ ५४ ॥
स भिनत्ति महाशैलान्बलजिज्ञासया बली ।
अवमत्य मुहूर्तेन संध्यायां सप्त सागरान् ॥ ५५ ॥
दुःसहो महिषाकारः पुरा दुन्दुभिदानवः ।
जगच्चचार युद्धार्थी बलिनं नाससाद च ॥ ५६ ॥
स महोदधिमभ्येत्य ययाचे युद्धमुद्धतम् ।
तमूचे जलधिर्भीतो युद्धार्हस्ते हिमाचलः ॥ ५७ ॥
स तुषाराचलं गत्वा शृङ्गपातैः खुराञ्चनैः ।
विषमैः कायकाशैश्च चकाराकुलशेखरम् ॥ ५८ ॥

१. 'वत' ख. २. 'मन्ये' क-ख.

ततोऽभिविग्नः शैलेन्द्रः क्षणं ध्यात्वा तमब्रवीत् ।
दुन्दुभे न क्षमस्तेऽहं नियुद्धे बलशालिनः ॥ ५९ ॥
किष्किन्धायां कपिपतिर्वाली नामास्ति दुर्मदः ।
युद्धश्रद्धां स ते वीर क्षणेन क्षपयिष्यति ॥ ६० ॥
इत्युक्तः शैलराजेन किष्किन्धामेत्य दुन्दुभिः ।
तदादिष्टमुपवनं व्यधाद्भग्नद्रुमं हरेः ॥ ६१ ॥
तत्कोपादथ तं वाली समाकृष्याचलोपमम् ।
व्यसुं चकार यस्यैतत्कङ्कालमिह दृश्यते ॥ ६२ ॥
कस्यचित्त्वथ कालस्य दुन्दुभेः पूर्वजः सुतः ।
स्त्रीहेतोर्वैरमापेदे मायावी नाम वालिना ॥ ६३ ॥
स रजन्यां समभ्येत्य किष्किन्धां युद्धलालसः ।
विदधे प्रलयाम्भोदघोषैर्भुवनसंभ्रमम् ॥ ६४ ॥
ततस्तूर्णं स निष्पत्य कोपाविष्टे ममाग्रजः ।
तं कालरूपिणं दैत्यं मया सह समाद्रवत् ॥ ६५ ॥
प्लवगेन्द्रं समालोक्य संरम्भावेगदुःसहम् ।
त्रस्तो दुद्राव मायावी चन्द्रालोकविलोकितः ॥ ६६ ॥
वालिनाभिसृतो वेगान्मया सह मनोजवः ।
तृणजालवृतं घोरं विवेश विपुलं वनम् ॥ ६७ ॥
मां निधाय बिलद्वारे पश्चाद्वाली विवेश च ।
तस्मिन्प्रविष्टे विवरं साग्रः संवत्सरो ययौ ॥ ६८ ॥
ततोऽहं शङ्कितो भ्रातृवियोगव्याकुलाशयः ।
अपश्यं रुधिरावेगं सफेनं निर्गतं बिलात् ॥ ६९ ॥
भ्रातरं निहतं मत्वा पतितः शोकसागरे ।
निष्प्रतीकारवैलक्ष्यप्राणत्यागोत्सुकोऽभवम् ॥ ७० ॥
ततोऽहं सचिवैरेत्य स्थितिविप्लवशङ्कितैः ।
राज्येऽभिषिक्तोऽस्मि ततो मुक्तभ्रातृवधव्यथः ॥ ७१ ॥

कालेन हत्वा पाताले वाली मायाविनं रणे ।
ददर्शाभ्येत्य मां राज्ये स्थितं कोपानलाकुलः ॥ ७२ ॥
स मया पूर्ववत्प्रीत्या विनयेनाभिपूजितः ।
प्रणयं मे न जग्राह किल्बिषात्कलुषाशयः ॥ ७३ ॥
राजा त्वमेव दासोऽहं न राज्ये मे स्पृहाभवत् ।
इत्युक्तोऽपि मया प्रीत्या प्रसादं मयि नाययौ ॥ ७४ ॥
मिथ्या[1]कलङ्ककलिला लीला[2] स्निग्धजनाशये ।
सर्वथा दैवविहिता वि[3]दशा केन वार्यते ॥ ७५ ॥
सोऽब्रवीत्सचिवान्सर्वान्भ्रात्रानेन दुरात्मना ।
सक्तस्य मे रिपुवधे शिलया पिहितं बिलम् ॥ ७६ ॥
अविज्ञाताशयेनेति साधुमध्ये विगर्हितः ।
वि[4]क्रीत इव मूकोऽहमभवं व्यथितः परम् ॥ ७७ ॥
कर्मणा सदृशे दोषे निर्दोषस्यापि लक्ष्यते ।
अदृश्यैव पुनः शुद्धिः केन प्रत्युत्तरक्रिया ॥ ७८ ॥
ततोऽहमेकवसनो हृतदारधनः पुरात् ।
निर्वासितः परिचितैश्चतुर्भिः सचिवैः सह ॥ ७९ ॥
सोऽहं मिथ्यानिकारेण निरस्तः शौर्यशालिना ।
वालिना निवसाम्यस्मिन्मतङ्गाश्रमकानने ॥ ८० ॥
पुरा स दुन्दुभिं हत्वा रक्तार्द्रं तत्कलेवरम् ।
चिक्षेप पादाङ्गुष्ठेन योजनं विजयोर्जितः ॥ ८१ ॥
तावता वक्त्रनिसृताः स्फारा रुधिरबिन्दवः ।
मतङ्गस्याश्रमे पेतुः पवनावर्तनर्तिताः ॥ ८२ ॥
तच्छापाद्वानरपतेरगम्योऽयं महाचलः ।
येनास्मिन्विगताशङ्कास्तस्मिन्नपि रिपौ वयम् ॥ ८३ ॥

---

१. 'पवाद' ख. २. 'लीला स्निग्धजनस्य च' क-ख. ३. 'वद कानेन' ख.
४. 'विक्रीड' ख.

शुष्कास्थिनिचयः कायः सोऽयमास्तेऽत्र दुन्दुभेः।
विभ्रष्टः शैलशिखरादिव प्रालेयसंचयः॥ ८४॥
एते सप्त महातालाः शरेणैकेन वालिना।
विद्धाः प्रवृद्धवयसा निःसाराश्च कृताः पुरा॥ ८५॥
माला हेममयी दत्ता पित्रा शक्रेण तस्य सा।
यस्याः प्रभावात्सततं युद्धेषु स गतक्लमः॥ ८६॥
सौहार्दे प्रणयादुच्चैर्वैमुख्यं मयि मा कृथाः।
स कथं भवता युद्धे जेतुं शक्यः शरैः सखे॥ ८७॥
सुग्रीवेणेति कथिते शुष्कं दुन्दुभिविग्रहम्।
पादाङ्गुष्ठेन चिक्षेप रामोऽपि दशयोजनम्॥ ८८॥
तद्दृष्ट्वा कर्म रामस्य साश्चर्यमपि वानरः।
उवाच भूतभयदं चिन्तयन्वालिविग्रहम्॥ ८९॥
खेदो यदि न मद्वाक्ये विस्रम्भप्रणयो यदि।
आर्द्रोऽयं वालिना क्षिप्तः शुष्कत्वे कास्य तुल्यता॥ ९०॥
शरेणैकेन विद्धेषु त्वया तालेषु सप्तसु।
सर्वथा वालिहन्तारं जाने त्वां छिन्नसंशयः॥ ९१॥
इति वालिवैरोपाख्यानम्॥ २॥
श्रुत्वेति सुग्रीववचश्चापमाकृष्य राघवः।
शरं चिक्षेप निर्वृत्तघोषेणापूरयन्दिशः॥ ९२॥
स सप्त तालान्निर्भिद्य रामचापच्युतः शरः।
गिरिं भित्त्वा क्षितितलं विवेशाहिरिव श्वसन्॥ ९३॥
कृत्वातिदुष्करं कर्म हसो भूत्वा मनोजवः।
राममेवाजगामाशु स कौतुककरः शरः॥ ९४॥
ततः कृत्वाञ्जलिं मूर्ध्ना क्ष्मां स्पृशन्पृथुविस्मयः।
परीक्षालज्जितो राममूचे हृष्टः कपीश्वरः॥ ९५॥
सप्ततालभिदा व्यक्तं विशिखेनाशुगामिना।
नीतं तव यशः सप्तलोककर्णावतंसताम्॥ ९६॥

अधुनैव हतः शत्रुः सोदरव्यञ्जनः स मे।
निःसंशयोदयप्राप्तो मयायं त्वत्समाश्रयः॥ ९७॥
परीक्षालाघवकृतं मन्युं मे मा कृथा विभो[1]।
यथोक्तकारिणः प्रीत्या व्यसनार्तेषु साधवः॥ ९८॥
पराभवोद्धृतौ यत्नः क्रियतामद्य मे त्वया।
भवन्तु वालिसुहृदो विपन्नविभवोत्सवाः॥ ९९॥
इति ब्रुवाणं सुग्रीवं परिष्वज्य जयोत्सुकम्।
सितांशुपुष्पां काकुत्स्थः सफलां गिरमाददे॥ १००॥
अद्यैव गत्वा किष्किन्धां नादेनाहूय वालिनम्।
आकर्णाकृष्टचापस्य कुरु मे दृष्टिगोचरम्॥ १०१॥
अयं मे वह्निदीप्तोऽपि त्वत्प्रियायोद्यतः शरः।
यातु वालिवधूबाष्पदुर्दिने वारुणास्त्रताम्॥ १०२॥
राघवेनेत्यभिहिते सुग्रीवः प्रययौ पुरः।
किष्किन्धामुद्धतगतिस्तं रामोऽनुजगाम च॥ १०३॥
ततो ननाद मन्थाद्रिध्वानधीरं प्लवङ्गमः।
चिरं चकम्पिरे येन दिशः त्रस्ताम्बरा इव॥ १०४॥
तेन शब्देन महता प्रौढोन्मादविषाकुलः।
निर्ययौ मन्दिराद्वाली बिलादिव महोरगः॥ १०५॥
स सुग्रीवं पुरो दृष्ट्वा विपुलक्रोधविस्मयः।
गाढं भुजाभ्यां जग्राह चिरात्प्रियमिवागतम्॥ १०६॥
तयोर्युद्धमभूद्घोरं कम्पिताखिलभूतलम्।
जानुबन्धभुजाकर्षकरास्फालनकर्कशम्॥ १०७॥
तस्मिन्क्षितिधराम्भोधिक्षोभकारिणि संगरे[2]।
भयमाविरभूद्घोरं भूतानां क्षयशङ्किनाम्[3]॥ १०८॥
तौ निर्विशेषावालोक्य प्रमाणाकृतिविक्रमैः।
रामः सुहृद्वधभयान्न मुमोच शिलीमुखम्॥ १०९॥

१. 'प्रभो' ख. २. 'सुहृदं' ख. ३. 'भय' ख.

ततः प्रहारभग्नाङ्गः सुग्रीवो वालिनिर्जितः।
जगाम जीविताकाङ्क्षी त्वरितं निजकाननम् ॥ ११० ॥
घोराभिघाताभिहतो रुधिरोद्गारमूर्छितः।
ऋष्यमूकतटे श्रान्तः सोच्छ्वासो निषसाद सः ॥ १११ ॥
ततः सानुजमायान्तं हनूमत्प्रमुखैः सह।
रामं जगाद सुग्रीवः क्षणमालोकयन्क्षितिम् ॥ ११२ ॥
अहो मे हीनभाग्यस्य विफलस्त्वत्समाश्रयः।
विपरीतमिदं जातं पीयूषादिव मे विषम् ॥ ११३ ॥
मिथ्या वालिवधोद्योगः किं गृहीतः स्वयं त्वया।
हृदये शल्यमादत्ते प्रतिश्रुतिविपर्ययः ॥ ११४ ॥
न्यस्तस्त्वया मृत्युमुखे कस्मादहमुपेक्षितः।
सोऽयमालम्बनच्छेदः कृतः कूपावपातितः ॥ ११५ ॥
इति ब्रुवाणं सुग्रीवं रामो लज्जानताननः।
उवाच कोपमात्सर्यकारणं शृणु मे सखे ॥ ११६ ॥
युद्धे युवां मया दृष्टौ सदृशाभरणाम्बरौ।
तुल्यप्रमाणवर्णाङ्गस्वरालोकनचेष्टितौ ॥ ११७ ॥
अतोऽयं त्वद्वधभयान्मया वज्राग्रदारुणः।
अमोघपाती न त्यक्तः सत्यं प्राणहरः शरः ॥ ११८ ॥
अधुना प्रत्यभिज्ञायै पुंनागकुसुमोज्ज्वलाम्।
मालां कुरु विशालोरस्तटव्योमसुरापगाम् ॥ ११९ ॥
एषोऽहं धनुरप्येतदयं मृत्युकरः शरः।
वालिनो निधने रामः किं पुनः पुनरुच्यते ॥ १२० ॥
इति रामस्य वचसा सुग्रीवोरसि लक्ष्मणः।
नागपुष्पमयीं मालां चक्रे कान्तासितोज्ज्वलाम् ॥ १२१ ॥
स तया विबभौ भाविविजयव्यञ्जनस्रजा।
शुभ्राभ्रमालाभरणः श्रीमानिव सुराचलः ॥ १२२ ॥

---

१. 'मुत्सार्य' स्यात्.

ततः प्रतस्थे सुग्रीवः किष्किन्धां राघवानुगः ।
तारेण नलनीलाभ्यां सह वायुसुतेन सः ॥ १२३ ॥

इति सुग्रीववालियुद्धम् ॥ ३ ॥

ते व्रजन्तः समुत्तीर्य सरिद्गिरिवनावनिम् ।
ददृशुर्नीलजीमूतश्यामलं कदलीवनम् ॥ १२४ ॥
कस्येदमिति रामेण पृष्टः कपिपतिर्वनम् ।
गच्छन्नेव शशंसास्य पुण्यं चारु सदाफलम् ॥ १२५ ॥
अत्र[1] सप्तजना नाम मुनयोऽन्तर्जलव्रताः ।
सप्तभिर्वत्सरशतैः सशरीरा दिवं गताः ॥ १२६ ॥
पुण्योऽयमाश्रमस्तेषामगम्यः पक्षिणामपि ।
दृश्यते होमधूमोऽत्र दिव्यश्च श्रूयते ध्वनिः ॥ १२७ ॥
देशः पुण्यः प्रणम्योऽयमेतदाकर्ण्य राघवः ।
मनसा मुनिचक्रं तद्ववन्दे स तपोवनम् ॥ १२८ ॥
किष्किन्धामथ संप्राप्य काञ्चनाट्टालमालिनीम् ।
घोरं ननाद सुग्रीवः पुष्करावर्तनिःस्वनः ॥ १२९ ॥
तेनाकम्पितविश्वेन शब्देनाकम्पकारिणा ।
अभूदभूतसंभूतो भूतानां कम्पविप्लवः ॥ १३० ॥
किष्किन्धाद्रिगुहागेहसक्तकिंनरकामिनाम् ।
बभूवोद्भ्रान्तदयितागाढलिङ्गनविभ्रमः ॥ १३१ ॥
तं शब्दं पवनस्कन्धसंघट्टस्फालनोद्धतम् ।
शुश्रावान्तःपुरगतो वाली मधुमदाकुलः ॥ १३२ ॥
स तस्य ललनाकेलिवल्लरीकुसुमाकरः[2] ।
मदः क्वापि ययौ नादक्रोधाविष्कृतचेतसः ॥ १३३ ॥
कोपेन ज्वलितः क्षिप्रं कल्पान्तहुतभुक्प्रभः ।
बभार विश्वसंहारव्यापारपिशुनं वपुः ॥ १३४ ॥

---

१. 'तत्र' ख. २. 'युधः' शा०.

तं निष्पतन्तं वेगेन सुग्रीवाह्वानदुःसहम्।
तारा तारापतिमुखी परिष्वज्य प्रियावदत्॥ १३५॥
शुभ्रावपातसचिवं संत्यक्तक्रोधविप्लवम्।
केवलं धैर्यमालम्ब्य कर्तुमर्हसि सांप्रतम्॥ १३६॥
न जल्पन्ति न शृण्वन्ति न कुर्वन्त्यपरीक्षितम्।
विचाररुचिरा लोकाः साधवो दीर्घदर्शिनः॥ १३७॥
समः समस्तजन्तूनामपि क्रोधमदोदयः।
विचाराभिहतावेगः सतां न कुरुते पदम्॥ १३८॥
निरस्तः संयुगे भग्नः स तथापि तवानुजः।
निराशः केन दर्पेण पुनर्योद्धुमिहागतः॥ १३९॥
अवश्यं संश्रयस्तेन प्राप्तो नीतिमता स्थिरः।
कुतोऽन्यथा नवस्तस्य प्रसह्य त्वज्जयोद्यमः॥ १४०॥
अभिभूतो बलवता रिपुर्बलवदाश्रयः।
नवप्रभावदर्पेण नाहत्वा विनिवर्तते॥ १४१॥
सुग्रीवेणाश्रितो धन्वी रामो दशरथात्मजः।
शौर्यशीलो दयाम्भोधिरिति मामङ्गदोऽवदत्॥ १४२॥
बलिना संधिमिच्छन्ति युध्यन्ते हीनशक्तिना।
सदा तुल्यमुपेक्षन्ते श्रीकामा विजिगीषवः॥ १४३॥
जितोऽपि पुनरायातः शङ्के जीवितनिःस्पृहः।
सहसापातिना दीपः पतङ्गेनापि हन्यते॥ १४४॥
भ्राता संभाव्यतामेष राघवश्च प्रसाद्यताम्।
प्रणामेनापि भूपानां स्थाने विभवरक्षणम्॥ १४५॥
प्रियावचनमाकर्ण्य वाली विगतसाध्वसः।
उवाच निःश्वसन्प्रौढकोपस्मितसिताननः॥ १४६॥
भग्नग्रीवोऽपि सुग्रीवो गतश्चेत्पुनरागतः।
शौर्यशाली कथं वाली सहते तत्पराभवम्॥ १४७॥

१. 'धैर्येण' शा०.

न नाम निधनं दुःखं जातोऽवश्यं विपद्यते।
सजीवमेव मरणं मानभङ्गो हि मानिनाम् ॥ १४८ ॥
शूराः शत्रुयशःशुभ्रकर्मपाटनलम्पटाः।
परप्रणाममलिनं भुञ्जते विभवं कथम् ॥ १४९ ॥
नास्ति रामेण मे युद्धं सुग्रीवः संगरे पुनः।
प्रयास्यत्येव भग्नाङ्गः स वध्यो मम नानुजः ॥ १५० ॥
इत्युक्त्वा वलितग्रीवः परिष्वज्य प्रियाप्रियः।
अपुनर्दर्शनायैव तारामामन्त्र्य निर्ययौ ॥ १५१ ॥
स सुग्रीवं समासाद्य दृष्ट्वा निष्कम्पमोजसा।
विस्मितो मुष्टिनाभ्येत्य जघान घनगर्जितः ॥ १५२ ॥
तन्मुष्टियुद्धमभवज्जगतां कम्पकारणम्।
घोरशब्दं शिलाघातैस्तयोः पर्वतयोरिव ॥ १५३ ॥
गाढप्रहाराभिहतौ तौ स्फाररुधिरारुणौ।
बभतुः किंशुकाशोकौ फुल्लाविव रणाङ्गणे ॥ १५४ ॥
ततो सालेन सुग्रीवो वालिनं हेममालिनम्।
अताडयत्क्षितौ येन सोऽपि शैल इवापतत् ॥ १५५ ॥
तूर्णमुत्थाय सुग्रीवं कुपितः स वलोत्कटः।
दोर्भ्यामादाय विदधे मृत्योः कवलनोचितम् ॥ १५६ ॥
संकटे वर्तमानं तं दूरादालोक्य राघवः।
रुधिरोद्गारिणं भेजे सुहृन्निधनसंशयम् ॥ १५७ ॥
स संधाय शरं घोरं कालदंष्ट्रोत्कटाननम्।
स्वर्गारोहणसोपानं विससर्जाशु वालिने ॥ १५८ ॥
स तेनाभिहतो वेगान्निपपात महीतले।
जगतां दुर्निमित्ताय भ्रष्टः सूर्य इवाम्बरात् ॥ १५९ ॥
स दृष्ट्वा रुधिरष्ठीवी राघवं गद्गदस्वरः।
ऊचे संस्तभ्य कृच्छ्रेण जीवितच्छेदिनीं व्यथाम् ॥ १६० ॥

मामन्यरणसंसक्तं त्वया हत्वा यशस्विना ।
राम त्यक्तार्यवृत्तेन किं नाम सुकृतं कृतम् ॥ १६४ ॥
आत्मानमनुशोचामि न तारां चारुलोचनाम्[1] ।
हते मयि हतो मन्ये प्रियः पुत्रो ममाङ्गदः ॥ १६२ ॥
इत्युक्त्वा श्वासतरलप्राणः संचारनिःस्पृहः ।
मुहूर्तं निश्चलस्तस्थौ वाली मीलितलोचनः ॥ १६३ ॥

इति वालिवधः ॥ ४ ॥

तस्मिन्निपतिते वीरे प्रवरे सत्त्वशालिनाम् ।
तं देशमाययौ रामः शनैः सौमित्रिणा सह ॥ १६४ ॥
तं वीक्ष्य वाली प्रोवाच किंचिदुन्मील्य लोचने ।
स्रस्तं भारमिवासक्तां हेममालां परामृशन् ॥ १६५ ॥
कुले महति जातस्य गुणिनः[2] सत्त्वशालिनः ।
न कामादार्य मर्यादाविध्वंसी[3] धीः प्रवर्तते ॥ ४६६ ॥
राम एव सदाचारः सर्वभूतहिते रतः ।
कथमेकपदे नष्टमिति मे[4] विपदं यशः ॥ १६७ ॥
औचित्यचारुचरिते शङ्का मे नाभवत्त्वयि ।
विपन्नघाती[5] काकुत्स्थ इति कस्याशये स्पृशेत् ॥ १६८ ॥
लोकेषु रुचिरा कीर्तिराचारः पुनरीदृशः ।
दम्भध्वजानां जानाति को नु मिथ्याविनीतताम् ॥ १६९ ॥
पातकं मैथिलीलाभलोभेन भवता यदि ।
अविचार्य कृतं राम तत्रापि श्रूयतामिदम् ॥ १७० ॥
संध्यासमाधौ सप्ताब्धिचारिणा रावणः पुरा ।
कक्षायां स मया क्षिप्तः सीतां तव जहार यः ॥ १७१ ॥
सुग्रीवसेवारजसा मिथ्यैवासि कलङ्कितः ।
तमहं रावणं बद्ध्वा किं न दद्यां तव प्रियाम् ॥ १७२ ॥

---

१. 'हासिनीम्' शा०. २. 'महतः' शा०. ३. 'मर्यादाध्वंसे चेतः' शा०. ४. '[illegible] शा०. ५. 'प्रच्छन्नपापी' शा०.

उचितं मन्त्रिजभ्राता सुग्रीवः श्रियमश्नुते ।
नोचितं यत्सतां मार्गाद्रामः प्रीत्या परिच्युतः ॥ १७३ ॥
इत्युक्तो वानरेन्द्रेण रामः किंचिदधोमुखः ।
उवाच घर्षणामन्युप्रलीनकरुणाकणः ॥ १७४ ॥
अहो बतात्यधर्मस्य गतिं जानासि वानर ।
भ्रातृजायारतः पाप किं साधुरिव भाषसे ॥ १७५ ॥
अन्यस्य दोषं पश्यन्ति सुसूक्ष्ममपि तत्पराः ।
स्वनेत्रमिव नेक्षन्ते स्वदोषं मलिना जनाः ॥ १७६ ॥
भ्रातृजायारतवधो नाधर्मो मम रूपतः ।
राजदण्डविशुद्धानां गतिः सुकृतिनामिव ॥ १७७ ॥
राजानो मृगयाशीलास्त्वं च शाखामृगो मया ।
निहतः कानने हिंस्रस्तत्र का नाम वा च्युतः ॥ १७८ ॥
राघवेनेत्यभिहिते चिन्तयन्भवितव्यताम् ।
वाली विगलितक्रोधः क्षम्यतामित्युवाच तम् ॥ १७९ ॥
ततः श्रुत्वा हतं तारा वालिनं भुजशालिनम् ।
अग्रे कृत्वाङ्गदं पुत्रं शोचन्ती तूर्णमाययौ ॥ १८० ॥
स समभ्येत्य दयितं परिष्वज्यायतेक्षणा ।
दुःखाब्धिमग्ना प्रोवाच सृजन्ती बाष्पदुर्दिनम् ॥ १८१ ॥
अहो नु रामबाणेन जीवितं हरता तव ।
अदृश्यपातिना दूराद्धारितं हृदयं मम ॥ १८२ ॥
उन्मील्य नयने नाथ शिशुं पश्याङ्गदं सुतम् ।
दीर्घप्रवासिनः पुत्रदर्शनं ते पुनः कुतः ॥ १८३ ॥
सततं कण्ठनिहितां हेममालामिमां प्रियाम् ।
स्वर्गस्त्रीसंगमव्यग्रः कथं मामिव नेक्ष्यसे ॥ १८४ ॥
दृष्टिः प्रसादमधुरा पुत्रप्रणयिनी क्व ते ।
प्रेमामृतमयः क्वासौ दयितासंगमोत्सवः ॥ १८५ ॥

१. 'यन्निजभ्रातुः' शा०. २. 'सुधा' शा०.

रुमा यदि हृता भार्या सुग्रीवस्य प्रिया त्वया ।
ततः प्राणैः कृता शुद्धिर्निर्दोषा त्वहमाहृता ॥ १८६ ॥
वीर मानोन्नतग्रीव सुग्रीवाग्रौ निवेश्य माम् ।
भ्रातृशोणितसंसिक्तां भजस्व विपुलां श्रियम् ॥ १८७ ॥
पत्यौ समस्तसंकल्पकल्पवृक्षे तिरोहिते ।
पिता बन्धुः सुतो भ्राता निष्फलः किल योषिताम् ॥ १८८ ॥
सीता यदि हृता सर्वैरेकीभूतैः सुरासुरैः ।
तत्प्राप्तिप्रवरो वाली राम किं नाश्रितस्त्वया ॥ १८९ ॥
वैदेहीविरहे शापं वितरामि न ते सती ।
किं तु प्राप्तामपि चिरं न सीतामुपभोक्ष्यसे ॥ १९० ॥
अहो रागान्धमनसामविवेकपरिप्लवः ।
सुग्रीवः संश्रयो येषां वाली येषां वधोचितः ॥ १९१ ॥
अहो रामस्य मोहो वा दैवं वा वालिनः परम् ।
चूतश्छिन्नः श्रितो निम्बः पान्थेन क्रियतेऽत्र किम् ॥ १९२ ॥
इति प्रलापिनी तारा तारेव गगनच्युता ।
क्षितौ पपात च्छिन्नाग्रहारमुक्ताश्रुवर्षिणी ॥ १९३ ॥
तां तथा शोकविवशां क्रोशन्तीं करुणस्वनाम् ।
सपत्नीभिर्वृतां वृद्धः प्रोवाचान्तःपुराधिपः ॥ १९४ ॥
कष्टं शक्रसुतो वाली शक्रतुल्यः क्षयं गतः ।
मुग्धे किं क्रियते धात्रा देहिनो न स्थिराः कृताः ॥ १९५ ॥
अस्मिन्नित्यमविच्छिन्ने दीर्घे संसारवर्त्मनि ।
गच्छन्प्रियः प्रियस्यापि न मुहूर्तं प्रतीक्षते ॥ १९६ ॥
प्रियाणामप्रियाणां च जगतो जीवितस्य च ।
अवश्यं निधनं ज्ञात्वा कः शोकः कर्तुमर्हति ॥ १९७ ॥
शोच्यं शोचति नामासौ यः परेण न शोच्यते ।
शोचत्यासन्ननाशोऽपि सेयमन्धपरम्परा ॥ १९८ ॥

तरङ्गभङ्गुरा भोगा दृष्टनष्टा विभूतयः।
धनं यौवनमायुश्च नित्यशोकस्य किं शुचा ॥ १९९ ॥
भूतानामनुभूतानां संभूतानां[1] क्षयः क्षणे।
प्रियाणां च प्रयातानां न शोकात्पुनरागमः ॥ २०० ॥
इति वृद्धे वदत्यस्या न शोकस्तनुतां ययौ।
वियोगहृतचित्तानामुपदेशः[2] क भेषजम् ॥ २०१ ॥

इति ताराप्रलापः ॥ ५ ॥

वाली लोचनमुन्मील्य विलोक्याङ्गदमग्रतः।
रामसुग्रीवमुख्यानामुवाच शनकैः परः ॥ २०२ ॥
न जीवितपरित्यागदुःखं स्पृशति मे मनः।
शोकोऽयं यन्न पश्यामि चन्द्रमन्ध इवात्मजम् ॥ २०३ ॥
भ्रातः सुग्रीव कारुण्याज्जीर्णं मन्युं निरस्य मे।
पुत्रः पाल्योऽङ्गदः प्रीत्या सोऽयं भृत्यस्तवाधुना ॥ २०४ ॥
शिरश्चरणयोः पुत्र सुग्रीवस्य कृपावतः।
क्षिप क्षितिपतेरस्य विनयेनैव जीवसे ॥ २०५ ॥
हेमपद्ममयीं मालां शक्रदत्तामिमां मम।
दिव्यां गृहाण सुग्रीव मूर्तामिव नृपश्रियम् ॥ २०६ ॥
एतत्प्रभावान्नाद्यापि निर्गच्छन्त्यसवो मम।
इत्युक्त्वा तां ददौ तस्मै मालां कमलपुष्कराम्[3] ॥ २०७ ॥
प्रियाप्रलपितं शृण्वन्नङ्गदन्यस्तलोचनः।
आलिङ्ग्यैवावनिं वाली ततस्तत्याज जीवितम् ॥ २०८ ॥
अङ्गदोऽथ ससुग्रीवः प्रवरैः सह वानरैः।
वालिनः साग्निसंस्कारां चकार सलिलक्रियाम् ॥ २०९ ॥
रामाज्ञया ततस्तूर्णं छत्रव्यजनलाञ्छनः।
अभिषेकोत्सवः सज्जः सुग्रीवस्य बभौ पुरः ॥ २१० ॥

१. 'प्रभूतानां' ख. २. 'मुपायोगस्त्व' क. ३. 'कनक' शा०.

अभिषिक्तेऽथ सुग्रीवे जाम्बवत्प्रमुखैः स्वयम् ।
यौवराज्यश्रियं भेजे राघवस्य गिराङ्गदः ॥ २११ ॥
ततः प्रावृषमालोक्य राघवः समुपस्थिताम् ।
निःसंचारोचितं कालं ज्ञात्वा सुग्रीवमब्रवीत् ॥ २१२ ॥
अहं वर्षाक्षयाकाङ्क्षी तटे माल्यवतो गिरेः ।
निवसामि त्वमप्यस्मान्कृत्यकाले समेष्यसि ॥ २१३ ॥
इति सुग्रीवमामन्त्र्य सीताविरहनिःसहः ।
सौमित्रिणा सह ययौ रामः प्रस्रवणं गिरिम् ॥ २१४ ॥

इति सुग्रीवाभिषेकः ॥ ६ ॥

इति श्रीक्षेमेन्द्रविरचिते रामायणकथासारे किष्किन्धापर्व ।

---

ततः पयोधरव्यूहैर्विततं विबभौ नभः ।
हरहुंकारदग्धस्य धूमैरिव मनोभुवः ॥ १ ॥
कदलीकुञ्जगर्भेषु तालतालीवनेषु च ।
वराहगजयूथेषु लीनेवासीद्घनच्छविः ॥ २ ॥
ततः पुष्पभुवः कीर्णा बभुर्जलकणैर्नवैः ।
अव्धिलब्धाम्बुभिर्मेघैर्मुक्तैर्मुक्ताफलैरिव ॥ ३ ॥
अथ निःसूत्रसंचारहारा धाराधरश्रियः ।
धाराधरा वने पेतुः परिहारा धृतेरिव ॥ ४ ॥
इन्द्रायुधप्रभापुञ्जैः प्रनृत्तैश्च शिखण्डिभिः ।
घनानां च वनानां च स्पर्धेवासीत्परस्परम् ॥ ५ ॥
ववुर्विरहसंतापपिशुनाः शीकरानिलाः ।
निःश्वासा इव रामस्य करुणाश्रुकणाकुलाः ॥ ६ ॥
शिखण्डिताण्डवे गर्जत्पर्जन्यमुरजोर्जिते ।
बभार घननीहारः प्रवेशपटविभ्रमम् ॥ ७ ॥

---

१. 'पर्वते' शा०.

प्रशातपतिता वर्षविन्दुभिः सहतारकाः ।
विद्युद्दीपैर्जलधराः समन्वेष्टुमिवोद्यताः ॥ ८ ॥
महिषाः पल्वलोत्तीर्णा वर्षाक्षालितकर्दमाः ।
क्षितौ वाल्यान्निपतिताश्चेरुर्मेघसुता इव ॥ ९ ॥
द्विपाः सभृङ्गदंष्ट्राग्रभिन्नसंसक्तपुष्कराः ।
वभ्रमुर्वर्षकलुषा मूर्ताः पद्माकरा इव ॥ १० ॥
कष्टं विदलितोऽस्माभिः संमदे पतितः शशी ।
इत्येव मेघाश्चक्रन्दुः फुल्लामालोक्य केतकीम् ॥ ११ ॥
कृत्वाभिसारिका धौतनेत्राञ्जनवृताननाः ।
प्रययुश्चन्द्रविद्वेषाद्वैरपानमिवाम्बुदाः ॥ १२ ॥
खे बभ्राम बलाकाली दिग्वधूहसितच्छटा ।
मेघनष्टमिवान्वेष्टुं निशानाथं कुमुद्वती ॥ १३ ॥
श्यामां कदम्बकुसुमसितां पीनपयोधराम् ।
प्रौढां प्रावृषमालोक्य रामः सौमित्रिमब्रवीत् ॥ १४ ॥
दिवाकरकरापीतं देवानाममृतं परम् ।
एते वर्षन्ति विषदा जलदा विषसंहतिम् ॥ १५ ॥
निम्नोन्नतसमीभूते सलिलैः स्थगिताः पथि ।
प्रोषितानां प्रियासङ्गा जयोद्योगाश्च भूभृताम् ॥ १६ ॥
मेघजालेन संरुद्धः शोकेनाहमिवांशुमान् ।
न दृश्यते शशिकला जानकीव सितासिता ॥ १७ ॥
एष फुल्लार्जुनः श्रीमान्कदम्बरुचिरो गिरिः ।
अभिषिक्तोऽम्बुदैः स्निग्धैः सुग्रीव इव शोभते ॥ १८ ॥
भान्तिमेघाम्बुसंसिक्तास्तमालकवरीभराः ।
रजोविमुक्ताः ककुभः स्नेहस्नाता इवाङ्गनाः ॥ १९ ॥
कालः कालः प्रिया दूरे मार्गाश्च जलनिर्गमाः ।
चिरं न सहते चेतः किमन्यज्जीवितं गतम् ॥ २० ॥

१. 'प्रसाद' शा०. २. 'ययुः' शा०. ३. 'भूताना' शा०.

यथोक्तकारी सुग्रीवः कालेऽस्मिञ्जलसंकुले ।
सहसोद्योगयात्रायां मिथ्यैवायास्यते कथम् ॥ २१ ॥
वनवासपरिक्लिष्टं तं चिरावाप्तवल्लभम् ।
वक्तुं स्वकार्यं तात्पर्यादकाले कथमुत्सहे ॥ २२ ॥
उपकारफलं तुल्यं देहीति विगतत्रपः ।
यो वक्ति निजमौचित्यं लुनीते स्वकरेण सः ॥ २३ ॥
स मे प्रियावियुक्तस्य ज्ञात्वा जीवितसंशयम् ।
प्रियं प्रियस्य सुहृदः स्वयमेव करिष्यति ॥ २४ ॥
इति कृच्छ्रेऽप्यनौचित्यविमुखं राघवानुजः ।
राघवस्य वचः श्रुत्वा तथेति प्रत्यपद्यत ॥ २५ ॥

इति प्रावृड्वर्णनम् ॥ १ ॥

निःसपत्नं निजं राज्यं प्राप्य प्लवगपुंगवः ।
बभूव वल्लभासक्तो राज्यं संत्यज्य मन्त्रिषु ॥ २६ ॥
तं विस्मृतसुहृत्कार्यं दयितारतिलालसम् ।
उवाच हनुमानेत्य दंष्ट्रांशुविषदाननः ॥ २७ ॥
साधवः पदमासाद्य विपुलं विपुलाशयाः ।
संपदं बहु मन्यन्ते मित्रोच्छिष्टसुखोत्सवाम् ॥ २८ ॥
रत्नभूम्यादिलाभानां मित्रलाभो महोदयः ।
आत्मकार्यं न कुरुते मित्रकार्यं करोति यः ॥ २९ ॥
इमां प्राणपणेनापि श्रियमिच्छन्ति मानिनः ।
सुहृदामुपकाराय द्विषतां विग्रहाय च ॥ ३० ॥
व्यवहारे सदाचारं मित्रं विभवसंभवे ।
शक्तौ परोपकारं च स्मरन्ति सुकृतोचिताः ॥ ३१ ॥
गुणः साधोर्बहुगुणः पात्रे दानमिवोज्वलम् ।
अकृतज्ञो विनष्टोऽसौ बीजमुप्तमिवोषरे ॥ ३२ ॥
अल्पमप्युपकारं च मेरुतुल्यं स्मरन्ति ये ।
विस्मरन्त्यपकारं च धन्या श्रीस्तत्समागमात् ॥ ३३ ॥

राघवेण कृतं यत्ते राघवो यत्करोति ते ।
तत्कार्यकालो यात्येष तव लज्जाकरः परः ॥ ३४ ॥
प्राणपीडामपि चिरं सहते विरहार्दितः ।
स्वयं न प्रेरयत्येव सत्त्वमौचित्यसागरः ॥ ३५ ॥
दुष्करेष्वपि कार्येषु परेषां सततोदिताः ।
स्वकार्याभ्यर्थनादैन्यमौनिनो मानिनः परम् ॥ ३६ ॥
रामस्य कृत्यं कुरुते निःसंख्या हरिवाहिनी ।
वयं विधेयास्त्वं नाथः किमन्यज्जृम्भतां यशः ॥ ३७ ॥
समीरणसुतस्येति वचः श्रुत्वा कपीश्वरः ।
संदिदेशातुलबलं नीलं सेनासु नायकम् ॥ ३८ ॥
कपीनां विपुलं सैन्यं शैलद्वीपान्तचारिणाम् ।
निःशेषं मे समायातु पूर्णमासी परोऽवधिः ॥ ३९ ॥
सप्तरात्रमतिक्रम्य दृश्यते यस्य नागमः ।
राजदण्डहतेनायं लोकस्तेन न दृश्यते ॥ ४० ॥
इति सर्वान्समादिश्य प्लवगान्प्लवगेश्वरः ।
विवेशान्तःपुरं कान्तासंभोगालिङ्गनोत्सुकः ॥ ४१ ॥
[1]अथ गौरीपतिगलश्यामले जलदागमे ।
वृत्ते बभूव रामस्य शरद्विरहशोकदा ॥ ४२ ॥
वृष्टिच्छेदविभक्तासु दिक्षु नीले नभस्तले ।
कान्तिर्जगाम जनतानयनानन्दबन्धुताम् ॥ ४३ ॥
याते जलधरासारे [2]राम बाष्पावशेषताम् ।
हंसा सचामरस्फारा विबभुः कमलाकराः ॥ ४४ ॥
हंसैः सप्तच्छदैः काशैः कुमुदैश्चन्द्ररश्मिभिः ।
दिशः शुभ्रीकृता जग्मुः काकुत्स्थस्यैव कालताम् ॥ ४५ ॥
शिखण्डिकेकाः [3]कटुतां प्रियतां हंसनिःस्वनाः ।
ययुः स्वावसरे सर्वः प्रायेण जनरञ्जकः ॥ ४६ ॥

---

१. 'इति' शा०. २. 'नाम' क. ३. 'मत्ततां' क.

विबोधितेषु पद्मेषु भृङ्गमङ्गलपाठकैः ।
श्रीः संचचार शिञ्जानकलहंसकनूपुरा ॥ ४७ ॥
कालसिंहेन महता दारितेष्वभ्रदन्तिषु ।
कुम्भमुक्ताप्रकरतां खे ययुस्तारतारकाः ॥ ४८ ॥
सप्तच्छदेषु [1]नीपेषु पनसेष्वसनेषु च ।
वन्धुजीवेषु च शरल्लीनेव समलक्ष्यत ॥ ४९ ॥
वने मौनव्रतास्तस्थुर्वीतरागाः शिखण्डिनः ।
सदाचारा विचार्येव संसारविशरारुताम् ॥ ५० ॥
वि[2]साङ्कुररसादम्बुविम्बितेन्दुकलाकृतौ ।
जहसुः कु[3]सुमैर्वाप्यो हंसै[4]रुद्धतकर्दमम् ॥ ५१ ॥
व्याकीर्णकेशराकारकिरणार्कोरुकर्णिकम् ।
खं स्रस्तशुभ्राभ्रदलं जरत्कमलतां ययौ ॥ ५२ ॥
गलिताम्बुदुकूलेषु तटेषु जघनेष्विव ।
राजहंसनखोल्लेखास्तन्वीनां सरितां बभुः ॥ ५३ ॥
दारितानां शरद्व्याघ्र्या सूर्यांशुनखरैः खरैः ।
रक्तं मेघवराहाणां वन्धुजीवेष्विवापतत् ॥ ५४ ॥
कुमदोत्करसंक्रान्तरजःकर्पूरपाण्डुरः ।
ययौ गजेषु भृङ्गौघः कर्णचामरचारुताम् ॥ ५५ ॥
निशाः शशाङ्कविषदाः फुल्लसप्तच्छदा दिशः ।
बभुः परस्परं सख्यः सनर्महसिता इव ॥ ५६ ॥

इति शरद्वर्णनम् ॥ २ ॥

हंसहासां शशिमुखीं फुल्लोत्पलविलोचनाम् ।
कान्तां शरदमालोक्य रामः सौमित्रिमभ्यधात् ॥ ५७ ॥
इयं सा साधुसेवेव संपूर्णफलशालिनी ।
भाति सज्जनमैत्रीव शरद्विमलमानसा ॥ ५८ ॥

---

१. 'रूपेषु' क. २. 'विसाङ्कुरे' इति भवेत्. ३. 'कुमुदैः' ख. ४. 'उद्धृत' शा०-ख.

अगस्त्यस्योदयेनैषा निर्विषं कुरुते विषम् ।
शरत्कस्मादकस्मान्मे विषं वर्षति दुःखिनः ॥ ५९ ॥
वरं शरन्न ते प्रावृड्वरं प्रावृण्न मे शरत् ।
इति मिथ्यैव संकल्पः सर्वमार्तस्य दुःसहम् ॥ ६० ॥
सीतासमागमोपाये सुहृत्सुचिरचिन्तितः ।
आशाबन्ध इवाद्यापि सुग्रीवो मे न दृश्यते ॥ ६१ ॥
गेयं कर्णे गले मालां प्रियामङ्के मुखे सुराम् ।
कृत्वा विहरति व्यक्तं स मत्कार्यपराङ्मुखः ॥ ६२ ॥
स्फटभाभोगसौभाग्यविभवानुभवोत्सवम् ।
परकार्यानुरोधेन त्यक्तुमुत्सहते नु कः ॥ ६३ ॥
कथं त्यजति सुग्रीवः प्रियां कण्ठावलम्बिनीम् ।
पुनर्नैवोपयुक्तस्य ममार्थे स्वार्थपण्डितः ॥ ६४ ॥
स्वकार्यतात्पर्यवतां परार्थश्लथचेतसाम् ।
सुखार्थे त्यक्तमानानां निन्द्यं जन्म दुरात्मनाम् ॥ ६५ ॥
अयाचितोपकाराणां प्राणैरप्युपकारिणाम् ।
महात्मनां भवत्येव परचिन्ताकुलं मनः ॥ ६६ ॥
पूर्वोपकारिणां पापाः सुहृदां ये पराङ्मुखाः ।
क्रव्यादा अपि मांसेषु सत्यं तेषां पराङ्मुखाः ॥ ६७ ॥
पदस्था विषमस्थानां मित्राणां न भवन्ति ये ।
आयासिता तैर्जननी गर्भभारेण केवलम् ॥ ६८ ॥
मम प्रियाविहीनस्य मूढबुद्धेः परायणम् ।
किष्किन्धां त्वमितो गत्वा सुग्रीवं वद लक्ष्मण ॥ ६९ ॥
चत्वारो वार्षिका मासा याता मम वियोगिनः ।
कथमद्यापि न वयं याताः स्मृतिपथं तव ॥ ७० ॥
अहो नु विस्मृतवचाः सुहृत्कार्यपरिच्युतः ।
स्त्रीणामपि मुखं स्पष्टं निर्लज्जः कथमीक्षसे ॥ ७१ ॥

१. 'तव स्मृतिपथं गताः' शा०.

वँक्रस्यानेकजिह्वस्य भोगमात्राभिमानिनः।
कस्य नोद्वेगजननी सखे तव भुजंगता॥ ७२॥
तदेवेदं धनुर्दीप्तं स एवायं शिलीमुखः।
वालिनं यदि ते द्रष्टुं मतिर्जाता तदुच्यताम्॥ ७३॥
इति भ्रातुर्वचः श्रुत्वा लक्ष्मणस्तप्तमानसः।
तमुवाच व्रजाम्येष चपलस्य कपेः पुरीम्॥ ७४॥
तमार्य त्यक्तमर्यादं सौजन्यव्यञ्जनं शठम्।
वक्ष्यन्ति तव संदेशं मर्मैते निशितेषवः॥ ७५॥
इति क्रोधानलेद्धस्य लक्ष्मणस्योत्कटं वचः।
रामः श्रुत्वा तमवदद्विचारव्यस्तमानसः॥ ७६॥
सौमित्रे मा क्रुधस्तस्मै स एवास्त्वपवादभाक्।
सन्तः कृतापराधेऽपि प्रसादमधुराशयाः॥ ७७॥
प्रणयात्सुहृदित्युक्तः सकृदप्युचिताशयैः।
कालेन दृष्टदोषोऽपि नार्हत्येव विमाननाम्॥ ७८॥
अनार्यमार्यवृत्तेन सत्येनावृत्तकारिणम्।
रिपुमप्युपकारेण वशीकुर्वन्ति साधवः॥ ७९॥
अल्पेऽपि दोषे प्राणेषु दण्डो यैर्विनिपात्यते।
प्रकृतिस्थाः प्रसादे ये कृच्छ्रा तैः सह संगतिः॥ ८०॥
दोषग्रहणदक्षाणां विरज्यन्ते सुहृज्जनाः।
मिथ्याभिमानस्तब्धानां लुब्धानामिव सेवकाः॥ ८१॥
इति भ्रात्रा समादिष्टः सौमित्रिर्निःश्वसन्ययौ।
किष्किन्धां वानरभुजस्तम्भसंभारदुर्गमाम्॥ ८२॥
संप्राप्य विद्रुमस्तम्भरत्नप्राकारतोरणाम्।
नगरीं सूर्यपुत्रस्य सुग्रीवस्य प्रभामिव॥ ८३॥
क्रोधोद्धतगतिः पादन्यासकम्पितभूतलः।
विवेश गणयन्वीरान्प्लवगान्गिरिविग्रहान्॥ ८४॥

१. 'वक्रस्या' इति स्यात्. २. 'प्रायेण' शा०.

तं कोपादधिकाताम्रलोचनं सज्जकार्मुकम्।
संरम्भात्तायुधास्तूर्णं कपयः पर्यवारयन्॥ ८५॥
ते तस्य क्रोधदीप्तस्य कल्पान्तदहनद्युतेः।
अशक्ताः संमुखे स्थातुं दुद्रुवुर्विगतप्रभाः॥ ८६॥
स ददर्श निशानाथकान्तिसंतानतस्करम्।
स्फाटिकं हेमहर्म्योच्चशृङ्गं सुग्रीवमन्दिरम्॥ ८७॥
द्वारान्तिकमुपेत्याथ वेणुवीणामृदुस्वनैः।
एकीकृतं स शुश्राव गीतं किंनरयोषिताम्॥ ८८॥
गीतमन्तःपुरे श्रुत्वा सुग्रीवस्य विलासिनः।
रामं च दुःखितं स्मृत्वा रुषा जज्वाल लक्ष्मणः॥ ८९॥
प्रकोपदुःसहे तस्मिन्संनद्धानां महौजसाम्।
वानराणां बलैर्घोरैर्निरुद्धे राजवर्त्मनि॥ ९०॥
ज्याघोषं सिंहनादं च कृत्वा[1] व्रजन्पुनः पुनः।
पुरद्वारे स शुश्राव यौवराड्[2] वालिनन्दनः॥ ९१॥
लक्ष्मणो वानरान्दृष्ट्वा वाच्यमानो महाभुजः।
सुग्रीवं नलनीलं च क्षयं तेषामवैत्पुरीम्॥ ९२॥
तद्वाक्यादङ्गदस्तूर्णं सुग्रीवस्य तमागतम्।
न्यवेदयदतिक्रुद्धं क्षयोद्यतमिवान्तकम्॥ ९३॥
क्षुभ्यत्कपिबलाम्भोधिशब्देन व्योमसर्पिणा।
तारया च सुखासक्तः सुग्रीवः प्रतिबोधितः॥ ९४॥
हनुमन्नलनीलाद्यैः सुषेणविनताङ्गदैः।
लक्ष्मणागमनोद्विग्नः स मन्त्रिभिरचिन्तयत्॥ ९५॥
तमूचे वायुतनयः संदेहान्दोलिताशयम्।
सर्वथा प्रणिपत्यैव प्रसाद्यो राघवानुजः॥ ९६॥
कान्ताप्रणयकोपेषु सुहृदां च प्रसादने।
शोभते महतामेव विनयावनतं शिरः॥ ९७॥

---

१. 'कुर्वन्प्रायात्' ख॰. २. 'युवराड्' स्यात्.

पूर्वोपकारिणा यत्ते रामेण सुहृदा कृतम् ।
अल्पा प्रतिकृतिस्तस्य तदर्थे जीवितव्ययः ॥ ९८ ॥
उपकारकणस्तावत्सत्यं भारायते सताम् ।
यावत्प्रत्युपकारेण न स तेनैव तारितः ॥ ९९ ॥
श्रुत्वैतन्मारुतसुतेनोक्तं तपननन्दनः ।
उवाच सत्यमुचितं कथितं भवता हितम् ॥ १०० ॥
इदं तु नाभिजानामि यत्क्रुद्धः किल लक्ष्मणः ।
न मयोक्तं कृतं वापि मोहात्किंचिदसांप्रतम् ॥ १०१ ॥
छिद्रप्रवेशिभिर्नूनं द्विजिह्वैरेष मे सुहृत् ।
भेदप्रणिहितैर्जिह्मैर्वाग्विषेणाकुलीकृतः ॥ १०२ ॥
सत्योपलिप्तैरनृतैर्वाक्यैः प्रत्ययकारिभिः ।
दोषदृश्यैकवेशैश्च पैशुन्यं कुर्वते खलाः ॥ १०३ ॥
तूर्णमन्विष्यतां तावत्सौमित्रेः क्रोधकारणम् ।
न ह्यविज्ञातविषये प्रवर्तन्ते प्रतिक्रियाः ॥ १०४ ॥
रामात्तदनुजाद्वापि न भयं विद्यते मम ।
अदोषे कुपितः किं तु तीव्रशोककरः सुहृत् ॥ १०५ ॥
अतिकृच्छ्रेण लभ्यन्ते रक्ष्यन्ते च प्रयत्नतः ।
कष्टैर्नेष्टानि साध्यन्ते मित्राणि च धनानि च ॥ १०६ ॥
अवज्ञोपेक्षिते प्रेम्णि संधानं दुष्करं पुनः ।
जतुलेशेन संश्लेषः कथं नु स्फुटिते मणौ ॥ १०७ ॥
त्रुट्यत्यतिशयाकृष्टं हठाश्लिष्टे विपद्यते ।
सौहार्दं कष्टसंधार्यं मृणालीनालपेशलम् ॥ १०८ ॥
एतदेव महद्दुःखं ममान्तःशल्यदुःसहम् ।
यत्प्रयत्नार्जितं मित्रं मिथ्यादोषेण नश्यति ॥ १०९ ॥
इदं दहति मे चेतो यदयुक्तोपकारिणः ।
जीवतापि न रामस्य पापेनोपकृतं मया ॥ ११० ॥

१. 'किं नु' शा०. २. 'यद्यत्नेनार्जितं' शा०.

इति सुग्रीववचनं निशम्योवाच मारुतिः ।
प्रेमबन्धनसूत्रालीमिव दंष्ट्रांशुभिः सृजन् ॥ १११ ॥
मित्रोपकारविरहव्याकुलस्य गुणोचिता ।
तवैषा शोभते चिन्ता यशःप्रणयदूतिका ॥ ११२ ॥
श्लथाम्बुजस्तनी प्रायः शरद्गलितयौवना ।
दृश्यते न च रामस्य यात्राकाले तवोद्यमः ॥ ११३ ॥
प्रियाविरहतप्तेन प्रणयात्कुपितेन ते ।
भ्राता विसृष्टो रामेण वीतक्रोधो विधीयताम् ॥ ११४ ॥
इत्युक्तो मन्त्रिणां मध्ये मन्त्रज्ञेन हनूमता ।
तथेत्यूचे कपिपतिः कालातिक्रमलज्जितः ॥ ११५ ॥
अन्तःपुरं प्रविश्याथ लक्ष्मणः शुभलक्ष्मणम् ।
ददर्श रम्यपर्यङ्के सुग्रीवं दयितासखम् ॥ ११६ ॥
कान्ताकरतलाधूतचामरोदञ्चितांशुकम् ।
सुमेरुमिव संसर्पिचन्द्रांशुधवलाम्बुदम् ॥ ११७ ॥
विराजमानं हारेण जाह्नवीनिर्झरत्विषा ।
मन्दरं सागरोत्तीर्णमिव फेनावलीयुतम् ॥ ११८ ॥
दिव्याभरणसंभारप्रभापटलपाटलम् ।
बालार्कमिव संक्रान्तकामिनीकुचकुङ्कुमम् ॥ ११९ ॥
वल्लभालिङ्गनाल[1]ग्नकपोलागुरुपल्लवम् ।
पारिजातमिव स्फारिसौरभाहूतषट्पदम् ॥ १२० ॥
विलासमारुतालोलललनावल्लरीयुतम् ।
उद्यानमिव कामस्य मन्दरोद्दामशेखरम् ॥ १२१ ॥
तं भोगसुभगं दृष्ट्वा भ्रातुर्दुःखेन पीडितः ।
भूयो जगाम सौमित्रिः कोपात्कालाग्नितुल्यताम् ॥ १२२ ॥
तं विलोक्यैव सुग्रीवः कृतातिथ्यं पुरोधसा ।
कान्तासखः समुत्तस्थौ संरम्भगलितांशुकः ॥ १२३ ॥

१. 'क्रान्त' शा०.

तं न सेहे हरिर्द्रष्टुं संवित्कालव्यतिक्रमात्।
चिरं प्रणामव्याजेन वैलक्ष्यविनताननः ॥ १२४ ॥
रुमया सहिता तारा प्रणनाम कृताञ्जलिः।
नमत्कर्णोत्पलरजोलेखाशबलितस्तनी ॥ १२५ ॥
स्वमेव वदनं पश्यन्संक्रान्तं मणिकुट्टिमे।
ऊचे हरीन्द्रः सौमित्रिमासनं गृह्यतामिति ॥ १२६ ॥
तं लक्ष्मणोऽवदद्दूताः कृतार्था एव सत्कृतिम्।
भजन्ते पूजयोच्छिष्टैः किं दूतैः कार्यनिष्फलैः ॥ १२७ ॥
शृणु तावत्कपिपते यत्प्रियाविरहार्दितः।
संविद्व्यतिक्रमक्रुद्धस्त्वामाह रघुनन्दनः ॥ १२८ ॥
हन्तोचिता तवैवेयं शाखामृग कृतघ्नता।
येनात्मसुखलुब्धेन विप्रलब्धः सुहृज्जनः ॥ १२९ ॥
कुलं स्वजनमात्मानं सुकृतं च निहन्ति यत्।
तदसत्यं कथं नाम तव वल्लभतां गतम् ॥ १३० ॥
ऐश्वर्यविषसंदर्भमूर्छामीलितलोचनः।
प्रियानपि न पश्यन्ति सुहृत्स्वजनबान्धवान् ॥ १३१ ॥
कृतघ्नः सर्वभूतानां वध्यः सर्वात्मना कपे।
न स्मरत्यचलं स्फूर्जमुपकारं निगीर्य यः ॥ १३२ ॥
अस्ति विप्रवधादीनां पापानां महतामपि।
निष्कृतिर्न कृतघ्नानामित्युवाच प्रजापतिः ॥ १३३ ॥
धौता हरजटाजूटभ्रष्टगङ्गाजलैरपि।
कृतघ्नधारणमलं मही मन्ये न मुञ्चति ॥ १३४ ॥
इति त्वामाह सुग्रीव रामः सत्यपराक्रमः।
येन वालिवधे न्यस्तः शोकः कोपपदे द्विषाम् ॥ १३५ ॥
अहो नु स्त्रीप्रधानस्य समदस्य प्रमादिनः।
विस्मृतं मित्रकार्ये ते मूर्खस्येव सुभाषितम् ॥ १३६ ॥

संत्यक्तसर्वकार्याणां प्रशान्तनिजतेजसाम्।
स्त्रीप्रणामपरिम्लानमानं धिग्जन्म रागिणाम्॥ १३७॥
गीतेनेव कुरङ्गस्य पतङ्गस्येव तेजसा।
स्त्रीसङ्गेन तवासन्नः सत्यं नाशः प्लवङ्गम॥ १३८॥
सर्वेषां योषितः सन्ति भोगाः कस्य न वल्लभाः।
किं तु त्वत्सदृशः कोऽस्ति यातं कालं न वेत्ति यः॥ १३९॥
इति कोपाकुलालापे ब्रुवाणे राघवानुजे।
तारा ताराधिपमुखी तमूचे वल्गुनादिनी॥ १४०॥
नायं लक्ष्मण कोपस्य वचसः परुषस्य च।
अर्हः सुहृत्कपिपतिः सर्वथा प्रणयी तव॥ १४१॥
तवेन्दुसुन्दरादस्मान्मुखात्कमललोचन।
वचःस्फुलिङ्गाः पतिताः सत्यं नः कर्मविप्लवात्॥ १४२॥
नासत्यवादी न शठो न कृतघ्नो न दुर्जनः।
सुग्रीवो रामकार्ये तु योगीव ध्याननिश्चलः॥ १४३॥
अत्युन्नतो महाभोगः श्रीमान्स्वगुणचामरः।
रामेणैव यशःस्तम्भः कल्पस्थायीकृतः पदे॥ १४४॥
चन्द्रिकाभरणे हर्म्ये कान्ताकुचपुरःसरः।
सुखं न शेते सुग्रीवस्तप्तः काकुत्स्थचिन्तया॥ १४५॥
पुरा जितेन्द्रियः सोऽपि विश्वामित्रस्तपोनिधिः।
प्रयातं विपुलं कालं न मेने मेनकारतः॥ १४६॥
विवशास्त्रिदशा यत्र मुनयो यत्र मोहिताः।
प्रियासमागमे तस्मिन्मनः कस्य न लीयते॥ १४७॥
रिपुक्षयसहायस्ते भ्रातस्ते दयितः सुहृत्।
यथा रामस्तथैवायं पूज्यः श्रीमान्कपीश्वरः॥ १४८॥
हत्वा दशास्यं समरे सीतामाहृत्य दुर्लभाम्।
एष प्रदास्यति क्षिप्रं रामस्य प्रीत्युपायनम्॥ १४९॥

को वा रामस्य साहाय्ये पुरः समुपयुज्यते ।
तथापि प्रणयस्यैषा वचसि प्रभविष्णुता ॥ १५० ॥
सप्ताब्धिवेलाविश्रान्तशासनस्यास्य शासनात् ।
जगत्कपिमयं सर्वं रामकार्ये भविष्यति ॥ १५१ ॥
इति तारावचः श्रुत्वा मधुरं मधुराशयः ।
मृदुस्वभावः सौमित्रिः प्रसादं सहसा ययौ ॥ १५२ ॥
न कस्य गाढसौहार्दं प्रेम प्रणयपेशलम् ।
ललनावदनाम्भोजनिर्गतं वाङ्मधु प्रियम् ॥ १५३ ॥
प्रसन्नवदनं दृष्ट्वा लक्ष्मणं वानरेश्वरः ।
भयं चिन्तां च तत्याज न तु लज्जामनङ्गजाम् ॥ १५४ ॥
स माल्यं कण्ठसंसक्तं रतिसंभोगलक्षणम् ।
छित्त्वा जगाद प्रणतः सौमित्रिं मित्रवत्सलः ॥ १५५ ॥
नष्टं यशश्च राज्यं च येन मे पुनराहृतम् ।
कृतं नाद्यापि तत्कार्यं धिङ्मां निष्फलजीवितम् ॥ १५६ ॥
गुणौघैस्तस्य देवस्य शक्तः कर्तुं प्रतिक्रियाम् ।
यस्य सप्तार्णवव्यापि सप्ततालभिदो यशः ॥ १५७ ॥
युधि हेलाहतेनैव विराधेनाविराधितौ ।
प्राज्यौ यस्य भुजस्तम्भौ कबन्धवधबान्धवौ ॥ १५८ ॥
तस्य संग्रामसाहाय्ये व्यग्रस्य मम केवलम् ।
भक्तिमात्रोपकरणं तथाप्येष समुद्यमः ॥ १५९ ॥
मोहाद्व्यतिक्रमो यश्च स मम क्षम्यतां त्वया ।
न कस्यानेकदोषोऽपि सुहृत्काय इव प्रियः ॥ १६० ॥
इति श्रुत्वा कपिपतेर्वचनं राघवानुजः ।
तमूचे सत्त्वसारस्य सर्वमेतत्तवोचितम् ॥ १६१ ॥
ममार्य शोकतप्तस्य क्षन्तव्यं परुषं त्वया ।
सद्भिः पदप्रहारोऽपि व्यसनार्तस्य सह्यते ॥ १६२ ॥

---

१. 'गुणे कस्तस्य' शा०.

आर्यस्य दैवनिर्दिष्टः सुवृत्तो विपदाशयः।
दर्पणः सुखदुःखेषु त्वं सुहृत्संमुखः सदा ॥ १६३ ॥
सहायेन त्वयावश्यं सुहृदा रघुनन्दनः।
अवाप्स्यति हताराति: सीतां कीर्तिमिव प्रियाम् ॥ १६४ ॥
सखे तूर्णमितो गत्वा प्रौढकोपानलाकुलः।
यत्नेनाश्वास्यतामार्यस्त्वया निर्दिष्टकारिणा ॥ १६५ ॥
प्रेमपात्रेण सुहृदा दर्शनामृतवर्षिणा।
दुःखदाहं त्यजत्येव प्रियेणाश्वासितं मनः ॥ १६६ ॥
लक्ष्मणेनेत्यभिहिते तथेत्युक्त्वा हरीश्वरः।
परिवृत्याननं किंचिदुवाच पवनात्मजम् ॥ १६७ ॥
कुलाचलेषु सर्वेषु समुद्रेषु वनेषु च।
दिक्षु द्वीपेषु गगने निर्मनुष्यासु भूमिषु ॥ १६८ ॥
ये शैलजलदप्रख्या वसन्ति हरियूथपाः।
तूर्णमायान्तु ते दूतैस्त्वद्विसृष्टैर्मदाज्ञया ॥ १६९ ॥
राजाज्ञादूषका ये तु नायान्ति मदमोहिताः।
शरीरे दुःसहस्तेषां दण्डः क्षिप्रं निपात्यताम् ॥ १७० ॥
इत्युक्ते प्लवगेन्द्रेण हनूमद्वाक्यचोदिताः।
कपीनां भीमवेगानां कोट्यस्तूर्णं दिशो ययुः ॥ १७१ ॥

इति हनुमद्व्यादेशः ॥ ३ ॥

उदयास्ताचलशिरःशिखरेभ्यो महीयसाम्।
कपीनां दश तिस्रश्च कोट्यस्तूर्णं समाययुः ॥ १७२ ॥
स्फुरत्केसरताराणां हरीणां हरितेजसाम्।
शतानि सप्तकोटीनामाययुः स्फटिकाचलात् ॥ १७३ ॥
हिमाद्रिवासिनां दिव्यफलमूलरसाशिनाम्।
क्षिप्रं कोटीसहस्राणां सहस्रं समुपाययौ ॥ १७४ ॥
भीमानां भीमवेगानां दीप्ताङ्गारकवर्चसाम्।
सहस्रं कपिकोटीनामाययौ विन्ध्यभूधरात् ॥ १७५ ॥

क्षीरोदकच्छकूलेभ्यस्तमालवनगन्धिनाम् ।
निःसंख्या कपिवीराणां प्रवाहिन्यः समाययुः ॥ १७६ ॥
निरुद्धभास्करालोके प्रसर्पितबलार्णवे ।
हनूमत्प्रेरिता दूतास्ते प्रापुस्तुहिनाचलम् ॥ १७७ ॥
दिव्यान्नरसनिष्पन्दे यज्ञे माहेश्वरे पुरा ।
फलमूलानि जातानि ते तत्र ददृशुर्मुदा ॥ १७८ ॥
सुधास्वादानि दिव्यानि क्षुत्क्लमापहराणि ते ।
समादाय ययुस्तूर्णं तानि सुग्रीवमण्डलम् ॥ १७९ ॥
निवेद्य वानरेन्द्राय ते तद्दिव्यमुपायनम् ।
प्रथमं वानरचमूं शशंसुः समुपागताम् ॥ १८० ॥
प्रस्तुतोऽथ गिरौ रामं द्रष्टुं[1] हनुमतो गिरा ।
भीतभीतोऽभवत्क्षिप्रं दोलालोलाशयः कपिः ॥ १८१ ॥
ततः प्लवगसैन्येन महता प्लवगेश्वरः ।
आरुह्य रत्नशिबिकां प्रतस्थे राघवाचलम् ॥ १८२ ॥
स माल्यवन्तमासाद्य सेनासंच्छादिताम्बरः ।
ससर्प रामाभिमुखं पद्भ्यामेव कृताञ्जलिः ॥ १८३ ॥
लक्ष्मणेन[2] युतं दृष्ट्वा सुग्रीवं हनूमन्मुखैः ।
सैन्येन च समायान्तं रामस्तत्याज विक्रियाम् ॥ १८४ ॥
कृतागसि पुरः प्राप्ते सतां मन्युर्विलीयते ।
दर्शनान्तं हि महतां प्रियेषु कलुषं मनः ॥ १८५ ॥

इति सुग्रीवयात्रा ॥ ४ ॥

निवारितसितच्छत्रं दूरविश्रान्तचामरम् ।
मौलिरत्नप्रभासूत्रैरिव वद्धोन्नताञ्जलिम् ॥ १८६ ॥
गाढं दोर्भ्यां परिष्वज्य राघवः सुहृदं प्रियम् ।
समाभाष्य च सामात्यमूचे विश्रम्यतामिति ॥ १८७ ॥

---

१. 'द्रष्टुं रामं' शा०. २. 'णानुगतं' शा०.

ततः सुखोपविष्टं तं जगाद रघुनन्दनः।
अपि विस्मृतमित्रस्य सुखिनः कुशलं तव ॥ १८८ ॥
त्यक्तस्वपरकार्याणां चिरसक्ता विभूतयः।
राज्ञां भोगाभिभूतानां न भवन्ति भवादृशाम् ॥ १८९ ॥
प्रणयेनैतदुक्तोऽसि क्रियतामधुनोचितम्।
अनुद्गीर्णो हि वचसा मन्युर्नैवोपशाम्यति ॥ १९० ॥
इति रामस्य वचनं वीतक्रोधो निशम्य सः।
लब्धाश्वासोऽपि वैलक्ष्यादतिनम्राननोऽवदत् ॥ १९१ ॥
हेलावितीर्णराज्यस्य प्रत्याहृतयशःश्रियः।
मानद त्वत्प्रसादस्य सर्वदस्यः किमुच्यते ॥ १९२ ॥
असेवाप्रतिपन्नस्य प्रीत्या पूर्वोपकारिणः।
ये शठा नोपयुज्यन्ते भारैर्मज्जति तैर्मही ॥ १९३ ॥
वयस्यस्यातिदर्पोऽयं भक्तस्येति किमद्भुतम्।
अधुना मम भृत्यस्य दृश्यतां कार्यगौरवम् ॥ १९४ ॥
इदं प्लवगसैन्यं मे सहसैव समागतम्।
अतोऽप्यतिगुणं भूरि क्रमेण समुपैष्यति ॥ १९५ ॥
इमे सेनाग्रगा वीरा वयं भृत्याः प्रभुर्भवान्।
हत्वा दशास्यं त्रैलोक्यजयाय क्रियतां मतिः ॥ १९६ ॥
इत्याकर्ण्य हरीन्द्रस्य विनयाभरणं वचः।
तं प्रत्युवाच काकुत्स्थः परिष्वज्य कृताञ्जलिम् ॥ १९७ ॥
नैतच्चित्रं तव सखे गुणिनः सत्त्वशालिनः।
स्वभाव एव महतां परकार्यार्थमुद्यमः ॥ १९८ ॥
द्युतिरिन्दोः प्रभार्कस्य दीप्तिर्वह्नेर्धृतिर्भुवः।
सतां च प्रकृतिः सत्यं परकार्यरतं मनः ॥ १९९ ॥
तदैव जानकी लब्धा निहताश्च मयाहिताः।
यदैव दक्षिणेन त्वं मम धात्रार्पितः सुहृत् ॥ २०० ॥

१. 'सुहृदः' शा०.

इत्यादरेण सानन्दं ब्रुवाणे रघुनन्दने ।
अपारः कपिसैन्याब्धिरपरोऽपि समाययौ ॥ २०१ ॥
वालार्कवर्णैर्हेमाभैः शरवर्णैः शशिप्रभैः ।
कोटिसहस्रैर्दशभिर्मेरुकन्दरवासिभिः ॥ २०२ ॥
वीरः शतबलिर्नाम कपिः श्रीमानदृश्यत ।
पिता सुषेणस्तारायाः कोटीनां कोटिभिर्वृतः ॥ २०३ ॥
समाययौ जगद्व्यापी सुमेरुरिव जङ्गमः ।
पिता हनुमतः श्रीमान्केसरी स्फारकेसरः ॥ २०४ ॥
गवाक्षः पनसो धीमान्सन्नादः शरभो गजः ।
रुमण्वानृषभो वीरो गवयो गन्धमादनः ॥ २०५ ॥
वीरौ च मैन्दद्विविदौ कोटीनां कोटिभिर्वृतः ।
मेघागममिवाकाले दर्शयन्तः समाययुः ॥ २०६ ॥
वीरः पद्मसहस्रेण वृतः शङ्कुशतेन च ।
युवराजोऽङ्गदः श्रीमान्प्रत्यदृश्यत दुर्जयः ॥ २०७ ॥
वृतः कोटीसहस्राभ्यां तारस्तारानुजो वली ।
हनुमांश्च महाभागः सैन्यानां प्रस्थितः पुरः ॥ २०८ ॥
इन्द्रजानुः कपिवरः [1]कपिकोट्या वृतो वरः ।
वृतो द्वादशकोटीभिर्वीरो दधिमुखः कपिः ॥ २०९ ॥
वृतः खर्वसहस्रेण कुमुदः कुमुदप्रभुः ।
एकविंशतिकोटीनामीश्वरश्च दरीमुखः ॥ २१० ॥
विजयो दुन्दुभो रम्भः संपाती जाम्बवान्नलः ।
शतार्चिः शरगुल्मश्च वेगदर्शी महाहनुः ॥ २११ ॥
सुनेत्रोल्कामुखौ चेति वानराः कामरूपिणः ।
प्रत्यदृश्यन्त शैलाभाः प्रकम्पगुरवो भुवः ॥ २१२ ॥

---

१. 'पद्मकोट्या समावृतः' शा०.

रचिताञ्जलयः सर्वे सुग्रीवं प्रणिपत्य ते ।
तदादिष्टेषु देशेषु ससैन्याः समुपाविशन् ॥ २१३ ॥

इति बलागमनम् ॥ ५ ॥

ततः शासनमादाय राघवस्य हरीश्वरः ।
उवाच विनतं नाम वीरं वानरयूथपम् ॥ २१४ ॥
पूर्वां दिशमितो गत्वा त्वमाखण्डलमण्डिताम् ।
जानीहि रावणहृतां विचिन्त्य जनकात्मजाम् ॥ २१५ ॥
यमुनां यमुनाद्रिं च जाह्नवीं सरयूमपि ।
कौशिकीं तमसां नन्दां गोमतीं मागधीं पुरीम् ॥ २१६ ॥
विदेहपुण्ड्रवङ्गाङ्गकिरातशकबन्धुरान् ।
कर्णप्रावरणान्कालमुख्यान्पवनराक्षसान् ॥ २१७ ॥
अन्तर्जलचरान्घोरान्समुद्रद्वीपसंश्रयान् ।
सुवर्णकुड्यपर्यन्तं जम्बूद्वीपस्य भूधरान् ॥ २१८ ॥
शिशिरं नाम गगनासङ्गिशृङ्गं सुरालयम् ।
कालोदकं च जलधिं यत्रालक्ष्याः क्षपाचराः ॥ २१९ ॥
छायाग्रहं ब्रह्मशप्ताः कुर्वन्ति किल देहिनाम् ।
ब्रह्मस्वहारिणः पूर्वं विप्रास्ते नरकं गताः ॥ २२० ॥
वसन्ति तमसि स्फारे सदा क्षुत्क्षामकुक्षयः ।
ततो रक्तजलं नाम समुद्रं घोरदर्शनम् ॥ २२१ ॥
गृहं विहगराजस्य विशालं कूटशाल्मलिम् ।
गोशृङ्गं च महानीलमब्धिमध्यात्समुत्थितम् ॥ २२२ ॥
यत्र शृङ्गनिभा भीमा मन्देहा नाम राक्षसाः ।
शृङ्गेभ्यः सलिले प्रातर्लभन्ते च पतन्ति च ॥ २२३ ॥
ततः शशाङ्कधवलं क्षीरोदममृतास्पदम् ।
यस्य मध्येऽंशुमान्नाम जातो रजतभूधरः ॥ २२४ ॥
रजताम्भोजनलिनी रम्यो रजतपादपः ।
दिव्यां सुदर्शनां नाम हेमहंससरोजिनीम् ॥ २२५ ॥

तां सेवन्ते सदा सिद्धाः सयक्षोरगकिंनराः ।
ततो घृतोदधिं गत्वा यत्रासौ वडवानलः ॥ २२६ ॥
पयः प्राश्नात्यविरतं क्रोशतां जलवासिनाम् ।
हैमं तस्योत्तरे कूले योजनानि चतुर्दश ॥ २२७ ॥
गिरिं सहस्रशिरसं शेषेणासेवितं स्वयम् ।
उदयाद्रिं ततो गत्वा शृङ्गं सौमनसं ततः ॥ २२८ ॥
वालखिल्यैः परिवृतं त्रिविक्रमपदाङ्कितम् ।
विचित्य[1] निखिलं[2] सीता भवद्भिर्दृश्यतां सती ॥ २२९ ॥
अतः परमगम्यैव प्राची दिक्तिमिरावृता ।
मासः परोऽवधिः सीतान्वेषणेऽस्मिन्मयोदितः ॥ २३० ॥
शरीरपरमो दण्डस्तदतिक्रमकारिणाम् ।
इत्युक्त्वा विनतं पूर्वां विसज्य दिशमाशुकृत् ॥ २३१ ॥
सोऽब्रवीज्जाम्बवन्मुख्यान्सनीलाङ्गदवायुजान् ।
भवद्भिर्दृश्यतामाशा दक्षिणा मम दक्षिणैः ॥ २३२ ॥
नर्मदालिङ्गितो विन्ध्यस्ततो वेगवती नदी ।
कृष्णवर्णा सवरदा देविका वायुमत्यपि ॥ २३३ ॥
मेकलोत्कलिका जम्बूर्वाहिनी वेत्रवत्यपि ।
दशार्णा निषधाद्याश्च देशाः पुण्ड्रककोसलाः ॥ २३४ ॥
श्रीखण्डशैलो मलयाः कावेरीवलयोचितः ।
स पाण्ड्यविषयः श्रीमानगम्याश्रममण्डितः ॥ २३५ ॥
ततो विधातुरादेशादतरङ्गो महोदधिः ।
हेमशृङ्गस्तटे यस्य महेन्द्रः शक्रसेवितः ॥ २३६ ॥
समुद्रादुद्गतश्चान्यो गिरिश्चन्द्रार्कयोः सुहृत् ।
यस्येन्दुः सेवते शृङ्गं रौप्यं हैमं च भास्करः ॥ २३७ ॥
पारेसमुद्रं विद्युत्त्वान्विश्वकर्मकृतो गिरिः ।
उशीरभोजनामा च ततोऽद्रिः काञ्चनद्रुमः ॥ २३८ ॥

१. 'विदित्वा' ख. २. 'निखिले' शा०.

देहान्तकाले पश्यन्ति तान्वृक्षान्सर्वजन्तवः ।
पितृलोकस्ततो घोरः कान्ता यमपुरी ततः ॥ २३९ ॥
यस्यां कनकवैडूर्यस्तम्भभूरिप्रभां सभाम् ।
धर्मासनगतः श्रीमानध्यास्ते भगवान्यमः ॥ २४० ॥
महर्षेः पुण्यतपसस्तृणाङ्गेराश्रमस्ततः ।
कल्पवृक्षैः परिवृतः स्वर्गेणोपेत्य सेवितः ॥ २४१ ॥
विचित्य ज्ञायतां तूर्णं देशेष्वेतेषु मैथिली ।
अतः परमनालोकमसूर्यमजनं जगत् ॥ २४२ ॥
मासोऽस्मिन्नवधिः कार्ये वध्यो मे तद्व्यतिक्रमी ।
हनुमत्स्कन्धविन्यस्तं रामकार्यमिदं महत् ॥ २४३ ॥
ममावश्यं सफलतां यशसा सह यास्यति ।
सुग्रीवस्येति वचनं दृशैकविनिवेशितम् ॥ २४४ ॥
श्रुत्वा रामः प्रियालाभे ववन्धाशां हनूमति ।
स तस्मै निजनामाङ्कं प्रत्ययाय मृगीदृशः ॥ २४५ ॥
पिङ्गरत्नप्रभासङ्गैर्विततारा‍ङ्गुलीयकम् ।
वायुपुत्रस्तदादाय सहाङ्गदपुरःसरैः ।
प्रणम्य रामसुग्रीवौ प्रययौ दक्षिणां दिशम् ॥ २४६ ॥

इत्यङ्गुलीयकदानम् ॥ ६ ॥

ततः सुषेणं सुग्रीवः श्वशुरं सैन्यनायकम् ।
उवाचान्विष्यतामाशा सीतार्थे पश्चिमा त्वया ॥ २४७ ॥
स्वराष्ट्राभीरवाह्लिकामद्रशूर्पानकादिषु ।
पुन्नागकेतकवने शङ्खतालीवनेषु च ॥ २४८ ॥
सिन्धुकेकयकौ वीरसृञ्जयेषु महोदधौ ।
मरीचिपत्तने पुण्ये सिन्धुद्वीपे जले स्थले ॥ २४९ ॥
कन्दरासु सुमेरोश्च सिन्धुसागरसंगमे ।
शतशृङ्गे गिरौ सिंहैः सपक्षैरुत्कटैर्वृते ॥ २५० ॥

---

१. 'दृशैव विनिवेदितम्' शा०. २. 'शङ्खनाडीवनेषु च' शा०.

स्त्रीराज्ये मरुदेशेषु पुण्ये पञ्चनदे ततः ।
काश्मीरमण्डले तक्षशिलायां शाकले पुरे ॥ २५१ ॥
आरट्टबाह्लिकाम्बोजखशचीनवनेषु च ।
मणिमत्पर्वतोद्देशे पश्चिमाब्धौ तथा परे ॥ २५२ ॥
पारियात्रस्य शिखरे गन्धर्वगणदुर्जये ।
समुद्रपादसंजाते चक्रवर्त्यचलोत्तमे ॥ २५३ ॥
यत्र चक्रं सहस्रारं दृश्यते वज्रमण्डलम् ।
सहस्रावर्तकलिले यस्मिन्देशे जनार्दनः ॥ २५४ ॥
हत्वा पञ्चजनं तीव्रं हयग्रीवं च दुःसहम् ।
अवाप पाञ्चजन्याख्यं शङ्खं चक्रं च दीप्तिमत् ॥ २५५ ॥
वराहशैले विपुले तस्मिन्प्राग्ज्योतिषे पुरे ।
यस्मिन्स नरको नाम घोरो वसति दानवः ॥ २५६ ॥
ततः सहस्रधाराङ्के गिरौ हेमद्रुमेषु च ।
पर्वतानां सहस्रेषु हेमवल्लीतृणेषु च ॥ २५७ ॥
अद्रेः कनकशृङ्गस्य शेखरे भास्करप्रभे ।
रत्नप्रासादभवने वरुणेन कृतास्पदे ॥ २५८ ॥
हेमताले च विपुले शैलाभे स्कन्दशेखरे ।
अस्ताचले सहस्रांशुतापप्रोद्भूतपावके ॥ २५९ ॥
द्रष्टव्या रावणहृता भवता जनकात्मजा ।
एतावान्दृश्यते लोको निरालोकस्ततः परः ॥ २६० ॥
जानकीविचये मासः सर्वेषामवधिर्मतः ।
इत्युक्त्वा कपिभूपालः सुषेणं पश्चिमां दिशम् ॥ २६१ ॥
विसृज्याग्रे शतवलं प्रोवाच हरियूथपम् ।
उत्तरां त्वमितो गत्वा दिशं धनदपालिताम् ॥ २६२ ॥
विचित्य सानुगस्तूर्णं जानीहि जनकात्मजाम् ।
तङ्गनानृषिकान्म्लेच्छांस्तुक्खारान्रमणाञ्छकान् ॥ २६३ ॥

१. 'कानने वने' शा० शोधितः, क-पुस्तके च. २. 'नीच' ख. ३. 'तुरुष्का' शा०.

दरदाञ्शैलकुञ्जांश्च दिव्यं धाम हिमाचलम् ।
देवदारुवनोपेतं भूर्जलोध्रकुटार्चितम्[1] ॥ २६४ ॥
कालशैलं हेमगर्भं भूधरं च सुदर्शनम् ।
दिव्यं देवसमं नाम गिरिधातुरसाकरम् ॥ २६५ ॥
अतश्चाभूतसंचारं खं नदीनदवर्जितम्[2] ।
शतयोजनविस्तीर्णं संतप्तं सूर्यरश्मिभिः ॥ २६६ ॥
तदतीत्य ततश्चन्द्रसहस्रपरिपाण्डुरम् ।
चन्द्रकान्तमयोत्तुङ्गशृङ्गं स्फटिकभूधरम् ॥ २६७ ॥
पुरी यत्र कुबेरस्य निर्मिता विश्वकर्मणा ।
ततस्त्रिककुभं नाम गिरिं हेमाद्रिमानसम् ॥ २६८ ॥
नदी नागह्रदा नाम यस्मात्पुण्या परिस्रुता ।
यस्य शृङ्गत्रयं हेमवैडूर्यरजतोर्जितम् ॥ २६९ ॥
अग्नित्रयमभूदग्निहोत्रिणो विश्वकर्मणः ।
सर्वभूताहुतिस्तत्र सर्वमेधो महामखः ॥ २७० ॥
रुद्रेणाकारि येनाभूत्स भूतेशो महेश्वरः ।
यस्माच्च कुहटा नाम प्रवृत्ता पावना नदी ॥ २७१ ॥
ततः क्रौञ्चगिरिं घोरं बिलं सिद्धर्षिसेवितम् ।
सर्वस्य[3] स्वकृतं धाम मैनाकं वर्त्म[4]शेखरम् ॥ २७२ ॥
किंनरीणां निजोद्यानं पुण्यं सप्तर्षिसेवितम् ।
श्रीमान्यत्र कुबेरस्य विभवो मूर्तिमानिव ॥ २७३ ॥
गजः करेणुभिः सार्धं हेमाब्जं गाहते सरः ।
ततस्तमालतालीसलवङ्गतगरोचितम् ॥ २७४ ॥
सुदर्शना हेमनदी रुचिरं गन्धमादनम् ।
ततः कालागुरुश्यामं मन्दराद्रिं शुचिह्रदम् ॥ २७५ ॥
कालकूटामृतस्फारैर्लिप्तं मन्थोद्धृतैरिव ।
यत्र सा घृतपिण्डोदे सरसि ब्रह्मसेविते ॥ २७६ ॥

१. 'न्वितम्' ख. २. 'वन' शा०. ३. दन्त्यादिरपि शिवचाची. ४. 'रत्न' ख.

सशब्दा साट्टहासेव दिवः पतति जाह्नवी ।
नदी वैतरणी यत्र मांसपङ्कास्थिनिर्भरा ॥ २७७ ॥
रक्तोदका यक्षरक्षःसेविता केशशैवला ।
पिशाचोरगगन्धर्वशरीरशकलाकुला ॥ २७८ ॥
स मन्दरमतिक्रम्य धूमकेतुं महीधरम् ।
हैमं शरवनं यत्र कार्तिकेयस्य जन्मभूः ॥ २७९ ॥
उदीच्यां खशरा यत्र कपिला वेत्रनिम्नगा ।
शैलोदा नाम तटिनी ततो यस्यास्तटद्वये ॥ २८० ॥
वेणवः कीचका नाम व्याक्षेपैस्तारयन्ति ये ।
कुरूनथोत्तरान्दिव्यां नीलां प्राणहरां नदीम् ॥ २८१ ॥
पारे स्वर्गोपमा यस्याः समा मणिमयी मही ।
हेमपद्माश्च पद्मिन्यः कल्पवृक्षाश्च पुष्पिताः ॥ २८२ ॥
यत्र चैत्ररथाभिख्ये वने क्षीरघृतापगाः ।
दिव्यभोगाश्च ललना नित्यसौभाग्ययौवनाः ॥ २८३ ॥
गुहां गुहसहस्राढ्यां ततश्च तिमिरावतीम् ।
यस्यामप्सरसो लीना दृश्यन्ते विविधाद्भुताः ॥ २८४ ॥
तस्य देशस्य रम्यत्वाद्विस्मृतत्रिदशागमाः ।
सुरवारविलासिन्यः शप्तास्ताः शतमन्युना । २८५ ॥
अहन्यहनि नश्यन्ति प्रातः प्रातर्भवन्ति च ।
तस्यां गुहायां घोरायां वसन्ति स्मृतिवर्जिताः ॥ २८६ ॥
ततः सोमगिरिं सोमप्रभै रुद्रैः कृतास्पदम् ।
कौतुकाद्ब्रह्मभवनं शृङ्गैर्द्रष्टुमिवोद्गतम् ॥ २८७ ॥
तपोवनं मनोर्यत्र ब्रह्मसूनोः प्रजापतेः ।
शशिस्थानं ततो गत्वा सर्वकामफलप्रदम् ॥ २८८ ॥
यत्र सा राक्षसी घोरा महोलूखलमेखला ।
तं तं विचित्य देशं च ज्ञातव्या जनकात्मजा ॥ २८९ ॥

---

१. 'उदेत्य खशिरो यत्र कपिलावर्तपाथसि' शा० ख.

मासावधिव्यपगमे वध्यास्ते[1] चिरकारिणः।
इत्यादिश्योत्तरामाशां वीरं शतबलिं विभुः।
विसृज्य तूर्णमभवन्निर्वृत्तो वानरेश्वरः॥ २९०॥
इति दिग्वर्णनम्॥ ७॥
छादिताशावकाशेषु गतेषु जवशालिषु।
प्लवगेष्वथ सुग्रीवं प्रोवाच रघुनन्दनः॥ २९१॥
अतो वताखिलो लोकः कथं दृष्टस्त्वया सखे।
लोकानेतान्विजानाति सूर्यस्त्वं वा तदात्मजः॥ २९२॥
इति पृष्टो वयस्येन व्याजहार कपीश्वरः।
यदाहं वालिना भ्रात्रा वैरेणाभिसृतः पुरा॥ २९३॥
ततो मनोजवस्तूर्णं देशेष्वेतेषु विद्रुतः।
इति सुग्रीववचनं रामः श्रुत्वा प्रियोत्सुकः॥ २९४॥
यातानां कपिवीराणां दिनसंख्यापरोऽभवत्।
याते ततः शनैर्मासे विचित्य विनतः कपिः॥ २९५॥
पूर्वां दिशं जनकजामदृष्ट्वैव समाययौ।
प्रत्यागतः शतबलिस्तथैवान्विष्य चोत्तराम्॥ २९६॥
सुषेणः पश्चिमामाशामनुचित्य न्यवर्तत।
तेषु प्राप्तेष्वनालोक्य मैथिलीं रघुनन्दनः॥ २९७॥
तद्व्यावृत्तां बबन्धाशामेकीभूतां हनूमति।
अङ्गदानुगतास्तेऽपि प्लवगा हनुमन्मुखाः॥ २९८॥
रामकार्यदृढोत्साहाः प्रापुर्विन्ध्यभुवं पुनः।
दुर्गेषु गिरिजालेषु गुहासु गहनेषु च॥ २९९॥
विचित्य सीतां विविशुस्ते वनं निर्मृगद्विपम्।
निर्जने निर्द्रुमे तस्मिन्कानने विपुलं तपः॥ ३००॥
घोरो मुनिश्चचारोग्रं दण्डिनामातिकोपनः।
नष्टस्तस्मिन्वने तस्य दशवर्षः सुतः पुरा॥ ३०१॥

---

१. 'वध्या मे' ख.

तच्छापादभवत्सर्वं तन्निर्जलमृगद्रुमम् ।
कृच्छ्रेणोत्तीर्य तं देशं वनमन्यत्प्रविश्य ते ॥ २०२ ॥
ददृशुर्घोरमसुरं मारीचतनयं पुरः ।
तमुद्गतं महाकायं हन्तुकामं प्लवङ्गमान् ॥ २०३ ॥
अङ्गदस्तूर्णमाहूय जघानोरसि मुष्टिना ।
महता वज्रवेगेन बलिना वालिसूनुना ॥ २०४ ॥
पपात रुधिरोद्गारगद्गदोग्रस्वरोऽसुरः ।
तस्मिन्हते तदन्विष्य ते वनं बहुगह्वरम् ॥ २०५ ॥
उपविश्य परिश्रान्ता रामकार्यमचिन्तयन् ।
तानूचे हनुमान्वीरः कृत्स्नेयं विचिता मही ॥ २०६ ॥
न तु दृष्टा जनकजा मिथ्यैवायं परिश्रमः ।
परीक्षितानि यत्नेन द्विधा कृत्वा तृणान्यपि ॥ २०७ ॥
सीता नासादितास्माभिः संपद्भाग्यच्युतैरिव ।
क्रियते किं वृथैवायं निष्फलः कालसंक्षयः ॥ २०८ ॥
प्राणव्ययेनापि जनैरप्राप्यं प्राप्यते कुतः ।
इति वायुसुतेनोक्ते विचार्यावददङ्गदः ॥ २०९ ॥
विपुलोद्योगिनामेताः स्वाधीनाः कार्यसिद्धयः ।
उत्साहशक्तिहीनेभ्यः सिद्धोऽप्यर्थः पलाय्यते ॥ २१० ॥
अदृष्टेष्वन्यदेशेषु द्रष्टव्या जानकी पुनः ।
निष्फलागमनक्रुद्धः सुग्रीवः केन सह्यते ॥ २११ ॥
अङ्गदेनेत्यभिहिते सोत्साहाः कपियूथपाः ।
हृष्टाः सर्वे तथेत्युक्त्वा विन्ध्यमारुरुहुर्गिरिम् ॥ २१२ ॥
घने रोध्रवने तस्य सप्तच्छदवनेषु च ।
विचित्य सीतां जग्मुस्ते कन्दरासु दरेषु च ॥ २१३ ॥
ते गत्वा दूरमध्वानं श्रमतृष्णानिपीडिताः ।
तुल्यं जलं च सीतां च यत्नेन द्रष्टुमुद्यताः ॥ २१४ ॥

ततः स्निग्धद्रुमच्छन्नं गम्भीरं ददृशुर्बिलम् ।
सूचितं हंसचक्राह्वैर्निर्गच्छद्भिर्निरन्तरैः ॥ ३१५ ॥
प्रविश्य जललुब्धास्ते सुघोरतिमिरं बिलम् ।
परस्परमवष्टभ्य निःसंज्ञा योजनं ययुः ॥ ३१६ ॥
तृषार्तास्ते समासाद्य कृच्छ्रेणालोकिनीभुवम् ।
मणिहेममयं दिव्यं ददृशुर्भास्वरं पुरम् ॥ ३१७ ॥
तत्र हेमाब्जिनीरम्ये कचत्काञ्चनपादपे ।
दृष्ट्वा हेमासनासीनां तापसीं विस्मयं ययुः ॥ ३१८ ॥
कृष्णाजिनकृतासङ्गप्रोत्तुङ्गकुचकुड्मला ।
स्वमुखेन्दुप्रणयिना निशीथेनेव सेविता ॥ ३१९ ॥
रुद्राक्षमालिकाव्यग्रं बिभ्रती पाणिपङ्कजम् ।
अलिमालावलयितकल्पवल्लीव पल्लवम् ॥ ३२० ॥
लावण्यशीकरासारैर्नयनामृतवर्षिणी ।
सहसास्तंगतस्येन्दोरिव प्रव्रजिता द्युतिः ॥ ३२१ ॥
विस्मितैर्हनुमन्मुख्यैस्तद्दर्शनगतक्लमैः ।
कासि कस्येति पृष्टैव बभाषे मृदुभाषिणी ॥ ३२२ ॥
मयो मायानिधिः पूर्वं तपसा दानवेश्वरः ।
प्रजापतिवरात्प्राप सर्वमौशनसं धनम् ॥ ३२३ ॥
इह हेममयोद्यानं कृत्वा हेममयं परम् ।
व्रतैरमरतां प्राप्तुं स चिरं यत्नवानभूत् ॥ ३२४ ॥
अथाप्सरसि हेमायां प्रसक्तं रक्तमानसम् ।
निनाय नष्टनियमवश्यतां तत्पुरंदरः ॥ ३२५ ॥
हेमायाः सुरसुन्दर्यास्ततस्तुष्टः प्रजापतिः ।
इदं हेमपुरं दिव्यं प्रददौ रत्नमन्दिरम् ॥ ३२६ ॥
अहं तु मेरुसावर्णेर्मनोः पुत्री स्वयंप्रभा ।
इदं रक्ष्यामि भवनं हेमाया दयितासखी ॥ ३२७ ॥

इह मूलफलं दिव्यं भक्षयित्वा गतक्लमाः।
वदन्तु निजवृत्तान्तं भवन्तस्तत्त्वमूचितम्॥ ३२८॥
इति स्वयंप्रभावाक्यं श्रुत्वा प्लवगपुंगवाः।
भुक्त्वा पीत्वा च सुखिनः स्ववृत्तान्तं न्यवेदयन्॥ ३२९॥
ततो विस्मृतमार्गास्ते मासमात्रं बिले स्थिताः।
ययुः स्वयंप्रभादेशात्कपयो मीलितेक्षणाः॥ ३३०॥
शक्रवज्राहतिकृताद्बिलात्तस्मात्प्लवङ्गमान्।
स्वयमुत्तार्य कारुण्यात्सा स्वं प्रत्याययौ पदम्॥ ३३१॥

इति बिलप्रवेशः॥ ८॥

निजहस्ताग्रसंरुद्धलोचनास्ते विनिर्गताः।
उन्मील्य नेत्रे शनकैः समुद्रं ददृशुः पुरः॥ ३३२॥
स्फटिकस्तम्भसंभारप्रभैः कल्लोलबाहुभिः।
प्रभञ्जनसमुद्भूतैर्नभोयातमिवोद्धतम्॥ ३३३॥
तरङ्गतटसंघट्टविस्फुटैः शुक्तिसंपुटैः।
सतारकमिव व्योम हसन्तं व्यक्तमौक्तिकैः॥ ३३४॥
प्रतिबिम्बितशुभ्राभ्रव्यूहेन धवलोदरम्।
पुत्रं मैनाकमन्वेष्टुं मग्नेनेव हिमाद्रिणा॥ ३३५॥
जलद्विपकरोदीर्णशीकरासारदुर्दिनैः।
कुर्वाणमौर्वतप्तस्य निर्वापणमिवाम्भसः॥ ३३६॥
विस्फुरन्मकरस्फारस्फालितैर्वीचिसंचयैः।
दिशां दिशन्तमालोलदुगूलवलनामिव॥ ३३७॥
मुक्तांशुकुसुमैश्चित्ररत्नच्छायाग्रपल्लवैः।
तरङ्गैरुद्धतैर्व्याप्तं पारिजातशतैरिव॥ ३३८॥
आपूरितं नदीवृन्दैर्निगीर्णं वडवाग्निना।
नोत्सिक्तं न परिक्षीणमाशयं महतामिव॥ ३३९॥
सुधासहोदरैर्व्याप्तं शङ्खैः शीतांशुबान्धवैः।
यशोभिरिव रामस्य हृदयानुप्रवेशिभिः॥ ३४०॥

शूत्कारघोरनिर्घोषसलिलावर्तमण्डलैः ।
कुर्वाणमिव कल्पान्तप्रारम्भोंकारविभ्रमम् ॥ ३४१ ॥
पयोभिर्गगनालग्नैः क्षणेन श्वभ्रपातिभिः ।
संपदामिव सुव्यक्तं दर्शयन्तमनित्यताम् ॥ ३४२ ॥
लोलफेनदुकूलाभिः सकम्पैर्वीचिमारुतैः ।
तरङ्गिणीभिः प्रौढाभिर्विहितालिङ्गनोत्सवम् ॥ ३४३ ॥
स्फूर्जत्फेनानिलस्फारपरिवृत्तोदकैः क्षणम् ।
व्योमीकृतनिजाकारं सरिन्नाथीकृताम्बरम् ॥ ३४४ ॥
अपारमप्लवं सारं संसारमिव दुस्तरम् ।
अनेकाश्चर्यमालोक्य ते घोरं मकराकरम् ॥ ३४५ ॥
उपविश्यातिनिर्विण्णाः पाणिन्यस्ताननाः क्षणम् ।
न लेभिरे कपिवराश्चिन्ताब्धिपतिता धृतिम् ॥ ३४६ ॥

इति समुद्रदर्शनम् ॥ ९ ॥

तानङ्गदोऽब्रवीद्दृष्ट्वा हेमन्तं प्रत्युपस्थितम् ।
मासोऽस्माकं बिले यातः सुग्रीवेण धृतोऽवधिः ॥ ३४७ ॥
अधुना निष्फलक्लेशविनष्टोत्साहसंपदाम् ।
इहैव नस्तपो मन्ये साधुवादोचितं सताम् ॥ ३४८ ॥
इयान्क्लेशो धृतोऽस्माभिर्भर्तृपिण्डोपजीविभिः ।
संसारोच्छित्तये कस्मान्न कृतस्त्यक्तविप्लवैः ॥ ३४९ ॥
सन्तः संतोषशृङ्गस्थास्तृष्णाकल्लोलिनीजले ।
उन्मग्नांश्च निमग्नांश्च पश्यन्ति जनसंततिम् ॥ ३५० ॥
अथ वा यदि नास्त्येव विवेकः साधुसंमतः ।
तत्सुग्रीवभयं घोरं येनापैति तदुच्यताम् ॥ ३५१ ॥
स हि तीक्ष्णः प्रकृत्यैव रामेण च विवर्धितः ।
प्राणेष्वेवापराधेऽस्मिन्व्यक्तं नः प्रहरिष्यति ॥ ३५२ ॥
यौवराज्यमिदं दत्तं न तेन स्वेच्छया मम ।
किं नु रामस्य वचसा यन्त्रितेनैतदर्पितम् ॥ ३५३ ॥

अद्य लब्धान्तरः स्पष्टं लोकप्रत्ययकारिणा ।
कार्यनैष्फल्यदोषेण मय्येव प्रहरिष्यति ॥ ३५४ ॥
प्राप्यः सदा प्रणामेन प्रभुर्वक्रावलोकिताम् ।
सत्यं विभवमानोऽयमवमानशतैः समः ॥ ३५५ ॥
स जातः प्रथिता यस्य पुण्याः संतोषसंपदः ।
नान्यवक्रावलोकिन्यस्तरुण्यो वा विभूतयः ॥ ३५६ ॥
सत्सु निर्झरझङ्काररम्येषु फलशालिषु ।
वनेषु विभवोग्राणां भ्रूभङ्गः [1]सहते कथम् ॥ ३५७ ॥
धिक्सेवां क्षमतां लक्ष्मीः स्वजनेष्वयमञ्जलिः ।
स्तब्धग्रीवस्य न सहे सुग्रीवस्योत्कटं वचः ॥ ३५८ ॥
वियोगरोगैः किं भोगैः किं विप्रियमयैः प्रियैः ।
किं कान्ताभिः क्षणान्ताभिर्यदि मानोन्नतं मनः ॥ ३५९ ॥
उद्वेगमध्या दुःखान्ता विचारविरसाः सदा ।
आयान्त्य एव शोभन्ते वेश्या इव विभूतयः ॥ ३६० ॥
अधुना सर्वदुःखानां कारणं निलयं शुचः ।
शरीरं पातकमिव क्षपयाम्युचितैर्व्रतैः ॥ ३६१ ॥
इत्यङ्गदवचः श्रुत्वा वानराः साश्रुलोचनाः ।
प्रशंसन्तोऽस्य संतोषं प्रत्यभाषत चिन्तितम् ॥ ३६२ ॥
[2]उक्तं च सदृशं सत्त्वाभिमानस्य [3]त्वयोचितम् ।
श्रमे वन्ध्ये विधौ वामे वैराग्यं शोभते सताम् ॥ ३६३ ॥
युवराज तवैवासौ दोषेऽस्मिन्कपिभूपतिः ।
प्रधानदण्डकृत्सत्यं विनाशाय भविष्यति ॥ ३६४ ॥
तदैव निहतानस्मान्विद्धि सिद्धिनिराकृतान् ।
कालस्त्रिशूलं स यदा भ्रूभङ्गं दर्शयिष्यति ॥ ३६५ ॥

---

१. 'सह्यते' ख. २. 'उक्तं सत्त्वाभिमानस्य राजपुत्रद्वयोचितम्' शा० शोधितम्. ३. 'त्वयोदितम्' ख.

इति तेषां भयान्तानां वचनं वालिनन्दनः ।
श्रुत्वा जगाद युष्माभिस्त्यज्यतामेष संभ्रमः ॥ ३६६ ॥
अस्मिन्नेव बिले दुर्गे निवसामः सुसंभृताः ।
न रामः प्रभवत्यत्र न सुग्रीवो न लक्ष्मणः ॥ ३६७ ॥
अविलङ्घ्यश्च देशोऽयं बहुमूलफलोदकः ।
शक्रोऽप्यत्र जयायैति याति भग्नमनोरथः ॥ ३६८ ॥
श्रुत्वैतदङ्गदवचः शङ्कितः पवनात्मजः ।
सुग्रीवगुणरक्तेन चेतसाचिन्तयत्क्षणम् ॥ ३६९ ॥
अहो नु हारितं राज्यं सुग्रीवेण सहानुगैः ।
[आपूर्यमाणं शश्वच्च तेजोवृद्धिपराक्रमैः ॥ ३७० ॥
शशिनं शुक्लपक्षादौ वर्धमानमिव श्रिया ।
बृहस्पतिसमं बुद्ध्या विक्रमे सदृशं पितुः ॥ ३७१ ॥
शुश्रूषमाणं ताराया गुरोरिव पुरंदरम् ।
भर्तुरर्थे पराक्रान्तो युक्तः शास्त्रविशारदः ॥ ३७२ ॥
स चतुर्णामुपायानां तृतीयं मण्डदर्शनम् ।
चतुर्दशगुणैर्युक्तं वाङ्गदं प्रति वायुजः ॥ ३७३ ॥]
यस्याङ्गदोऽपि दुर्गेऽस्मिन्प्रतिपक्षदशां श्रितः ।
बुद्धिमानेष नीतिज्ञः शूरः सप्रतिभो युवा ॥ ३७४ ॥
आश्रयो गुणरत्नानां धैर्याब्धिर्वेधसा कृतः ।
चतुर्दशगुणः सूनुः शक्रपुत्रस्य वालिनः ।
कस्य शङ्कास्पदं नायं दुर्गमित्रबलोचितः ॥ ३७५ ॥
हनूमानिति संचिन्त्य तं वञ्चयितुमुद्यतः ।
ऊचे तदनुरक्तानां भेदाकृष्टिसहं वचः ॥ ३७६ ॥
वीर वानरराज्येऽस्मिन्नार्हस्त्वत्सदृशोऽस्ति कः ।

---

१. 'निवासः सन्तु संवृतः' शा०. २. कोष्टकान्तर्गताः श्लोकाः ख-पुस्तके शारदा-लिपिपूर्वपाठे च न सन्ति.

२८

वेधसा कुलशैलानां सारेणैवासि निर्मितः ॥ ३७७ ॥
विभिन्ने त्वयि सुग्रीवाद्दोलाचपलचेष्टिताः ।
न त्वदीयास्त्वदीया वा भविष्यन्ति प्लवंगमाः ॥ ३७८ ॥
सर्वस्य सर्वमप्यल्पं सर्वं स्वात्म्यं समीहते ।
न हि नाम जनः कश्चिद्विभवस्थस्य तुष्यति ॥ ३७९ ॥
स्वदेशविप्रकृष्टे च त्वयि दुर्गवनाश्रये ।
स्वपुत्रदारसोत्कण्ठास्त्यक्ष्यन्ति त्वां निजानुगाः ॥ ३८० ॥
ये स्वदेशे सदा नम्रा वाङ्मात्रेणेव सेविताः ।
रत्नभारैरपि तते विदेशे यान्ति वश्यताम् ॥ ३८१ ॥
पदस्थेनापदस्थस्य सुग्रीवेण तवाङ्गद ।
न विरोधः क्षमः सत्यं पतङ्गस्येव वह्निना ॥ ३८२ ॥
न दुर्गं बिलदुर्गं तु वज्रिवज्रावदारितम् ।
अत्र लक्ष्मणवाणानां स्वेच्छाप्रणयिनी गतिः ॥ ३८३ ॥
देशभङ्गे कुतोऽर्थस्ते हीनार्थस्य कुतोऽनुगाः ।
तृणेऽपि चलतस्त्रासो निःसहायस्य जायते ॥ ३८४ ॥
पदस्थस्यैव सुहृदः पदस्थस्यैव संश्रिताः ।
नानुयाति च्युतं मित्रे रक्तोऽपि कमलाकरः ॥ ३८५ ॥
अपुत्रश्चैव सुग्रीवस्त्वं पुत्रस्तस्य धर्मतः ।
क्रमागतं निजं राज्यं मा कृथाश्चरणाहतम् ॥ ३८६ ॥
इत्युक्तं वायुपुत्रेण प्रभुभक्तिपुरःसरम् ।
श्रुत्वाङ्गदस्तं जगाद संरम्भलुलिताङ्गदः ॥ ३८७ ॥
भ्रातुर्ज्येष्ठस्य येन प्राक्पिहितं शिलया बिलम् ।
राज्यप्रदः सुखस्थेन येन रामोऽपि न स्मृतः ॥ ३८८ ॥
कस्तस्मिन्कुटिलाचारे विश्वासं याति बुद्धिमान् ।
यो भ्रातृरुधिरादिग्धां निर्घृणः श्रियमश्नुते ॥ ३८९ ॥
मिथ्यैतदुक्तं भवता राज्यकामं न मे मनः ।

स्वस्ति तुभ्यमिहैवाहं शरीरं त्यक्तुमुद्यतः ॥ ३९० ॥
इत्युक्त्वा वालितनयः कुशानास्तीर्य संयतः ।
उपस्पृश्योदकं मौनी सानुगः समुपाविशत् ॥ ३९१ ॥
दक्षिणाग्रेषु गर्भेषु ते कृत्वोत्तरतः शिरः ।
स्थिताः सबाष्पनयनाः प्रशशंसुस्तदाङ्गदम् ॥ ३९२ ॥

इति वानरप्रायोपवेशः ॥ १० ॥

अत्रान्तरे गृध्रपतिर्विन्ध्यकन्धरनिर्गतः ।
भ्राता जटायुषो ज्येष्ठः संपातिः प्रत्यदृश्यत ॥ ३९३ ॥
स दृष्ट्वा वानरबलं प्रहृष्टः समचिन्तयत् ।
अहो नु काले दैवेन निर्दिष्टं मम भोजनम् ॥ ३९४ ॥
इत्याकलय्य शनकैस्तं देशं प्रससर्प सः ।
अङ्गदोऽपि तमायातं विलोक्योवाच वानरान् ॥ ३९५ ॥
अयं सत्यं महाकायः कालः कलि.....ताखिलः ।
संहर्तुमस्मान्संप्राप्तः काकुस्थाज्ञाव्यतिक्रमात् ॥ ३९६ ॥
कार्यं न कृतमस्माभिर्भर्तृपिण्डः कृतो वृथा ।
वृथोऽयं गर्हितः प्राप्तः कस्येदं कर्मणः फलम् ॥ ३९७ ॥
धन्यो जटायुरेवैकस्त्यक्तासुरपि जीवति ।
पुण्ये राघवकार्याग्नौ हुता येन निजा तनुः ॥ ३९८ ॥
किं वा सुकृतिनस्तस्य सुकृतं वक्ष्यते परम् ।
भाविनामपि येनोप्तं हृदये देहिनां यशः ॥ ३९९ ॥
एतदाकर्ण्य संपातिर्दुःखितो भ्रातृवत्सलः ।
उवाच केन निहतो राघवार्थे ममानुजः ॥ ४०० ॥
इत्युक्ते गृध्रराजेन तस्मै निखिलमङ्गदः ।
चरितं रघुनाथस्य वैदेहीहरणं तथा ॥ ४०१ ॥
वधं तदर्थे वीरस्य रावणेन जटायुषः ।
रामसुग्रीवयोः सख्यं दिक्षु सीतानिरीक्षणम् ॥ ४०२ ॥

न्यवेदयद्यथावृत्तं कपीनां च कृतार्थताम् ।
सर्वमाकर्ण्य संपातिस्तमूचे साश्रुलोचनः ॥ ४०३ ॥
रावणेन हतो वीरः प्रियो भ्राता ममानुजः ।
तं हन्तुमद्य शक्तोऽहं न नाम जरसार्दितः ॥ ४०४ ॥
प्रतिभाश्च प्रभावाश्च विभावाश्च शरीरिणाम् ।
कलापाकपरिम्लाना यान्त्येव स्मृतिशेषताम् ॥ ४०५ ॥
मोहः प्रज्ञाबलं हन्ति जरा पिबति यौवनम् ।
जीवितं मृत्युरादत्ते सर्वमश्नात्यनित्यता ॥ ४०६ ॥
अहं युवा जटायुश्च वृत्ते वृत्रवधे पुरा ।
स्पर्धयाभिद्रुतौ व्योम्नि मार्तण्डरथवर्त्मना ॥ ४०७ ॥
उदयाद्भास्करस्याग्रे प्रस्थितावस्तभूधरम् ।
आवामवाप्तौ मध्याह्ने व्योममध्ये महाजवौ ॥ ४०८ ॥
ततः प्रदीप्तकिरणज्वालावलयमालिनः ।
चण्डरश्मेः प्रतापेन जटायुर्विवशोऽभवत् ॥ ४०९ ॥
आच्छादितोऽथ कृपया पक्षाभ्यां स मयानुजः ।
जनस्थाने निपतितो मूर्छितः पर्वताकृतिः ॥ ४१० ॥
दृष्टाः सूत्रोपमा नद्यः शैला वल्मीकसंनिभाः ।
मेरुलक्षप्रमाणश्च मया दृष्टो दिवाकरः ॥ ४११ ॥
निर्दग्धपक्षः पतितस्ततोऽहं विन्ध्यपर्वते ।
विनष्टसंज्ञः संतप्तो मांसपिण्डोपमाकृतिः ॥ ४१२ ॥
षड्रात्रेणाथ मां किंचित्प्राप्तसंज्ञं कृपानिधिः ।
मरणे कृतसंकल्पं मुनिरूचे निशाकरः ॥ ४१३ ॥
शरीरं न त्वया त्याज्यं कृच्छ्रेऽप्यस्मिन्विहंगम ।
रामस्य चरितं श्रुत्वा पक्षौ तव भविष्यतः ॥ ४१४ ॥
बलोत्साहोपपन्नश्च भविष्यसि पुनर्युवा ।
मुनेरिति वचः श्रुत्वा स्थितोऽहं चिरमाशया ॥ ४१५ ॥

स्थितस्य मे विन्ध्यतटे साग्रं वर्षशतं ययौ[1]।
सीता हृता मया दृष्टा रावणेन विहायसा ॥ ४१६ ॥
इति गृध्रपतेर्वाक्यं श्रुत्वा सर्वे प्लवंगमाः।
तं पप्रच्छ क्व सा देशे स्थिता देवीति शंस नः ॥ ४१७ ॥
इति पृष्टः कविवरैर्भ्रातुः कृत्वाम्बुधेस्तटे।
जलक्रियां विनिःश्वस्य शोकार्तस्तानभाषत ॥ ४१८ ॥
मम निर्दग्धपक्षस्य क्षीणवृत्तेर्गतौजसः।
पुत्रः स्वपार्श्वः सततं ददात्याहृत्य भोजनम् ॥ ४१९ ॥
एकदा स दिनस्यान्ते संप्राप्तश्चिरकारिणम्।
मया क्षुत्कोपतप्तेन पृष्टो मां प्रत्यभाषत ॥ ४२० ॥
महेन्द्रस्य गिरेः शृङ्गे सर्वेषां व्योमचारिणाम्।
एकायनगतो मार्गस्तत्र दृष्टं महाद्भुतम् ॥ ४२१ ॥
अञ्जनाचलतुल्येन दशवक्त्रेण रक्षसा।
ह्रियमाणा मया दृष्टा नारी ललितलोचना ॥ ४२२ ॥
क्रोशन्ती राम रामेति लक्ष्मणेति च सस्वरम्[2]।
मुहुरालोकिता सास्त्रैः कारुण्याद्व्योमचारिभिः ॥ ४२३ ॥
तां वीक्ष्य रक्षोयुद्धाय समाभूदुद्धतं मनः।
ततोऽहं सान्त्वविनयैर्वञ्चितस्तेन मायिना ॥ ४२४ ॥
विघ्नकारणमेतन्मे जातं न क्रोद्धुमर्हसि।
इति पुत्रवचः श्रुत्वा क्रुद्धोऽहमवदं पुनः ॥ ४२५ ॥
धिक्तां न रक्षिता किं सा त्वया दशरथस्नुषा।
राजा दशरथः श्रीमान्रामलक्ष्मणयोः पिता ॥ ४२६ ॥
वीरः सुहृन्मम परं तत्सुतौ मे सुतोपमौ।
इत्युक्त्वाहं स्वतनयं चिरचिन्तापरः स्थितः ॥ ४२७ ॥
अशक्तस्तत्प्रतीकारदानशील इवाधरः।
अस्मिन्नेव क्षणे जातौ पुण्यरामकथामृतैः ॥ ४२८ ॥

---

१. 'गतं' शा०. २. 'नं' शा०.

पक्षौ ममाप्तवीर्यस्य सर्वे पश्यन्तु वानराः ।
इहस्थ एव पश्यामि लङ्कायां जनकात्मजाम् ॥ ४२९ ॥
सप्तमी गतिरस्माकं सौपर्णं च विलोचनम् ।
वयमाहारतात्पर्यात्प्रकृत्या च विहंगमाः ॥ ४३० ॥
योजनानां शतं सार्धं पश्यामस्तीक्ष्णचक्षुषा ।
पुराणोऽहं जलनिधेर्लङ्घने न तथा क्षमः ॥ ४३१ ॥
स्वस्ति वोऽस्तु व्रजाम्येष हिमवन्तमतो गिरिम् ।
तरन्तु वानराः क्षिप्रं सर्वे विक्रमशालिनः ।
समुद्रं रावणपुरीं प्रविशन्त्वनिवारिताः ॥ ४३२ ॥
श्रुत्वेति संपातिवचस्तमुवाचाथ जाम्बवान् ।
त्वमेवोपायमस्माकं चिन्तयाम्भोधिलङ्घने ॥ ४३३ ॥
रामकार्यं यथास्माकं तथा तव विशेषतः ।
तस्मात्साधो त्वमेवात्र परमं नः परायणम् ॥ ४३४ ॥
इति जाम्बवतः श्रुत्वा संपातिः पुत्रमस्मरत् ।
स्मृतः सोऽप्याययौ क्षिप्रं पक्षाक्षेपधुताम्बुधिः ॥ ४३५ ॥
ततो विदितवृत्तान्तः स पितुर्वचसा खगः ।
सपार्श्वः प्रणतः सर्वानुवाच गरुडोपमान् ॥ ४३६ ॥
युवराजोऽङ्गदः श्रीमान्मामारुह्य मनोजवम् ।
उल्लङ्घ्य जलधिं यातु लङ्कां रावणपालिताम् ॥ ४३७ ॥
इति गृध्रकुमारस्य वचः श्रुत्वा बलोर्जितम् ।
प्रत्युवाचाङ्गदो मानी पूजयित्वाथ तद्वचः ॥ ४३८ ॥
साधो कृतं त्वया सर्वं सुहृत्प्रणयशालिना ।
त्रैलोक्यलङ्घनसहाः किं तु सन्तीह वानराः ॥ ४३९ ॥
उपलब्धैव वैदेही सुहृदस्त्वत्पितुर्गिरा ।
अधुना नास्ति नः किंचिदगम्यं व्यवसायिनाम् ॥ ४४० ॥

१. 'तत्किं' ख.

इत्युक्तो वालिपुत्रेण संपातिः सह सूनुना ।
जगामाभिमतामाशां नवपक्षावृताम्बरः ॥ ४४१ ॥

इति संपातिदर्शनम् ॥ ११ ॥

ततो जलनिधेस्तीरमुपसृत्य प्लवंगमाः ।
ददृशुर्जलकल्लोलमालावलयिता दिशः ॥ ४४२ ॥
जगज्जलमयं किंस्वित्क दिशः क नभः क भूः ।
इति चिन्तयतां येषां क्षणं मोह इवाभवत् ॥ ४४३ ॥
तं दानवकुलाकीर्णं भीमनिर्घोषभीषणम् ।
ते विलोक्यैव जलधिं निद्रां निशि न लेभिरे ॥ ४४४ ॥
उपविश्य प्रभातेऽथ संक्रान्ताः स्वमरीचिभिः ।
स्फुटं [1]प्रभाते जलधां सहस्रगुणतामिव ॥ ४४५ ॥
हस्तिहस्तोपमैः शैलशृङ्गाभैर्मेघसंनिभैः ।
तरङ्गैः पूरितैर्व्योम्नि बभूवुः शिथिलोद्यमाः ॥ ४४६ ॥
तानब्रवीदङ्गदोऽब्धिसंद[2]र्भोघटिताशयान् ।
धीराणामपि कोऽयं वः संरम्भः कातरोचितः ॥ ४४७ ॥
अदृश्यः सत्त्ववसतिर्गम्भीरो विपुलाशयः ।
स्थितिमानेष जलधिर्भवद्भिरुपमीयते ॥ ४४८ ॥
अधैर्यलुप्तचित्तानां पौरुषं परिहीयते ।
लोभप्रतुष्टसत्त्वानामौचित्यं धनिनामिव ॥ ४४९ ॥
अपरिम्लानधैर्याणां पौरुषोत्साहशालिनाम् ।
अभिमानैकसाराणां किमसाध्यं महात्मनाम् ॥ ४५० ॥
लङ्घने जलधेरस्य करोतु सुदृढं मनः ।
यः स्फुटस्फाटिकगिरिस्फीते यशसि सादरः ॥ ४५१ ॥
जायते[3] कृतिनस्तस्य मतिः सागरलङ्घने ।
करिष्यति यशो यस्य सो[4]ऽतः सागरलङ्घनम् ॥ ४५२ ॥

१. 'प्रयाते जलधौ' शा०. २. 'शयः' शा०. ३. 'तां' शा०. ४. 'सतः' शा०.

प्रियं रामस्य सुहृदः सुग्रीवस्य हितं प्रभोः।
क्रियतामुचितं वीरा विचार्य बलमात्मनः॥ ४५३॥
इत्युक्ते युवराजेन गजो वानरयूथपः।
किंचिल्लज्जानतशिरा मध्ये विपुलरंहसाम्॥ ४५४॥
उवाच गन्तुं शक्तोऽहं यत्नेन दशयोजनीम्।
गवाक्षोऽप्यवदद्वारिनिधौ तद्विगुणां गतिम्॥ ४५५॥
त्रिगुणां शरभः श्रीमानृषभोऽपि चतुर्गुणाम्।
गतिं पञ्चगुणामूचे तरस्वी गन्धमादनः॥ ४५६॥
मैन्दश्च षड्गुणां सप्तगुणां च द्विविधो बली।
उवाचाष्टगुणां वीरः सुषेणः सागरे गतिम्॥ ४५७॥
ततः पितामहसुतः श्रुतेन यशसा धिया।
वृद्धः प्रवृद्धचरितः शनैः प्रोवाच जाम्बवान्॥ ४५८॥
अस्माकमप्यभूत्पूर्वं स कश्चिद्गतिविक्रमः।
वयमद्य जराजीर्णाः शीर्णतारुण्यविभ्रमाः॥ ४५९॥
इयं यौवनपद्मस्य दुःसहा तुहिनाहतिः।
जराबलद्विपेन्द्रस्य कालसिंहनखावली॥ ४६०॥
वशीकृतं करोत्येव हीनोत्साहबलप्रभम्।
वृद्धं नारीव सुप्रौढा जरा तारुण्यतस्करी॥ ४६१॥
स्मराम्यवाहनं देवमजाते गरुडे हरिम्।
अचन्द्रचूडमीशानमवृतेऽमृतमन्यते॥ ४६२॥
मया दृष्टाः सुबहुशो देवासुररणोत्सवाः।
येषु बन्दीकृताः शूरैस्त्रैलोक्यविजयश्रियः॥ ४६३॥
वृद्धोऽप्यद्याम्बुधौ गन्तुं शक्तः शिथिलविग्रहः।
दशोनं वा नवोनं वा योजनानामहं शतम्॥ ४६४॥
सदा समस्तभावानां काले संकोचकारिणि।
ह्यो वृत्तमद्य कथितं सत्यं न मन्यते जनः॥ ४६५॥

---

१. 'यं' शा०. २. 'बहवो' शा०.

अतीतचरिते वृद्धे विपुलं वक्तुमुद्यते।
हसन्ति यदि नो बालास्तदिदं श्रूयते मम॥ ४६६॥
त्रिसप्तकृत्वः पृथिवी बलियज्ञे मया पुरा।
प्रदक्षिणीकृता विष्णोस्त्रैलोक्याक्रमणे क्षणात्॥ ४६७॥
अस्ताचलमहं गत्वा मुहूर्तेनोदयाचलात्।
गन्धर्वकिंनरैर्जुष्टं प्रयातः स्फटिकाचलम्॥ ४६८॥
अद्य प्रवयसः शक्तिः स्फीता मम न तादृशी।
कालशक्तिर्हि भावानां प्रत्यग्ररसपायिनी॥ ४६९॥
इति जाम्बवतः श्रुत्वा नरः प्रोवाच वानरः।
योजनानां शतमहं प्रयामि रहितं त्रिभिः॥ ४७०॥
एवं तत्र ब्रुवाणेषु प्लवंगेष्वङ्गदान्तिके।
नोवाच हनुमान्किंचिद्धैर्यगम्भीरसागरः॥ ४७१॥
अथाङ्गदोऽवदत्क्षिप्रं विचार्य मकराकरम्।
तरामि योजनशतं महाब्धिं नात्र संशयः॥ ४७२॥
किं तु जाने भवत्येव प्रत्यावृत्तौ मम[1] श्रमः।
तथापि रामकार्येऽस्मिन्गणयामि न जीवितम्॥ ४७३॥
निःसंशयो वधस्तावत्सुग्रीवादफलागमे।
ससंशयोऽब्धितरणे वरस्तस्मादसंशयः॥ ४७४॥
अङ्गदेनेत्यभिहिते पुनः प्रोवाच जाम्बवान्।
प्रेष्येष्वस्मासु जीवत्सु स्वयं याति कथं प्रभुः॥ ४७५॥
त्वं मूलं कार्यवृक्षस्य वयं पुष्पफलोपमाः।
गतं मूलं भवत्येव सर्वं मूले सुरक्षिते॥ ४७६॥
जानाम्यहं महासत्त्वं सागरं यस्तरिष्यति।
इह स्थितोऽपि न ज्ञातो ह्यस्माभिर्मोहितैरिव[2]॥ ४७७॥
दूरस्थो ज्ञायते सर्वः पर्वते ज्वलनादिवत्।
चूडामणिः शिरस्थोऽपि दृश्यते न स्वचक्षुषा॥ ४७८॥

१. 'समः' शा०. २. 'यो' शा०.

प्रभञ्जनसुतः श्रीमानेष प्लवगपुंगवः।
तरस्वी हनुमान्वीरः शक्तः सागरलङ्घने॥ ४७९॥
ऐश्वर्यमन्दिरस्तम्भः सुग्रीवस्यायमुन्नतः।
रामकार्ये व्रजत्यस्मिन्विजयध्वजतां पुरः॥ ४८०॥
हनूमत्कार्यकालेऽस्मिन्किमस्मान्नाभिभाषसे।
स्कन्धात्तकार्यभारो वा नूनं मौनी महाजनः॥ ४८१॥
गुणैस्त्वं सर्वभूतेभ्यो वरो रत्नैरिवाम्बुधिः।
बलं ते भुजयोर्भूरि गरुडस्येव पक्षयोः॥ ४८२॥
शापात्पुराप्सराः कान्ता विद्याख्या मुंक्तिकास्थला।
वानर्यभूदञ्जनाख्या पत्नी केसरिणः कपेः॥ ४८३॥
सा स्वेच्छारूपिणी दिव्यं रूपं कृत्वा गिरेस्तटे।
विचचाराम्बुदश्यामे काले कुवलयेक्षणा॥ ४८४॥
मञ्जर्या इव किंजल्कपटलं पीतमंशुकम्।
दृष्ट्वा····दूरुजघने जहारास्या प्रभञ्जनः॥ ४८५॥
कम्पमानस्ततो वायुस्तां परिष्वज्य मूर्छितः।
एकपत्नीव्रतक्रुद्धामुवाच रचिताञ्जलिः॥ ४८६॥
न मया दूषिता सुभ्रु त्वं भुक्ता मनसैव तु।
त्रैलोक्यविश्रुतगुणस्तनयस्ते भविष्यति॥ ४८७॥
पवनेनेति कथिते जातस्त्वं तेजसां निधिः।
वायुतुल्यगतिः श्रीमान्क्षेत्रे केसरिणः सुतः॥ ४८८॥
उदितं रविमादातुं फललोभात्ततो भवान्।
दिवमुत्पतितो बाल्यात्प्राग्योजनशतत्रयम्॥ ४८९॥
पतितस्याथ शैलाग्राद्वामो हनुरभज्यत।
तव येनासि लोकेषु विख्यातो हनुमानिति॥ ४९०॥
स त्वमेको महत्यस्मिन्कार्यारम्भे कृतक्षणः।
दातुमर्हसि नः पुंण्यां यशोरक्षणदक्षिणाम्॥ ४९१॥

१. 'पुंजठा' शा०. २. 'पुण्ययशो' शा०.

पूर्वपुण्यफले[1] जन्म कर्म स्फीतयशः फलम्।
सुहृत्प्रीतिफला सिद्धिस्त्वद्विधानां महात्मनाम्॥ ४९२॥
उत्तिष्ठ कुरु साहाय्यं रामस्य यशसां निधेः।
महतामेव कार्याणां सिद्ध्यै जन्म भवादृशाम्॥ ४९३॥
इति जाम्बवतो वाक्यमाकर्ण्य पवनात्मजः।
व्यवर्धत महोत्साहश्चन्द्रोदय इवाम्बुधिः॥ ४९४॥
स समुद्धूय लाङ्गूलं जृम्भा रम्भा यताननः।
स्फुरत्स्फारांशुजालस्य बभारांशुमतः श्रियम्[2]॥ ४९५॥
सोऽब्रवीद्दृष्टदंष्ट्रांशुमालां गगनगामिनीम्[3]।
कुर्वन्मनोरथस्येव लङ्कागमनवर्तिनीम्॥ ४९६॥
एष व्यसनविस्फारं तरामि मकराकरम्।
रामकार्यपवित्रं च करोमि भवतां वचः॥ ४९७॥
उत्पाट्याविकटाट्टालमालिनीमवटे बलात्।
क्षिपामि लङ्कामातङ्कां[4] शङ्काकुलितरक्षसाम्॥ ४९८॥
शतकृत्वः समुल्लङ्घ्य महीं सगिरिसागराम्।
अविश्रान्तः करोम्येव जगत्प्रथमराक्षसम्॥ ४९९॥
तीर्थे पुरा प्रभासाख्ये गजो विजितदिग्गजः।
चचार शङ्खधवलो नाम तापसकण्टकः॥ ५००॥
मुनीनां हितकामेन पुरा दर्पासहिष्णुना।
मम केसरिणा पित्रा स हतो वायुकुञ्जरः[5]॥ ५०१॥
ततस्तस्य भरद्वाजो ददौ मुनिवरो वरम्।
मारुतस्य प्रभावेण तनयस्ते भविष्यति॥ ५०२॥
सोऽहं मुनिवराज्जातः पितुस्तुल्यपराक्रमः।
त्रैलोक्यलङ्घने शक्तः कियानेष महोदधिः॥ ५०३॥

---

१. 'फलं' शा०. २. 'प्रभाम्' शा०. ३. 'संगि' शा०. ४. 'आतङ्कशङ्का.'
५. 'व्याल' शा०.

न ममोत्पततो वेगात्सहते पादयोर्भरम् ।
गगनाक्रान्तियोगेन बलेनापीडिता मही ॥ ५०४ ॥
महेन्द्रगिरिमारुह्य लङ्घयामि महोदधिम् ।
एष मे सहते वेगं निकारमिव सज्जनः ॥ ५०५ ॥
इत्युक्त्वा सहितः सर्वैर्वानरैर्वालिनन्दनः ।
आरुरोह महेन्द्राद्रिं मूर्तं सारमिवात्मनः ॥ ५०६ ॥
पीताब्धिसलिलैर्मेघैर्द्विपैश्च मदमन्थरैः ।
व्याप्तं दिव्यद्रुमाकीर्णं शिखरोल्लिखिताम्बरम् ॥ ५०७ ॥
सिद्धकिंनरगन्धर्वललनाचरणाङ्कितम् ।
प्रहृष्टमिव शष्पाग्रजातरोमाञ्चकञ्चुकम् ॥ ५०८ ॥
उच्चैस्तटमहासानुः स्कन्धोरुशिखरः कपिः ।
स बभौ शैलशिखरे द्वितीय इव भूधरः ॥ ५०९ ॥
आलोकयन्तमखिलं जलधिं लङ्घनोद्यतम् ।
तं द्रष्टुमाययुर्देवाः सह सिद्धर्षिचारणैः ॥ ५१० ॥
क्रामतस्तस्य स गिरिश्चरणाभ्यां निपीडितः ।
ननाम धातुसलिलं भूरिरक्तमिवोद्वमन् ॥ ५११ ॥
शिलानिपीडितव्यालविषोल्कानलमालितः ।
शान्तिं स लेभे भग्नोरुचन्दनप्रस्रवाम्बुभिः ॥ ५१२ ॥
तरवः फुल्लशबलाः शिलाश्च समनःशिलाः ।
निपेतुः सागरे स्फारजलस्फालवृताम्बराः ॥ ५१३ ॥
मूलाद्विचलिते तस्मिन्गिरौ सागरवासिनः ।
बभूवुर्वृद्धमकरा मथनायासशङ्किनः ॥ ५१४ ॥
एकेन पीडितः प्रौढः कपिनाश्चर्यकारिणा ।
याच्ञयैव महासत्त्वो गिरिर्वामनतां ययौ ॥ ५१५ ॥

---

१. 'भृता' शा०. २. 'गामि' शा०. ३. 'तः' शा०. ४. 'वले' शा०. ५. 'प्रौढं' शा०. ६. 'कपेरा' शा०. ७. 'णः' शा०. ८. 'याच्ञयै' शा०.

गुहागृहेषु दैत्यानामायुधन्यस्तचक्षुषाम्।
स जगाम गिरिक्षोभः प्रियासंभोगविघ्नताम् ॥ ५१६ ॥
त्रासात्समुत्पतन्तीनां विद्याधरमृगीदृशाम्।
रशनानूपुरारावैर्बभूव मुखरं नभः ॥ ५१७ ॥
ततः प्रणम्यः शक्रार्कविष्णुरुद्रचतुर्मुखान्।
सानुजं मनसा रामं सागरं चोत्पपात सः ॥ ५१८ ॥
ससूर्याय महेन्द्राय पवनाय स्वयंभुवे।
भूतेभ्यः स नमस्कारं चकार हरिपुंगवः ॥ ५१९ ॥
प्राञ्जलिः प्राङ्मुखं कृत्वा सगणायात्मयोनये।
मनसावन्द्य रामं च लक्ष्मणं च महारथम् ॥ ५२० ॥
सागरं सरितश्चैव प्रणम्य शिरसा कपिः।
ज्ञातींस्तान्संपरिष्वज्य कृत्वा चापि प्रदक्षिणम् ॥ ५२१ ॥
स तस्य शिखराग्रस्थस्थले नागवरायुते।
तिष्ठन्कपिवरस्तस्मिन्द्वितीयोऽर्क इवावभौ। ५२२ ॥
लाङ्गूलच्छद्मना चास्य समुद्धूतो जयध्वजः।
रराजौर्वपरिक्षिप्तो मन्दरस्येव वासुकिः ॥ ५२३ ॥
निस्त्रिंशनीलमाकाशं समाविश्य महाजवः।
ऊरुवातैः[1] स विदधे महाब्धेर्विशरारुताम् ॥ ५२४ ॥
विबभौ तेजसा तस्य स्फारेण कपिलं नभः।
और्वानलशिखोद्गारघोरं रूपमिवाम्बुधेः ॥ ५२५ ॥
तं कीर्णकुसुमाः क्षिप्रमनुजग्मुर्महीरुहाः।
गुणानुरक्ताः सुहृदः प्रियं जनमिवाध्वनि ॥ ५२६ ॥
स प्राज्य भुजपक्ष्मभ्यां गाहमानः खमां[2] बभौ।
सुपर्ण इव विक्रान्तः पीयूषहरणोद्यतः ॥ ५२७ ॥
तस्य कक्षोरुपवनोद्धूतैर्घनघनारवैः।
बभूव सर्वभूतानामकालप्रलयभ्रमः ॥ ५२८ ॥

१. 'वातेन' शा०. २. 'क्षमां' शा०.

खे स्वयं छाययाम्भोधौ[1] लाङ्गूलेन महीय[2]सा ।
[3]ययौ त्रिभिरिवाकारैस्त्रैलोक्ये विश्रुतः कपिः ॥ ५२९ ॥
वेगदीर्घीकृतेनास्य लाङ्गूलेन महीयसा ।
नभः प्रभाभरोद्भासि [4]सीमातीतमिवाभवत् ॥ ५३० ॥
पिबन्निव नभः कृत्स्नमालिङ्गन्निव दिग्वधूः ।
वर्त्म क्षिपन्निवातीतं स ययौ विधुताम्बुधिः ॥ ५३१ ॥
त्रिंशद्योजनदीर्घास्य दशयोजनवर्तुला ।
छाया चकार जलधौ संसर्पिजलदभ्रमम् ॥ ५३२ ॥
पवनाकुञ्चितप्रान्तशुभ्राभ्रवलयः क्षणम् ।
प्रययौ स्कन्धयोस्तस्य स्फारकेसरमा[5]रुतः ॥ ५३३ ॥
ज्ञात्वा सागरवंशस्य दूतं रामस्य सागरः ।
तं गन्तुं चोद्यतं दूरं तद्विश्रान्तिमचिन्तयत् ॥ ५३४ ॥
हिरण्यनाभं मैनाकं सुतं गौरीगुरोर्गिरेः ।
स समेत्य जगादाशु सलिलान्तरवर्तिनम् ॥ ५३५ ॥
पातालवासिनां रन्ध्रं पिधातुमिह वज्रिणा ।
न्यस्तस्त्वं दैत्यसंघानां कामरूपी बलोचितः ॥ ५३६ ॥
हनुमान्रामकार्यार्थं प्रयात्याशु विहायसा ।
शिखराण्यस्य विश्रान्त्यै त्वं दर्शयितुमर्हसि ॥ ५३७ ॥
इत्यम्बुधिगिरा क्षिप्रं हेमरत्नमयो गिरिः ।
उदयौ काञ्चनच्छायं यत्प्रभाभिरभून्नभः ॥ ५३८ ॥
तं दृष्ट्वा हेमशिखरं विघ्नं मत्वा कपीश्वरः ।
उरःपवनवेगेन विदधे खर्वशेखरम् ॥ ५३९ ॥
तस्यातिमात्रमालोक्य वेगं पुलकितो गिरिः ।
दिव्यदेहस्तमवदद्गिरवोच्चैर्मुदा [6]मुहुः ॥ ५४० ॥

---

१. 'प्रतिबिम्बेन चान्तरे' शा०. २. 'तले' शा०. ३. 'स ययौ त्रिभिराकारैः' शा०. ४. 'सीमन्तित' शा०. ५. 'वारतां' शा०. ६. 'न्वितः' शा०.

सागरस्तव विश्रान्त्यै सगरान्वयगौरवः।
मां विसृज्य प्रियातिथ्यसफलां प्रीतिमिच्छति ॥ ५४१ ॥
महीधराणां पक्षेषु पुरा कृत्तेषु वज्रिणा।
इह क्षिप्तः सपक्षोऽहं त्वत्पित्रा मातरिश्वना ॥ ५४२ ॥
स त्वं कृतोपकारस्य तनयस्तस्य तत्समः।
स्थातुमर्हसि मे मूर्ध्नि प्रणयाच्च महोदधेः ॥ ५४३ ॥
इत्युक्तः शैलराजेन हनूमान्प्रत्यभाषत।
गृहीतैव मया पूजा भवतः सागरस्य च ॥ ५४४ ॥
किं त्वविश्रान्त एवायं मम मार्गः प्रतिज्ञया।
न चास्ति मे क्रमः कश्चिन्मिथ्या कालात्ययेन किम् ॥५४५॥
इत्युक्त्वा मेनकं[1] तूर्णं मानिनां प्रवरः कपिः।
अङ्गुल्यग्रेण तं स्पृष्ट्वा जगाम पवनोपमः ॥ ५४६ ॥
तत्कर्मतुष्टः शक्रोऽपि मैनाकस्य वरं ददौ।
येन वज्रभयं घोरं स तत्याज चिरार्जितम् ॥ ५४७ ॥

इति मैनाकदर्शनम् ॥ १२ ॥

अत्रान्तरे सत्त्वसारं बलं ज्ञातुं हनूमतः।
देवैर्विसृष्टा सुरसा नागमाता समाययौ ॥ ५४८ ॥
सा कृत्वा राक्षसं रूपं विकृतं भयदं महत्।
विवृत्य वक्त्रमवदद्दिष्ट्या पश्यामि भोजनम् ॥ ५४९ ॥
तामूचे हनुमान्प्रीत्या रामकार्ये कृते पुनः।
सर्वथा स्वयमभ्येत्य यास्यामि तव भक्ष्यताम् ॥ ५५० ॥
साब्रवीत्पाणिपतितं न त्यजामि प्लवंगम।
अभीष्टं लभ्यते दैवात्त्यक्तं न पुनरेति तत् ॥ ५५१ ॥
अवाप्तमपि संत्यज्य यस्तत्प्राप्तिं प्रतीक्षते।
स कालवञ्चितो मूढः पुनस्तस्य न भाजनम् ॥ ५५२ ॥

---

१. 'मानकृत्' शा०.

एतदाकर्ण्य हनुमानुवाच विपुलाकृतिः।
विग्रहस्यास्य मे ग्रासरंक्ष्यं प्रकटयाननम् ॥ ५५३ ॥
इत्युक्ता तेन सा वक्त्रं चकार दशयोजनम्।
कपिर्बभूव तत्तुल्यः सा चक्रे द्विगुणं मुखम् ॥ ५५४ ॥
हरिः सप्तगुणश्चासीत्साभूदष्टगुणानना।
तस्मिन्नष्टगुणाकारे सा चक्रे शतयोजनम् ॥ ५५५ ॥
वक्त्रं विनिर्गतजलं द्वितीयमिव सागरम्।
तद्दृष्ट्वाङ्गुष्ठमात्रोऽभूत्क्षणेन पवनात्मजः ॥ ५५६ ॥
स प्रविश्याननं तस्या निर्गत्य च मनोजवः।
तामूचे त्वद्वचः सत्यं दाक्षायणि कृतं मया ॥ ५५७ ॥
इत्युक्त्वा स ययौ क्षिप्रं राहुमुक्त इवोडुपः।
वन्दितस्त्रिजगद्वन्द्यैः पुरंदरवरैः सुरैः ॥ ५५८ ॥
स वभौ[2] स्वर्गमार्गेण विमानध्वजहासिना।
प्रसर्पन्[3] हव्यमादाय सुरार्थमिव पावकः ॥ ५५९ ॥

इति सुरसादर्शनम् ॥ १३ ॥

अस्मिन्नवसरे राहुजननी सिंहिकाभिधा।
चक्रे छायाग्रहं घोरा व्यावृतस्य हनूमतः ॥ ५६० ॥
संनिरुद्धस्तया वीरः सहसा स्तब्धविग्रहः।
तां ददर्शोग्रपातालविशालवदनां पुरः ॥ ५६१ ॥
विलोक्य वर्धमानां तां पुनः संक्षिप्य विग्रहम्।
विवेश वदनं तस्याश्चण्डांशुरिव विग्रहम् ॥ ५६२ ॥
वज्रवेगो निपात्यासौ कृत्तमूलनिबन्धनम्।
हृत्पद्ममुज्जघानास्याः स्फुरन्नखर्धिसाङ्कुरम् ॥ ५६३ ॥
सा पपात हता तेन विधूतमकराकरा।
नासास्यश्रोत्रविवरप्रसरद्रक्तनिर्झरा ॥ ५६४ ॥

इति सिंहिकावधः ॥ १४ ॥

---

१. 'क्षमं' शा०. २. 'गच्छत्स्व' शा०. ३. 'विरेजे' शा०.

तस्मिन्नत्यद्भुते भूते हते तत्र हनूमता।
मुमुचुः पुष्पनिकरं सुरसिद्धर्षिकिंनराः॥ ५६५॥
स व्रजन्स्वप्रतापाग्नितप्तानां ककुभामिव।
लाङ्गूलेनाञ्चता चक्रे वीजनव्यजनभ्रमम्॥ ५६६॥
क्षणं गात्रानिलैस्तस्य चक्रिरे तरलीकृताः।
दंष्ट्रांशुनखशाखासु तारा कुसुमविभ्रमम्॥ ५६७॥
व्योम्नि व्रजन्स विदधे विबुधावनीषु
नानाविमानवनकेतुदुकूलपालीम्।
ऊरुप्रबन्धपृथुवेगविनिर्गतोग्र-
वातैः प्रचण्डतरताण्डवकेलिलीलाम्॥ ५६८॥
मूर्ध्नि च्छत्राभिरामैः श्वसनविवलितैः पार्श्वयोश्चामराभैः
कण्ठे मालायमानैरुरसि तनुतरैरुत्तरीयानुकारैः।
पृष्ठे लाङ्गूललीलावलनपरिचितैः स्कन्धयोः केसराभैः
शुभ्रैरभ्रैरदभ्रैः किमपि कपिपतिर्वेगगामी रराज॥ ५६९॥
वेगस्पृष्टेन धृत्वा गगनजलनिधौ सेतुबन्धानुकारं
दत्त्वा स्फारे मुहूर्तं दिनकरकमले नाललीलाविलासम्।
लाङ्गूलेनाशु कृत्वा दिशि दिशि स मुहुर्मानदण्डाभियोगं
लङ्कातङ्काभिशङ्काप्रथमपरिचयं केतुनेवादिदेश॥ ५७०॥
अथ तरलतमालोत्तालतालीप्रियालां
प्रबलसरलसालोद्दालतालप्रवालाम्।
अगुरुतगरगौरस्फारकर्पूरसारा-
मविरलवनमालां सोऽब्धिकूले ददर्श॥ ५७१॥
अलङ्घ्यमुलङ्घ्य महाम्बुराशिं प्रभावतुल्यं दशकंधरस्य।
तले प्रलम्बास्यगिरेर्विशाले जलप्रलम्बाम्बुदवत्पपात॥ ५७२॥
किंस्विन्मुक्तावसाने जलनिधिमथनान्निर्गतो मन्दराद्रि-
र्मैनाकः किं विशङ्कः सुरसमरजये किं सुपर्णः सुधार्थी।

---

१. 'तटे' शा०.

चिन्तानिस्पन्दनेत्रैरिति सुररमणीमण्डलैरीक्ष्यमाणः
सोऽभूदल्पप्रमाणः सपदि रघुपतेर्वाञ्छितावाप्तिसिद्ध्यै ॥५७३॥

इति सागरलङ्घनम् ॥ १५ ॥

इति क्षेमेन्द्रविरचिते रामायणकथासारे किष्किन्धाकाण्डः समाप्तः ।

---

अथ सुन्दरकाण्डम् ।

जितं भगवता तेन हरिणा लोकधारिणा ।
अजेन विश्वरूपेण निर्गुणेन गुणात्मना ॥ १ ॥
पौलस्त्यदर्पविपुलं विलङ्घ्य जलधिं कपिः ।
विस्मयानन्दनिस्पन्दां विदधे विबुधावलीम् ॥ २ ॥
तमालतालतालीसहिन्तालल्वलीवनैः ।
तगरागुरुपुंनागलवङ्गगहनैर्व्रजन् ॥ ३ ॥
स हेमवप्रजच्छन्नां रत्नद्युतिदुकूलिनीम् ।
लङ्कामङ्के त्रिकूटस्य ददर्श दयितामिव ॥ ४ ॥
स संक्षिप्य वपुः क्षिप्रं महोत्सवमिवाधनः ।
निपपाताशु लङ्कायां चोत्तरद्वारशेखरे ॥ ५ ॥
ततः क्षपाचरपुरीरत्नमन्दिररश्मिभिः ।
तिरस्कृत इवासक्तं जगामास्तं दिवाकरः ॥ ६ ॥
अथाययौ तमःस्तोकमयूरच्छदभूषणा ।
तारकामौक्तिकस्मेरा शर्वरी शर्वरीशनैः ॥ ७ ॥
कण्ठेषु नीलकण्ठानां गण्डेषु मददन्तिनाम् ।
तमः प्रगल्भतां लेभे कुन्तलेषु च योषिताम् ॥ ८ ॥
यामिनी कामिनीस्निग्धस्नानधौतकचत्विषि ।
वभार तिमिरस्फारे तारा कुसुमसंक्षयम् ॥ ९ ॥
गवाक्षजातावदनैरिन्द्रनीलगृहैर्मुहुः ।
पीतो गीर्णमिवासक्तं ससर्प विपुलं तमः ॥ १० ॥

---

१. 'च' शा०. २. 'ल' शा०.

दिव्यरत्नमयी लङ्का दीप्रदीप्तांशुभिर्बभौ ।
नभःप्लवनभीत्येव बद्धा कनकशङ्कुभिः ॥ ११ ॥
रराज रजनीराजपुत्रीदीपावलीवृता ।
बिभ्राणा चर्मकमयीं कलिकामालिकामिव ॥ १२ ॥
दीपांशुशबलैर्लङ्का नीलरत्नगृहैर्बभौ ।
बभ्रुभ्रूश्मश्रुभिर्व्याप्ता परैरिव निशाचरैः ॥ १३ ॥
अथोद्ययौ निशाकान्तः शिवचूडामणिः शशी ।
दिग्वधूमण्डनकलाविलासमणिदर्पणः ॥ १४ ॥
लेभे स्फटिकहर्म्येषु क्रान्तस्तरलकान्तिषु ।
विधुः सुधाब्धिकल्लोलदोलाकेलिसुखं पुनः ॥ १५ ॥
रेजुर्मनोजविजयध्वजचामरचारवः ।
तुषारहारकर्पूरतारास्तारापतेः कराः ॥ १६ ॥
हरक्रुष्टे स्मरे चन्द्रे सलिले लाञ्छनच्छलात् ।
पतिते विबभुः कीर्णाः शीकरा इव तारकाः ॥ १७ ॥
स्मरस्मेरातपत्रेण रजनीस्मितकान्तिना ।
व्योममानसहंसेन शुशुभे शशिना निशा ॥ १८ ॥
चन्द्रोदयप्रहृष्टानां निशाचरमृगीदृशाम् ।
बभूव वदनैर्व्याप्ता लङ्का शशिशतैरिव ॥ १९ ॥
ज्योत्स्नानवसुधापानसमुद्भूतो महोदधिः ।
बभौ क्षिप्तपरावृत्तः स्फीतफेनसितांशुकः ॥ २० ॥
हेमप्राकारजघने लङ्कायाः क्षुभितोऽम्बुधिः ।
परिखामेखलाकृष्टिं वीचिहस्तैरिवाकरोत् ॥ २१ ॥
बद्धकोशेषु मधुपाः कमलेषु न लेभिरे ।
हृदयेषु गुणज्ञानां दोषलेशा इवान्तरम् ॥ २२ ॥
विकासविपदे[3] ज्योत्स्नां प्रासादाभिमुखी शनैः ।
इन्दोः कुमुद्वतीं चक्रुः प्रेमदूता इवांशवः ॥ २३ ॥

---

१. 'चम्पक' शा०. २. 'पुरा' शा०. ३. 'दोद्द्योतां' शा०.

ववुश्चन्द्रकरस्मेराः कुमुदामोदमन्थराः ।
सुदृशां सुरतक्लान्तिं विच्छेदसुहृदोऽनिलाः ॥ २४ ॥
कान्ता कान्ताङ्कपर्यङ्के ज्योत्स्नास्वच्छोत्तरच्छदे ।
बभुर्मधुनलीमत्ता मूर्ता इव रतिश्रियः ॥ २५ ॥
स्फुटस्फटिकसौधेषु स्फीतचन्द्रांशुहारिषु ।
बभुः कान्ताः सुधासिन्धुतरङ्गान्तर्गता इव ॥ २६ ॥
प्रक्षालित इव क्षीरैः कर्पूरैरिव पूरिते ।
जगति ज्योत्स्नया जाते घटिते स्फटिकैरिव ॥ २७ ॥
उत्प्लुत्य लघुसंचारः सौधप्राकारशेखरैः ।
रक्षसां सुखसुप्तानां भवनान्यविशत्कपिः ॥ २८ ॥
मणिवेश्मप्रहस्तस्य महापार्श्वस्य वादिनः ।
विभीषणस्येन्द्रजितः कुम्भकर्णस्य मालिनः ॥ २९ ॥
वक्रस्य वज्रदंष्ट्रस्य धूम्राक्षस्य शठस्य च ।
विद्युज्जिह्वस्य भीमस्य संपातेर्जम्बुमालिनः ॥ ३० ॥
विकटस्य सुदंष्ट्रस्य सारणस्य शुकस्य च ।
विरूपाक्षस्य मत्तस्य घसस्य प्रघसस्य च ॥ ३१ ॥
महोदरमहाकायविद्युन्मालिसुमालिनाम् ।
प्रविश्यापश्यदुद्यानसक्तकान्तामधूत्सवम् ॥ ३२ ॥
सुगन्धिश्वासलोलोर्मिदोलारूढचलोत्पलम् ।
मधुप्रियार्पितं रामा मूर्तं रागमिवाययुः ॥ ३३ ॥
प्रियासमागमः सारः सत्यं विभवसंपदाम् ।
दयितासंगमस्यापि जीवतां पानकेलयः ॥ ३४ ॥
हर्म्यं चन्द्रोदयः कान्तामधुगीतं सुहृत्कथः ।
एतास्ताः पूर्वपुण्यानां स्फीताः फलसमृद्धयः ॥ ३५ ॥
रागो लीला च सुदृशां लावण्यं नवयौवनम् ।
जैत्रमस्त्रं सरस्यैतन्मदेनास्फुरितं यदि ॥ ३६ ॥

१. 'मदा लीना' ग्रा०. २. 'पुण्यपूर्णानां' ग्रा०.

लोलाक्षस्खलितालापं सुगन्धिमधुपाटलम् ।
धन्यास्ते पद्मवदना वदनाब्जं पिबन्ति ये ॥ ३७ ॥
नमो मदाय महते स्वस्ति रागाय रागिणाम् ।
मानिनी यत्प्रसादेन स्वयं कण्ठावलम्बिनी ॥ ३८ ॥
इति स्मरानुकूलाभिः कथाभिः सहते मधु ।
वधूबिम्बाधरासङ्गलग्नरागमिवापपुः ॥ ३९ ॥
प्रागल्भ्यशिक्षागुरुणा विश्वाससुहृदो बभुः ।
सुरतारम्भदूतेन मदेन मदिरेक्षणः ॥ ४० ॥
पूर्वं दृशि ततश्चित्ते कपोलयुगले ततः ।
प्रौढतां प्रययौ रागः प्रमदानां महोत्सवे ॥ ४१ ॥
मधुस्रस्तांशुकं तासां वपुर्दृष्ट्वैव कामिनाम् ।
पदे पदे धृतिच्छेदं खलप्रीतिरिवाययौ ॥ ४२ ॥
भेजिरे वल्लभोत्सङ्गं प्रेमकोपेऽपि ताः स्वयम् ।
न नाम सहते मानं मदश्चपलचक्षुषाम् ॥ ४३ ॥
रतस्यायं न मानस्य कालः कमललोचने ।
इतीवासां प्रियाकृष्टा जगुर्मुखरमेखलाः ॥ ४४ ॥
कृतास्पदे हृदि मुदा मदेन मदनेन च ।
प्रियापराधाः सुदृशामवकाशं न लेभिरे ॥ ४५ ॥
यदुत्सक्ताः समुत्सृष्टा लज्जाविनयवर्जिताः ।
मुग्धानामभयं चेष्टाः सा मदस्य प्रगल्भता ॥ ४६ ॥
शशाङ्ककिरणोत्तंसे हर्म्ये हरिणचक्षुषाम् ।
मधूत्सवे मदोत्तंसे रागोत्तंसमभून्मनः ॥ ४७ ॥

इति चन्द्रोदयः ॥ १ ॥

विविच्य[1] मदनोद्यानपालीं वेश्मसु मन्त्रिणाम् ।
रत्नांशुहासिनीं प्राप राजधानीं प्लवंगमः ॥ ४८ ॥

---

१. 'विचित्य प्रमदो' शा०.

मणिदर्[१]पणसंक्रान्तप्रतिमैश्चन्द्ररश्मिभिः ।
शुभ्राभ्रपक्षविक्षेपैः प्लवमानामिवाम्बरे ॥ ४९ ॥
स[२] प्रविश्य महाभोगं कैलासशिखरोपमम् ।
भवनं दशकण्ठस्य ददर्शोल्लिखिताम्बरम् ॥ ५० ॥
रक्षितं राक्षसैरात्तश[३]स्त्रैरञ्जनमेचकैः ।
कालकूटावृतप्रा[४]सं सुधाम्बुधिमिवोद्गतम् ॥ ५१ ॥
संगीतवेश्मभिर्वा[५]रा गृहैरापणमन्दिरैः ।
विमाननवसंभारैर्व्याप्तं निखिलकौतुकैः ॥ ५२ ॥
अपश्यत्तत्र तुरगान्प्रमाणावर्तहेषितैः ।
श्लाध्या सत्त्वजवोदारैस्त्रैलोक्यजयशंसिभिः ॥ ५३ ॥
स ददर्श दशास्यस्य चतुर्दन्तान्मदद्विषान् ।
कैलासोच्छासनभयात्सेवायातानिवाचलान् ॥ ५४ ॥
वर्णकं विविधाश्चर्यवर्गसर्गे प्रजापतेः ।
रत्नांशुलेखाविन्यासैः स्वप्रभावमिवोद्वमन् ॥ ५५ ॥
वेल्लत्प्र[६]भावा भ्रूभङ्गतर्जितामरभूधरम् ।
विमानं पुष्पकं नाम ददर्श त्रिदशद्विपः ॥ ५६ ॥
दुर्लभा त्रिदशेन्द्रस्य कुतो वैश्रवणस्य सा ।
रावणस्य गृहे लक्ष्मीं मारुतिर्यां व्यलोकयत् ॥ ५७ ॥
अथान्तःपुरमैश्वर्यस्फारकल्पतरोः फलम् ।
स राक्षसपतेर्दिव्यं विवेशानेककौतुकम् ॥ ५८ ॥
कपाटसंपुटैः श्लिष्टैः स्फाटिकैः स्फुटकान्तिभिः ।
असंवृतमिवोद्भूतप्रभाप्रावरणं मुहुः ॥ ५९ ॥
मुक्ताप्रालम्बधवलं तप्तकाञ्चनजालकम् ।
प्रवालनीलवैडूर्यस्तम्भसंभारविभ्रमम् ॥ ६० ॥

---

१. 'मन्दिर' शा०. २. 'तां' शा०. ३. 'खड्ग' शा०. ४. 'प्रान्तं' शा०. ५. 'दारा' शा०. ६. 'त्पताका' शा०.

मणिकुट्टिमसंक्रान्तसितस्रग्दाममण्डलम्।
शासनाद्दशकण्ठस्य शेषेणेव[1] धृतं स्वयम्॥ ६१॥
स्फीतरत्नकृतालोकं वृद्धकञ्चुकिरक्षितम्।
पातालमिव मातङ्ग[2]भुजंगीभङ्गिभूषितम्॥ ६२॥
चन्दनागुरुकर्पूरधूपधूमान्धकारितम्।
निशाचरपतिप्रीत्या निशयेव समाश्रितम्॥ ६३॥
ददर्श तत्र सुरतक्लान्तकान्ताजनं कपिः।
चित्रन्यस्तमिव प्रौढनिद्रामुद्रितलोचनम्॥ ६४॥
दृश्यस्तनोरुजघनं तासां कान्ततरं वपुः।
विलोक्य विबभुर्दीपा विस्मयादिव निश्चलाः॥ ६५॥
कुचैः कान्तनखोच्छिष्टैः पीतदष्टाधरैर्मुखैः।
प्रत्यग्ररतवृत्तानां[3] तरुणीनाममुच्यत॥ ६६॥
हेमगौरोरुयुगलं नखोल्लेखैर्मृगीदृशाम्।
रतिच्युतैरिवाकीर्णं बभौ कुङ्कुमकेसरैः॥ ६७॥
तासां प्रियहठाकर्षहेलाविस्रस्तवेणिका।
मध्ये सुष्वाप निभृतरतिखिन्नेव शर्वरी॥ ६८॥
क्लमस्रस्तोत्तरीयास्ताः स्वेदवारिकणैर्बभुः।
रतित्रुटितहाराग्रसंसक्तैरिव मौक्तिकैः॥ ६९॥
निद्रानिमीलिते तासां लोचनोत्पलकानने।
स्वप्रभाप्रतिभां प्राप क्षणं कर्णोत्पलावली॥ ७०॥
प्रोच्छूनारुणगण्डैस्ताः कुण्डलाताण्डवाहतैः।
ऊचुः स्रस्तैः सचिकुरैर्विपरीतरतोत्सवम्॥ ७१॥
तासां रतिरणस्रस्तकर्णोत्पलदलच्युता।
लेखेव त्रिवली कूले लीना रोमावली बभौ॥ ७२॥
सुप्तपारावते मूकमेखले[4] रतिमन्दिरे।

१. 'णाव' शा०. २. 'सार' शा०. ३. 'वृत्तान्तां' ४. 'श्च चकुले' शा०.

निस्पन्ददीपे विबभौ निःशब्दविजयी स्मरः ॥ ७३ ॥
सुरकिंनरगन्धर्वनागविद्याधरात्मजाः ।
दृष्ट्वा रावणकान्तास्ताः कपिर्विस्मयमाययौ ॥ ७४ ॥
उपसृत्य शनैः स्फाररत्नपर्यङ्कशायिनम् ।
स ददर्श दशग्रीवं पर्यस्तमिव मन्दरम् ॥ ७५ ॥
मदनिद्राप्रबन्धेन मदिरामोदशालिना ।
श्वासानिलेन महता क्षिपन्तं मधुपावलीः ॥ ७६ ॥
सहारेणोरसा रक्तचन्दनार्द्रेण भूषितम् ।
उदयाद्रितटेनेव शशिसंध्याभ्रशोभिना ॥ ७७ ॥
त्रैलोक्यदक्षिणैः प्रौढकान्तालिङ्गनदक्षिणैः ।
भुजैर्नीलमणिस्तम्भप्रभैर्दीप्ताङ्गदैर्वृतम् ॥ ७८ ॥
संक्रान्तदीपैर्भ्राजिष्णुं रत्नकेयूरशेखरैः ।
नीलाचलमिव व्याप्तं दीप्तौषधिवनैर्निशि ॥ ७९ ॥
सर्वाभरणरत्नाग्रविम्बितप्रमदावनम् ।
यातं रामारसोत्कण्ठ्यात्कामिनीमयतामिव ॥ ८० ॥
मन्दारमालां शबलां पारिजातस्य पल्लवैः ।
मूर्तामिव क्षतां कण्ठे वहन्तं त्रिदिवश्रियम् ॥ ८१ ॥
बिभ्राणं हंसधवलं वासः श्वासतरङ्गितम् ।
क्षीरार्णवमिवोद्भूतकान्ताकान्तामुखेन्दुभिः ॥ ८२ ॥
आरुह्य रत्नसोपानैः शीर्षान्ते मणिवेदिकाम् ।
चिरं रावणमालोक्य हनूमान्विस्मितोऽभवत् ॥ ८३ ॥
वीणावेणुमृदङ्गेषु निषण्णाः प्रौढनिद्रया ।
प्रियास्तस्य बभुः पार्श्वे वाद्यानामिव देवताः ॥ ८४ ॥
संपूर्णचन्द्रवदनां मदनानन्दकौमुदीम् ।
मन्दोदरीं ददर्शाथ कपिस्त्रैलोक्यसुन्दरीम् ॥ ८५ ॥

---

१. 'शुशुभे' शा०. २. 'कृता' शा०.

मनःसंवनने सक्तां नयनानन्दवर्षिणीम् ।
शक्तिं रतिपतेर्मूर्तां सुधांशोर्वाधिदेवताम् ॥ ८६ ॥
नखोल्लेखैः सनाथाभ्यां बालपल्लवपाटलैः ।
कुचकाञ्चनकुम्भाभ्यां विहितानङ्गमङ्गलाम् ॥ ८७ ॥
तां विलोक्यानवद्याङ्गीं पर्याप्तेन्दुशतद्युतिम् ।
सीतेयमिति विज्ञाय हृष्टः कपिरचिन्तयत् ॥ ८८ ॥
लावण्येन्दुमहोरूपमहोकान्तिसुखी तनुः ।
इयं सा मन्मथमयी वैरं रामस्य वल्लभा ॥ ८९ ॥
अथवा राघववधूः कथमेवंविधा भवेत् ।
न श्रुताः स्रस्तचारित्रा रघूणां कुलयोषितः ॥ ९० ॥
सेयं त्रैलोक्यजयिनः प्राज्यसाम्राज्यदेवता ।
मूर्ता रतिपतेः शक्तिः सक्ता रावणवेश्मनि ॥ ९१ ॥
इति निश्चित्य मनसा पौलस्त्यान्तःपुराङ्गनाः ।
मारुतिर्लघुसंचारिर्द्रष्टुमन्याः समुद्ययौ ॥ ९२ ॥
विचित्रभक्ष्यभोज्यार्थपानकामवसेविते ।
आस्तीर्णहेममाणिक्यस्तम्भभृङ्गारभाजने ॥ ९३ ॥
कल्पपादपपुष्पाढ्ये नाभिकर्पूरधूपिते ।
चचार मारुतिः पश्यन्मन्दिरे मन्दिरे श्रियम् ॥ ९४ ॥
तेषु तेष्वथ देशेषु स राममहिषीं शनैः ।
विचिन्त्याचिन्तयत्क्षिप्रं निष्फलोद्योगदुःखितः ॥ ९५ ॥
अहो नु हेलयावासः कियान्किल्बिषसंचयः ।
मया विवसनाः स्पष्टं पश्यता परयोषितः ॥ ९६ ॥
अनिच्छयैव सुकृतं दुष्कृतं वा पुराकृतैः ।
कर्मानुबन्धवैचित्रैः जन्तूनां जातु जायते ॥ ९७ ॥
संकल्पेनाप्यसंस्पृष्टा योषितो ब्रह्मचारिणः ।
कथं ममापि निर्वस्त्रपरस्त्रीदर्शनोद्यमः ॥ ९८ ॥

१. 'प्याद्र' शा०. २. 'नूनं' शा०.

उन्मूलिता हि मर्यादाः प्रच्छन्नच्छिन्नपौरुषाः।
सद्वृत्तपरिपन्थिन्यो जयन्ति विधिवामताः॥ ९९॥
अथवा चेतसा सत्यं निःसङ्गेन मयाङ्गनाः।
दृष्टा विधातृवैचित्र्यमयःकनकपुत्रिकाः॥ १००॥
न मनो म्लानिमातङ्कः कश्चिन्मे शीलविप्लवः।
शुभाशुभविचेष्टासु प्रमाणं देहिनां मनः॥ १०१॥
सप्रासादगृहोद्याना दृष्टेयं निखिला पुरी।
न तु दृष्टा जनकजा मूढेनैव मयात्मधीः॥ १०२॥
इयमुद्योगशक्तिर्मे दुराशेवानुतापिनी।
असाधुजनसेवेव बत निष्फलतां गता॥ १०३॥
न भवन्ति फलावाप्तिलुप्तक्लेशाः समुद्यमाः।
उत्साहविमुखे नित्यमप्राप्ते स्पष्टतां विधौ॥ १०४॥
सत्कर्मारम्भसंभारफलं हरति हेलया।
कूपावतरणे पाशच्छेदी सर्वात्मना विधिः॥ १०५॥
पौरुषोत्साहयोगेऽपि याति यद्वन्ध्यतां श्रमः।
सा गुणद्वेषिणो धातुः स्वच्छन्दप्रभविष्णुता॥ १०६॥
विघ्नाघ्राता महोद्योगा फलसिद्धिरनित्यता।
विनाशप्रेक्षको लोकः कथमासाद्यते यशः॥ १०७॥
आश्चर्यचर्याविपुलः कृतः केवलमुद्यमः।
त्रपाकरः परस्याग्रे कथ्यमाना फलं विना॥ १०८॥
इहाप्यदृष्ट्वा वैदेहीं वृथैवोलङ्घ्यसागरम्।
किं वक्ष्याम्यबलोद्योगयोगः प्लवगपुंगवम्॥ १०९॥
गृहीत्वायं किमायातो लम्बमानभुजद्रुमः।
इति वक्ष्यन्ति मां सर्वे सांप्रतं हसिताननाः॥ ११०॥
सीता मया न दृष्टेति कालकूटोत्कटं वचः।
श्रुत्वैव जीवितं व्यक्तं रामस्त्यक्ष्यति सानुजः॥ १११॥

१. 'वीराः स्वासूयह' शा०.

कुलचूडामणौ तस्मिन्प्रयाते कीर्तिशेषताम्।
कथं रघुकुलस्यापि जीविताशा भविष्यति ॥ ११२ ॥
वैरं सुहृत्क्षयोद्विग्नः सुग्रीवो मित्रवत्सलः।
सामात्यभृत्यस्वजनस्तनुत्यागं करिष्यति ॥ ११३ ॥
इति सर्वक्षयं घोरं द्रष्टुं गच्छाम्यहं कथम्।
अदृष्टेष्टवियोगस्य तपो मे नान्यदुत्तमम् ॥ ११४ ॥
विपुलक्लेशवैफल्यदुःखसंतप्तचेतसाम्।
विधिवैमुख्यदग्धानां विवेकः श्रमवारिदः ॥ ११५ ॥
इष्टे नष्टे सुखे भ्रष्टे कष्टे निकटवर्तिनि।
अमूढमनसां युक्तं वैराग्याभरणं तपः ॥ ११६ ॥
अस्मिन्पयोनिधेस्तीरे निर्निकेतो निराश्रयः।
हस्तादौ वा मुखादौ वा भवाम्येष गतस्पृहः ॥ ११७ ॥
शरीरत्यागयोग्यैव मानस्लानिरियं मम।
शाम्यति प्रौढमनसा स्नातस्य प्रशमाम्बुभिः ॥ ११८ ॥
अज्ञाते जानकीवृत्ते किं वृथैव हतेन मे।
रावणेनातिसिक्तेन स्त्रीसनाथासभूमिषु ॥ ११९ ॥
अथवा विचिता नेयमशोकवनिका मया।
रक्ताशोकवटैस्तस्यां रतिराग इव स्थितः ॥ १२० ॥
शर्वर्यां स्तोकशेषायामिति संचिन्त्य मारुतिः।
जगामाशोकवनिकां पुष्पपातोपमैः पदैः ॥ १२१ ॥

इत्यन्तःपुरपरिचयः ॥ २ ॥

सुरान्सरामसुग्रीवान्मनसा प्रणिपत्य सः।
वल्ली विलासिनीवृत्तललितामविशन्महीम् ॥ १२२ ॥
सुजवेन व्रजन्वृक्षमञ्जरीर्वक्षसा क्षिपन्।
हेमवृक्षरजःपुञ्जे बभूव कनकप्रभः ॥ १२३ ॥

---

१. 'नूनं' शा०. २. 'दुर्य' शा०.

नानारत्नच्छदैर्दिव्यैः सौरभैः सुरपादपैः ।
सपुष्पवाष्पैराकीर्णः कृतातिथ्य इवाबभौ ॥ १२४ ॥
अशोकवनिकां तस्मिन्गाहमाने मनोजवे ।
समुद्भूतैरलिकुलैर्बभूवुः श्यामला दिशः ॥ १२५ ॥
विहङ्गैर्नीलरक्ताङ्गैः कूजद्भिः कनकच्छदैः ।
प्रवालचञ्चुचरणैः स्रस्तैर्व्याप्तमभून्नभः ॥ १२६ ॥
प्रवर्धमानवेगस्य तस्य गात्रानिलैर्मुहुः ।
वनिका प्रोषितेवाभूत्त्यक्तपुष्पविभूषणा ॥ १२७ ॥
लोलालिमालाकबरी सा तरङ्गितमानसा ।
दीक्षेव शुशुभे स्रस्तकिञ्जल्कपटलांशुका ॥ १२८ ॥
सा लुप्ततिलका स्रस्तचन्दनागुरुपल्लवा ।
बभौ रतान्तक्लान्तेव क्लिष्टबिम्बफलाधरा ॥ १२९ ॥
बभार पुष्पमालां सा छिन्नां वेश्येव रागिणा ।
कपिसिंहेन नखरोल्लेखितस्तबकस्तनी ॥ १३० ॥
तस्यां निष्पत्रकुसुमा न बभुः कपिकम्पिताः ।
पादपाः प्रौढकितवैर्मुग्धा इव पराजिताः ॥ १३१ ॥
तत्र केचिददृश्यन्त तरवो हृतवल्कलाः ।
वेश्याभिर्भुक्तसर्वस्वा विटा इव निरम्बराः ॥ १३२ ॥
विपुलाः पादपाः क्षिप्रं कपिना निष्फलीकृताः ।
बभूवुः शोकजनका दैवेनेव मनोरथाः ॥ १३३ ॥
आयासिता तरुश्रेणी मारुतेर्वेगविप्लवैः ।
अकम्पत प्रजेवोग्रैर्लुण्ठिता राजवल्लभैः ॥ १३४ ॥
सरत्नकदलीकुञ्जे कान्ताकल्पलतावने ।
मन्दारोद्दारवीथीषु केलिकल्लोलिनीतटे ॥ १३५ ॥
हेमपङ्कजिनीपुञ्जे क्रीडावैडूर्यपर्वते ।
तत्र तत्र च बभ्राम वैदेहीदर्शनाशया ॥ १३६ ॥

इत्यशोकवनिकाप्रवेशः ॥ २ ॥

अथेन्द्रनीलतरुभिर्मुक्ताकुसुमहासिभिः ।
आलिङ्गितमिव प्रौढस्कन्धैर्विटपबाहुभिः ॥ १३७ ॥
मणिस्तम्भसहस्रेण धृतं कनकवेदिकम् ।
कपिर्ददर्श प्रासादं स्वसंकल्पमिवोन्नतम् ॥ १३८ ॥
तत्र काञ्चनशाखस्य महतः शिंशिपातरोः ।
अपश्यन्मारुतिर्मूले नारीं कमललोचनाम् ॥ १३९ ॥
कनकस्निग्धगौरेण नयनानन्दबन्धुना ।
देहकान्तिवितानेन संदेहितशशिप्रभाम् ॥ १४० ॥
विरहापाण्डुरमुखां चिन्तया तनुतां गताम् ।
रहितां सितपक्षेण सुधाकरकलामिव ॥ १४१ ॥
अपरिम्लानचरितां परिम्लानाधराननाम् ।
विच्छिन्नजीवितस्नेहामविच्छिन्नमनोरथाम् ॥ १४२ ॥
आबद्धवेणिकां वक्रपद्मनेत्रोत्पलाशयाम् ।
दीर्घां पश्चादिवालीनां वहन्तीं भृङ्गसंततिम् ॥ १४३ ॥
पाणिस्था(?)पारुणच्छायाकपोलोल्लिखिता धृतिम् ।
दुःखाग्निधूमनिवहैरिव बाष्पाकुलेक्षणाम् ॥ १४४ ॥
कुलविद्यामनभ्यासादनङ्गस्येव विस्मृताम् ।
इन्दोरभ्रावलिप्तस्य द्युतिं निपतितामिव ॥ १४५ ॥
तां वीक्ष्य राक्षसस्त्रीभिर्विरूपाक्षीभिरावृताम् ।
व्याघ्रीभिरिव घोराभिर्मृगीं चकितलोचनाम् ॥ १४६ ॥
सहसा विस्मयावेशवशगः प्लवगः क्षणम् ।
विमर्शहर्षकारुण्यनिश्चलः समचिन्तयत् ॥ १४७ ॥
इयं श्रीः पुण्यलावण्यसुधासिन्धुसमुद्गता ।
विलासपारिजातस्य स्वसा कुसुमकोमला ॥ १४८ ॥
प्रांशुवंशोदिता तन्वी शुचिशीला दुकूलिनी ।
साम्राज्यविजयारम्भवैजयन्ती मनोभुवः ॥ १४९ ॥

---

१. 'हासित' शा०.

यदि चिन्ताकुला नेयं रतिः प्रोषितभर्तृका ।
तत्सैव निश्चितं कान्ता राममानसमानसी ॥ १५० ॥
इयमेव तदास्माभिर्दृष्टा रक्षोहृता सती ।
उत्सृष्टपुष्पाभरणा लतेव पवनाकुला ॥ १५१ ॥
इयं सा रघुनाथस्य धृतिर्दूरतरं गता ।
विदिता जीविताशेव वियोगतनुतां गता ॥ १५२ ॥
अस्याः कृते कीर्तिलता फलिता सा जटायुषः ।
साधुवादोल्लसत्सर्वजनजिह्वाग्रपल्लवा ॥ १५३ ॥
अस्याः कृते सितच्छत्रतिलका कलशस्तनी ।
प्राप्ता श्रीः कपिराजेन चारुचामरहासिनी ॥ १५४ ॥
अस्याः कृते कपिवरैः पृथ्वी सगिरिसागरा ।
दर्शनायोद्यतैः क्रान्ता दिवाकरकरैरिव ॥ १५५ ॥
अहो बताप्रतिहता प्रतिकूलविलासिनी ।
सर्वत्र विवृतद्वारा दैवशक्तिर्गरीयसी ॥ १५६ ॥
विपदः सर्वगामिन्यो दुर्लङ्घ्या भवितव्यता ।
कष्टं कुटिलचेष्टस्य विधेरस्खलिता गतिः ॥ १५७ ॥
त्रैलोक्यरक्षादक्षस्य रघुनाथस्य जीवतः ।
लक्ष्मणस्य च वीरस्य वैदेही विपदां पदम् ॥ १५८ ॥
इमां विना विशालाक्षीं कथं जीवति राघवः ।
नियतान्यथ वायूंषि सर्वथा न न जीव्यते ॥ १५९ ॥
वियोगहारितरतेर्विपुले व्यसनानले ।
जीवितालम्बवसुधा प्रियावाप्तिमनोरथः ॥ १६० ॥
इति चिन्तयतस्तस्य चिरं निर्वर्ण्य जानकीम् ।
कार्यवैफल्यजा चिन्ता क्षपेव तनुतां ययौ ॥ १६१ ॥

इति सीतादर्शनम् ॥ ४ ॥

---

१. 'मन्मथा' शा०. २. 'विधिरस्खलितादरः' शा०. ३. 'लम्बनसुधा' शा०.

ततः प्रपेदे प्रत्यूषसंध्यारुणरुचिः शशी।
पाणिस्वापभराताम्रप्रोपितावदनद्युतिम् ॥ १६२ ॥
प्रवृत्तेष्वग्निहोत्रेषु प्रभाते ब्रह्मरक्षसाम्।
सभ्रूभङ्ग इव व्योम्नि धूमलेखातरङ्गिते ॥ १६३ ॥
उदिते गगनाम्भोधिकौस्तुभे विपुलप्रभे।
मित्रे जगत्रयीनेत्रशतपत्रविकासिनि ॥ १६४ ॥
कुमुद्वतीं परित्यज्य लक्ष्मीर्भेजे सरोजिनीम्।
प्रायः पर्यायगामिन्यः संपदो विपदस्तथा ॥ १६५ ॥
पद्मसेवाप्रणयिनः कुमुद्वत्यां च निष्ठुराः[1]।
समृद्धिसचिवाश्चेरुर्वित्ता इव मधुव्रताः ॥ १६६ ॥
व्योम्नः श्यामा विरहिणस्तारकाश्रुकणावली।
बालमित्रकरोन्मृष्टा जगामादर्शनं शनैः ॥ १६७ ॥
बभौ स्वर्णमयी लङ्का व्याप्ता बालातपश्रिया।
कुङ्कुमोन्मृष्टगात्रेव शोणांशुकवती वधूः ॥ १६८ ॥
सुरकिंनरगन्धर्वविद्याधरमृगीदृशाम्।
नृपप्राबोधिकैर्गीतैर्विजिते भृङ्गशिञ्जिते ॥ १६९ ॥
क्षणं दशाननस्थानप्रारम्भक्षुभिते जने।
सेवासंदर्शनव्यग्रसमग्रामात्यमण्डले ॥ १७० ॥
सीतां सुनिश्चितं ज्ञात्वा तरुपल्लवसंभृतः।
पश्यन्नलक्ष्यस्तामेव कपिस्तस्थौ क्षपावधि ॥ १७१ ॥
अथाम्बरसरश्चुम्बिरविबिम्बाम्बुजं शनैः।
प्रम्लानदिननालान्ते परिश्रान्तमलम्बत ॥ १७२ ॥
दीप्तिमोषधिशैलेषु तापं विरहिणीषु च।
निक्षिप्येव जगामास्तं विस्रस्तकिरणो रविः ॥ १७३ ॥
सूर्यरत्नगृहैर्लङ्का वासरस्याशु गच्छतः।
क्षणमंशुकसंसक्ता हस्तालम्बमिवाकरोत् ॥ १७४ ॥

---

१. 'कुमुदत्यागनिष्ठुराः' शा०.

स्फारस्फटिकहर्म्येषु कान्ताकेलिस्मितेषु च ।
ध्वजांशुकेषु च दिनं सावशेषमिवाभवत् ॥ १७५ ॥
ततः संध्यासवापूर्णं तमःस्तोमोत्पलावृतम् ।
तारकाकुसुमस्मेरं बभौ गगनभाजनम् ॥ १७६ ॥
शोणरत्नगृहालोकरक्तचन्दनचर्चिता ।
राक्षसीमुक्तकेशेव तमोभिरभवत्क्षपा ॥ १७७ ॥
निशि प्रवर्धमानेव नीलरत्नगृहावली ।
चिरायातस्य तमसः प्रत्युत्थानमिवाकरोत् ॥ १७८ ॥
अथो निशीथमन्थाद्रिव्याप्ते गगनसागरे ।
उद्ययौ विकटध्वान्तकालकूटे सुधाकरः ॥ १७९ ॥
अशोकवनिकोद्देशे बभौ बिम्बं क्षपापतेः ।
छत्रीभूतमिवाशेषपुष्पकोशोद्गतं रजः ॥ १८० ॥
चन्द्रांशुहाससुभगे रराज रजनीमुखे ।
कुमुदामोदमत्तालिमालालोलालकावली ॥ १८१ ॥
प्रौढे निशाकरालोके सीतां मारुतनन्दनः ।
ददर्श हर्षरहितां बद्धामिव करेणुकाम् ॥ १८२ ॥
विरहानलसंतप्तश्वाससधूसरिताननाम् ।
संतताश्रुकणामर्षकषायारुणलोचनाम् ॥ १८३ ॥
अपश्यत्तां समावृत्त्य स्थिता विकृतविग्रहाः ।
नानाप्राणिमुखीर्घोरा नानायुधपरिग्रहाः ॥ १८४ ॥
एकानेकोग्रविस्तीर्णप्रांशुह्रस्वाङ्गभूषणाः ।
रक्षःपतिसमादिष्टराक्षसीस्तीव्रविक्रमाः[1] ॥ १८५ ॥
ताभिरभ्यर्दितां वाग्भिर्भर्तृशोकपरायणाम् ।
तरुस्कन्धगतः सीतां दृष्ट्वाभूद्दुःखितः कपिः ॥ १८६ ॥
अथार्धरात्रे निःशब्दे प्रौढपानमदोत्कटः ।
दष्टः कन्दर्पसर्पेण व्यबुध्यत दशाननः ॥ १८७ ॥

१. 'तीक्ष्ण' शा०

सजृम्भारम्भनिःश्वासैः प्रेङ्खोलितनखैर्मुहुः ।
प्रदीपैर्विहितालोकः सप्रणामैरिवागतः ॥ १८८ ॥
उत्थाय पदसंरम्भश्लथमाल्यवरांशुकः ।
निद्राकषायनयनः क्षणं सीतामचिन्तयत् ॥ १८९ ॥
स सीताचिन्तनोद्भूतं धर्तुं विषमसायकम् ।
न शशाकोत्पथारूढं मूर्खं नवमिवेश्वरः ॥ १९० ॥
सलोलहारस्रग्दामभूषणः पुष्पशेखरः ।
जगामाशोकवनिकां चूर्णमान इवाचलः ॥ १९१ ॥
तं विलोलकलक्वाणसखेलाहंसमालिनः ।
अनुजग्मुः प्रियतमा महोदधिमिवाध्वगाः ॥ १९२ ॥
ता हेमदीपभृङ्गारच्छत्रवेत्रकराः पुरः ।
तस्यावभुर्मेरुतटे जाता हेमलता इव ॥ १९३ ॥
जयालोकय मार्गोऽयमेते सेवासमागताः ।
इति तस्याकुलालापः ससर्प स्त्रीजनः पुरः ॥ १९४ ॥
दूरादागच्छतस्तस्य कान्ताकङ्कणनिःस्वनम् ।
रशनानूपुरारावं तारं शुश्राव मारुतिः ॥ १९५ ॥
स ददर्श तमायान्तं योषिद्भिः परिवारितम् ।
मूर्तं मदमिवाशेषलोकधैर्यापहारिणम् ॥ १९६ ॥
स्फुटं विज्ञाय पौलस्त्यमसामान्येन तेजसा ।
धीरोऽपि मारुतिर्द्रष्टुं नाभूत्सप्रतिभः क्षणम् ॥ १९७ ॥
स तस्य त्रिदशैश्वर्यसंहाराश्चर्यकारिणः ।
तेजसा शङ्कितः क्षिप्रमभूत्पल्लवसंवृतः ॥ १९८ ॥
सीतापि रावणं वीक्ष्य दिव्याभरणदीप्तिभिः ।
नीलाभ्रमिव विद्युद्भिः कुर्वाणं कपिला दिशः ॥ १९९ ॥
भज्यमानेव सहसा वेपमानाश्रुवर्षिणी ।
शीकरानिलवेगेन नलिनीव समाहता ॥ २०० ॥

१. 'हेमतटे' क-ख. २. 'सेनाः समागताः' शा०-क-ख.

अधोमुखीससंकोचमूरुप्रच्छादितोदरी ।
बाहुस्तम्बिकबन्धेन विनिगूह्य पयोधरौ ॥ २०१ ॥
भयशोकावमानानां तुल्यं निपतिता वशे ।
विवेश स्वमिवाकारं ह्रिया भूविवरार्थिनी ॥ २०२ ॥
सीतामालोक्य पौलस्त्यः क्षितिं दैत्यहृतामिव ।
सहसा राक्षसाकृष्टां मन्त्रहीनामिवाहुतिम् ॥ २०३ ॥
दीर्घदुःखानलक्रान्तां प्राणत्यागसुखार्थिनीम् ।
रामसंगमसंकल्पैर्दूतैराश्वासितामिव ॥ २०४ ॥
उत्कण्ठाकुण्ठितधृतिर्जगाद जलदस्वनः ।
कुर्वन्नुद्याननलिनीं हंसालीं भयविह्वलाम् ॥ २०५ ॥
अद्यापि वामनयने किमस्मान्नाभिभाषसे ।
पेशले वज्रकठिनः कोऽयं ते हृदि दुर्ग्रहः ॥ २०६ ॥
प्रसादामृतदिग्धेन मुग्धे मधुरचक्षुषा ।
विलोकयन्ति यत्कान्तास्तत्तासां चारुभूषणम् ॥ २०७ ॥
इयं ते ललिता मूर्तिर्वीराणां धृतिहारिणी ।
त्रिजगज्जयिनः शक्तिं मूर्तां मन्ये मनोभुवः ॥ २०८ ॥
भूषणैर्भूषयात्मानं लावण्येनापि भूषितम् ।
गुणैरिवापरिम्लानं रूपं यौवनभूषितम् ॥ २०९ ॥
संभोगरहिता सुभ्रु नेयं ते शोभते तनुः ।
गुणज्ञैरपरामृष्टा सुकवेरिव भारती ॥ २१० ॥
दष्टाधरं रतिक्लान्तं विस्रस्तकबरीभरम् ।
सुदृशां भाति संभोगसौभाग्याभरणं वपुः ॥ २११ ॥
प्रसीद मे प्रणयिनः कुरु चारुस्मितं वचः ।
कामं कामः सकामोऽस्तु कार्मुके सफलश्रमः ॥ २१२ ॥
किं मे संदर्शनादेव तनुं तन्वि निगूहसे ।
अकामां कामिनीं सत्यं न संस्पृशति रावणः ॥ २१३ ॥

त्यज भीरु भयं मा मे भव प्रीतिपराङ्मुखी ।
अयं त्वच्चरणानम्रो मौलिः क्ष्मां परिचुम्बति ॥ २१४ ॥
सेना सुभटहीनेव शशिहीनेव शर्वरी ।
समृद्धिस्त्यागहीनेव भोगहीना न शोभसे ॥ २१५ ॥
असंभोगपरिम्लाना स्वाङ्गी[1] प्रक्षीणयौवना ।
कान्ता कस्य न दुःखाय श्वभ्रजातेव वल्लरी ॥ २१६ ॥
सौभाग्यरहिताः कान्ताः कामं कानकपुत्रिकाः ।
यदि कान्तनखोल्लेखखण्डिता न कुचस्थली ॥ २१७ ॥
वैडूर्यहेमहर्म्येषु चन्द्रिकोल्लासहासिषु ।
स्वैरं वरासवक्षीबा भज[2] मां सुन्दरि स्वयम् ॥ २१८ ॥
सुखसख्यसरस्मेरा मदोद्यानमधुक्षपाः ।
न भवन्ति चिरं चारुनयने यौवनश्रियः ॥ २१९ ॥
सुखेषु यदि वैमुख्यं संभोगे यदि नादरः ।
अद्वितीयमिदं धात्रा तत्किमर्थं कृतं वपुः ॥ २२० ॥
त्वां वीक्ष्य मम लोलाक्षि रोचते न वधूजनः ।
भृङ्गः कल्पलतां प्राप्य वल्लीषु रमते कथम् ॥ २२१ ॥
देवि त्रैलोक्यजयिनः श्रियं मे विश्वविश्रुताम् ।
प्रसादसुमुखी क्षिप्रं देहि यस्मै त्वमिच्छसि ॥ २२२ ॥
मञ्जुजोपार्जिताशेषसाम्राज्यविजयोऽर्जितः ।
त्वज्जन्मपूजां भजतां जनको जनकस्तव ॥ २२३ ॥
स्त्रीविरामेण रामेण विस्मृतेन शुचिस्मिते ।
शुष्कवल्कलिना तेन क्रियते निष्फलेन किम् ॥ २२४ ॥
मतिस्ते यातु सुश्रोणि रतिलीलानुकूलताम् ।
सुरसीमन्तिनीसीम्नि क्रियतामासनग्रहः ॥ २२५ ॥
विद्याधरीकरोदञ्चचामरोच्चालितांशुका ।
दर्शनानुग्रहव्यग्रा भव त्रिदशयोषिताम् ॥ २२६ ॥

---

१. 'स्वङ्गी' इति स्यात्. २. 'मदिराक्षि भजस्व माम्' पा०.

इति राक्षसराजस्य वचः श्रुत्वा मनस्विनी ।
कोपशोकानलाक्रान्ता विधाय तृणमन्तरे ॥ २२७ ॥
कुर्वाणा कुचयोरश्रुकणैर्मुक्तावलीमिव ।
क्षितिं निरीक्ष्यमाणैव जगाद जनकात्मजा ॥ २२८ ॥
संकल्पस्त्यज्यतामेष स्वदारेष्वादरोऽस्तु ते ।
न मामर्हसि संप्राप्तुमेकपत्नीं कुलोचिताम् ॥ २२९ ॥
अहं रामस्य नान्यस्य विद्येव विदितात्मनः ।
दयिता दानशीलस्य शुद्धा कीर्तिरिवोचिता ॥ २३० ॥
स्वदारहरणे ज्ञात्वा दुःखामर्षविषव्यथाम् ।
परस्त्रीहरणे बुद्धिरपशोः कस्य जायते ॥ २३१ ॥
परदारपरामर्षकुत्सया कुत्सितात्मनाम् ।
पुरुषोत्तमरक्ता श्रीर्न करोति पदं गृहे ॥ २३२ ॥
कथं सन्तो न सन्तीह सन्तोऽपि न वदन्ति वा ।
तदुक्तं न प्रमाणं वा तव नाशाभिलापिणः ॥ २३३ ॥
जाता विध्वस्तशीलस्य निर्लज्जस्य प्रमादिनः ।
चारुचामरहासिन्यो न भवन्ति विभूतयः ॥ २३४ ॥
विजितं दर्पमोहाभ्यां निर्लज्जमजितेन्द्रियम् ।
विपदः स्वयमायान्ति वेश्या मुग्धमिवेश्वरम् ॥ २३५ ॥
भूपतेर्व्यसनासङ्गः प्रजानां क्षयलक्षणम् ।
अपर्वणि सहस्रांशोरिव राहुसमागमः ॥ २३६ ॥
निसर्गदुर्गमो मार्गः क्षत्रवर्गो निरर्गलः ।
कष्टं केनोपदिष्टोऽयमनिष्टपिशुनेव च ॥ २३७ ॥
सर्वथा रघुनाथस्य प्रतापः कोपसंभृतः ।
विचरिष्यति लङ्कायां धूमकेतुरिवोदितः ॥ २३८ ॥
रामचापच्युतैर्बाणैरासन्नो रक्षसां क्षयः ।
यद्यस्ति ते सुहृत्कश्चित्प्रतीकारो विचिन्त्यताम् ॥ २३९ ॥

१. 'राजान' ख. २. 'ते' शा०.

अवश्यं त्वयि मग्नायाः पयःपङ्काशये श्रियः ।
दीर्घरामशरश्रेणी हस्तालम्बं करिष्यति ॥ २४० ॥
रुचिरैरचिरायातै रामलक्ष्मणसायकैः ।
अयशःशेषतामेव प्रयास्यसि निपातितः ॥ २४१ ॥
रामबाणमये लोके दिक्षु सर्वासु सर्वतः ।
विचार्यानार्य जानीहि क ते रक्षा भविष्यति ॥ २४२ ॥
जन्मान्तरेषु दुर्वृत्तनरकाग्निच्छलेन ते ।
प्रशान्तिं रामकोपाग्निर्न हतस्यापि यास्यति ॥ २४३ ॥
इति सीतावचः श्रुत्वा परुषं राक्षसेश्वरः ।
तां प्रत्युवाच निःश्वस्य कोपादाताम्रलोचनः ॥ २४४ ॥
यान्ति प्रगल्भतां सान्त्वैरवमानैश्च वश्यताम् ।
स्त्रियः कुटिलचारिण्यः प्रणयस्य न भाजनम् ॥ २४५ ॥
अनुकूलविरुद्धस्य प्रतिकूलाभिलाषिणः ।
सर्वथा विषमः पन्थाः मन्मथस्य प्रसादिनः ॥ २४६ ॥
विमुखीष्वन्यकामासु यद्वामास्वधिका रुचिः ।
सा ह्यगम्याभिकामस्य कामं कामस्य वामता ॥ २४७ ॥
ललना परुषं ब्रूते तत्रापि प्रणयी जनः ।
अहो विरक्तसक्तस्य रागस्यानुचिता गतिः ॥ २४८ ॥
नीचानां निम्नगानां च योषितां च स्वभावतः ।
धृतानामपि यत्नेन नोन्नते जायते रतिः ॥ २४९ ॥
वधार्हासि च वैदेहि मम विप्रियकारिणी ।
किं करोम्येष दुर्वृत्तस्त्वां रक्षति मनोभवः ॥ २५० ॥
वचः क्रकचतुल्यं ते विषौघविषमं मनः ।
रामस्यापि कथं नाम त्वं नित्यकठिने प्रिया ॥ २५१ ॥
मानं मार्ष्टि मतिं हन्ति जनयत्येव लाघवम् ।
एवंरूपः प्रयत्नोऽस्याः प्रायेणाविषये रतिः ॥ २५२ ॥

१. 'वधयोग्यासि' शा०.

अद्याप्ययं जनः सीते त्वत्प्रसादं प्रतीक्षते ।
सद्वृत्त इव रागोऽयं सदोषेष्वपि वत्सलः ॥ २५३ ॥
सर्वथा यदि सावज्ञा न करिष्यति मे वचः ।
याते मासद्वये वध्या भविष्यसि न संशयः ॥ २५४ ॥
इति संतर्जितां सीतां सुरगन्धर्वयोषितः ।
दृष्ट्वा नेत्रौष्ठसंज्ञाभिस्तदाश्वासं प्रचक्रिरे ॥ २५५ ॥
सावदन्निर्भया शोक[1]संतप्ता मरणै[2]षिणी ।
रक्षन्ती वाससा गात्रे रक्षोदर्शनदूषणम् ॥ २५६ ॥
एवं प्रलापिनः पाप कथं जिह्वा न शीर्यते ।
परेषां दारचौरस्य दण्डाः प्राणेषु ते क्षमाः ॥ २५७ ॥
सैन्यरा[3]ष्ट्रेषु दुर्गेषु स्वमित्रेषु परात्मसु ।
दुःसहो रामकोपाग्निरास्थां मिथ्यैव मा कृथाः ॥ २५८ ॥
स्तोकवासरशेषेयं तव श्रीरायुषा सह ।
स्वयं वितर सर्वस्वं न प्रेतमनुयाति तत् ॥ २५९ ॥
भविष्यति तवावश्यं रामाद्भीतस्य संयुगे ।
भुजेषु भारभूतेषु शस्त्रग्रहविडम्बना ॥ २६० ॥
त्वद्वधूबाष्पसलिलैस्त्व[4]त्संकल्पकलङ्कितम् ।
क्षालयन्तीमिवात्मानं लङ्कां द्रक्ष्यति राघवः ॥ २६१ ॥
इति ब्रुवाणां वैदेहीं कामक्रोधमयेन सः ।
संसारेणेव घोरेण चक्षुषा क्षणमैक्षत ॥ २६२ ॥
संरम्भक्षुभिता कोपकम्पव्याकुलकुण्डलम् ।
दृष्ट्वा लङ्केश्वरं कान्ता बभाषे पुण्यमालिनी ॥ २६३ ॥
पराङ्मुखीं त्यज विभो सीतां परुषवादिनीम् ।
भजस्व स्वां प्रियतमां त्वत्प्रेमबहुमानिनीम् ॥ २६४ ॥

---

१. 'कोप' शा०. २. 'निधने' शा०. ३. 'राष्ट्रार्थदुर्गेषु मित्रमन्त्रिवरात्मसु' शा०. ४. 'त्वत्संपर्क' शा०.

परस्परगुणाबद्धप्रेमप्रणयभूषणः।
उत्तमाभिमतो रागः खलरागो ह्यतः परः॥ २६५॥
इति प्रियावचः श्रुत्वा जानकीतर्जने स्वयम्।
राक्षसीगणमादिश्य रावणोऽन्तःपुरं ययौ॥ २६६॥
ततः प्रभाते पौलस्त्यराक्षस्यः कोपकम्पिताः।
सीतामूचुर्विरूपाक्ष्यो भेरीगम्भीरनिःस्वनाः॥ २६७॥
चतुर्थो ब्रह्मणः श्रीमान्वीरो विश्रवसः सुतः।
धन्यस्ते प्रणयी मूढे पौलस्त्यस्त्रिजगज्जयी॥ २६८॥
भाग्यहीनस्य किं वान्यन्मिथ्या समुपदिश्यते।
परित्यजति यः स्फीतं निधानं स्वयमागतम्॥ २६९॥
भ्रूक्षेपमात्रानुमितामाज्ञां यस्य सुरासुराः।
वहन्ति नम्राः सततं मौलिमालाग्रशालिनीम्॥ २७०॥
वरुणः करुणापात्रं शक्रो वक्रमतिः पुनः।
मारुतो विरतावेगस्तरणिः किरणोज्झितः॥ २७१॥
धनदो धनदोषान्तः पावकोऽपावकव्रतः।
यमः ससंयमो यस्य रोचतां ते स रावणः॥ २७२॥
प्रीत्या प्रणत इत्येवं सावमंस्था दशाननम्।
तस्येच्छया त्रयो लोका भवन्ति न भवन्ति च॥ २७३॥
प्रणयाद्यदि दर्पान्धे न करिष्यसि नो वचः।
तदास्मद्दन्तिदन्ताग्रदलिता क्षयमेष्यसि॥ २७४॥
कोमलानि तवाङ्गानि पानक्रीडावदंशताम्।
गतानि यावदस्माकं तावत्कुरु यथोचितम्॥ २७५॥
इति संतर्जिता सीता ताभिर्बाष्पाम्बुवर्षिणी।
उवाच सर्वं क्रियतां रामो मे दैवतं पतिः॥ २७६॥
त्रैलोक्यख्यातयशसस्तस्य रामस्य वल्लभा।
न जीवितक्षयभयात्करोत्यनुचिते मतिम्॥ २७७॥

१. 'विरमद्वेगः' शा०.

इति ब्रुवाणा वैदेही नेत्राम्बुस्नपितस्तनी ।
वल्लीवालिकुलालापा वेपमाना प्रलापिनी ॥ २७८ ॥
रामं निरीक्षमाणेव संकल्पोल्लिखितं पुरः ।
रुरोदाभ्यधिकं दुःखं तस्मै वक्तुमिवोद्यता ॥ २७९ ॥
ततस्ताः शूलपरशुप्रासपट्टिशतोमरैः ।
उद्यतैरुद्ययुः सीतां घोरा नक्तंचरस्त्रियः ॥ २८० ॥

इति सीतातर्जनम् ॥ ५ ॥

अथोचे त्रिजटा नाम प्रसिद्धा वृद्धराक्षसी ।
बालेयं मैथिली मिथ्या हठादायास्यते सती ॥ २८१ ॥
इयं गुणगणोदारा कल्याणस्यैव भाजनम् ।
इदमभ्युदयस्यैव सर्वदा मन्दिरं वपुः ॥ २८२ ॥
श्रूयतां शर्वरीशेषे मया स्वप्नोऽद्य यादृशः ।
दृष्टो न दृष्टपूर्वोऽपि न श्रुतो न विचिन्तितः ॥ २८३ ॥
पिबन्सभूधरां भूमिं शोणितं च सिताम्बरः ।
दृष्टः स्वप्ने मया रामः शुक्लमाल्यानुलेपनः ॥ २८४ ॥
लक्ष्मणश्च तथा दिव्यः शुक्लवस्त्रावृतः पुरः ।
आरूढो दन्तशिबिकां दिव्यां गगनगामिनीम् ॥ २८५ ॥
हृतां नागसहस्रेण कैलासशिखरोपमाम् ।
समुद्रवलितं श्वेतपर्वतं जनकात्मजा ॥ २८६ ॥
आरुह्य रामसहिता प्रविष्टा नगरीमिमाम् ।
चतुर्दन्तगजारूढौ सहितौ रामलक्ष्मणौ ॥ २८७ ॥
पुनश्च पुष्पकारूढौ दृष्टौ सीतामुपस्थितौ ।
भर्त्रा कृतकरालम्बा तमारुह्य महागजम् ॥ २८८ ॥
पाणिना स्पृष्टचन्द्रार्का सीता लङ्कामुपागता ।
रथेनाश्वयुजा रामः पाण्डुरर्षभशोभिना ॥ २८९ ॥
पुनश्च सानुजः श्रीमान्समायातः पुरीमिमाम् ।
पुष्पकाग्रान्निपतितो मया दृष्टश्च रावणः ॥ २९० ॥

हसत्रक्ताम्बरो मुण्डः कृष्यमाणः क्षितौ स्त्रिया ।
रथेन खरयुक्तेन रक्तस्रगनुलेपनः ॥ २९१ ॥
स व्रजन्दक्षिणामाशां प्रविष्टो गोमयह्रदम् ।
काली कमलपत्राक्षी प्रमदालोलिताम्बरा ॥ २९२ ॥
दशग्रीवं गले बद्ध्वा दिशं याता यमाश्रिताम् ।
शिशुमारवराहोष्ट्रवाहनो राक्षसैर्वृतः ॥ २९३ ॥
सगीतवाद्यैर्नृत्यद्भिः पुनर्यातो दशाननः ।
तैलं पीत्वा सुवृत्ताभिर्हसन्तीभिश्च सर्वतः ॥ २९४ ॥
स्त्रीभिः परिवृता लङ्का सज्वाला[1]पतिताम्बुधौ ।
कुम्भकर्णादयो रक्तवसना गोमयह्रदम् ॥ २९५ ॥
प्रविष्टाः श्वेतशैलं तु समारूढो विभीषणः ।
प्रत्यासन्नोदयो रामः क्षयासन्नो दशाननः ॥ २९६ ॥
घोरां संतर्जनामेतां तस्मान्नार्हति जानकी ।
नेत्रोरुबाहुस्पन्दश्च दक्षिणोऽस्या वि[2]लक्ष्यते ।
शुभं शाखाश्रयो नित्यं सीतां वदति वायसः ॥ २९७ ॥

इति त्रिजटास्वप्नः ॥ ६ ॥

चिन्तयन्ती तु वैदेही रामं राजीवलोचनम् ।
दुःसहं चात्मनो दुःखं प्राणत्यागोत्सुकाभवत् ॥ २९८ ॥
भर्तुर्दूतैरिवागत्य किंचिदाश्वासिता शनैः ।
धृतिं लेभे जनकजा निमित्तैः शुभशंसिभिः ॥ २९९ ॥
हनूमानिति तत्सर्वं दृष्ट्वा श्रुत्वा च संवृतः ।
अचिन्तयत्क्षणं तस्याः सतीवृत्तेन विस्मितः ॥ ३०० ॥
कथं नु रात्रिशेषेऽस्मिन्भर्त्सितां राक्षसीगणैः ।
सीतामाश्वास्य गच्छामि रामं जीवितनिःस्पृहाम् ॥ ३०१ ॥
तूर्णमेतामसंभाष्य याते मयि यथागतम् ।
जाने जीवितमद्यैव जहाति जनकात्मजा ॥ ३०२ ॥

१. 'पतिताः' शा०. २. 'विलोक्यते' शा०.

गतोऽहं लङ्घिताम्भोधिर्लङ्कां दृष्ट्वा च जानकीम् ।
न तु संभाषितेत्येवं कथं वक्ष्यामि राघवम् ॥ ३०३ ॥
त्रस्ता पौलस्त्यमायासु मया संभाषिता सती ।
न दास्यति प्रतिवचः सीता यत्नशतैरपि ॥ ३०४ ॥
अहं संभाषणे त्वस्या राक्षसैर्यदि लक्षितः ।
तत्सर्वथा प्रयत्नोऽयं कलहान्तो भविष्यति ॥ ३०५ ॥
असंपूर्णे च कार्येऽस्मिन्युद्धं विविधसंशयम् ।
राघवप्रतिसंदेशे विघ्नतामुपयास्यति ॥ ३०६ ॥
विरलः सोद्यमो लोकः सामग्री बह्वपायिनी ।
युद्धं संदिग्धमेकस्य विपरीतनिधिर्विधिः ॥ ३०७ ॥
तस्माद्युक्तिं समाश्रित्य स्वैरं लघुतरस्वनः ।
रघुनाथकथामस्याः करोम्यग्रे सुधामयीम् ॥ ३०८ ॥
इति संचिन्त्य हनुमान्विटपान्तरिताकृतिः ।
ससर्ज वाणीं वैदेहीश्रोत्रपात्राभिगामिनीम् ॥ ३०९ ॥
बभूव भूरियशसामिक्ष्वाकूणां कुलोचितः ।
राजा दशरथो नाम धाम त्रिदशसंपदाम् ॥ ३१० ॥
रामः सुधाद्युतिस्तस्य सूनुर्गुणमहोदधिः ।
निर्दोषा कौमुदी यस्य कीर्तिराश्चर्यकारिणी ॥ ३११ ॥
सीतां दशाननस्तस्य स्वविनाशाय मायया ।
जायां जहार वीरस्य वने निवसतः सतः ॥ ३१२ ॥
स चारान्वानरान्वीरान्करानिव दिवाकरः ।
विक्षिप्य दिक्षु तां द्रष्टुमुद्यतः पद्मिनीमिव ॥ ३१३ ॥
विस्रम्भसाक्षिणीं स त्वां मनोवृत्तिमिवात्मनः ।
प्रोषितां कुशलं सीते देवः पृच्छति राघवः ॥ ३१४ ॥
इति त्रिवाक्सुधासारैः सीतामाप्लाव्य मारुतिः ।
विररामातिसंतापे क्षिप्रवर्षीव वारिदः ॥ ३१५ ॥

---

१. 'मा' शा०.

कर्णामृतं तदाकर्ण्य सहसा तरलेक्षणा ।
कीर्णोत्पलदलाश्चक्रे लोलैरालोकितैर्दिशः ॥ ३१६ ॥
किमेतदिति संभ्रान्ता सत्यमित्याप्तजीवित ।
मायेयमिति सासूया मिथ्यैतदिति मूर्छिता ॥ ३१७ ॥
स्वप्नोऽयमिति सावज्ञा निद्रासीति च सादरा ।
अस्त्वेतदिति सोत्कण्ठा न सीता निश्चयं ययौ ॥ ३१८ ॥
हर्षशोकभयाक्रान्तमाक्रान्तं दीर्घचिन्तया ।
मनः ससंशयं तस्याश्चक्रारूढमिवाभवत् ॥ ३१९ ॥
दूतः कथं रघुपतेरियतीं भूमिमागतः ।
विरुद्धस्य कथं धातुर्बुद्धिर्विपरिवर्तते ॥ ३२० ॥
विप्रलम्भबलैस्तैस्तैरसंतुष्टोऽथवा विधिः ।
दग्धं दहति दुःखेन हतमाहन्ति केवलम् ॥ ३२१ ॥
इति चिन्ताकुला तन्वी समुन्नाम्यै मुखाम्बुजम् ।
ददर्श शिंशिपास्कन्धे निभृताङ्गं प्लवंगमम् ॥ ३२२ ॥
अरिष्टसूचकः स्वप्ने दृश्यते यदि वानरः ।
प्रत्यक्षदर्शनादस्य न चायं स्वप्नविभ्रमः ॥ ३२३ ॥
रावणः कपिरूपोऽयं मायाशतविशारदः ।
परस्त्रियं समाहर्तुं कितवो मां समीहते ॥ ३२४ ॥
इत्यनेकविकल्पाभून्मोहनिस्पन्दलोचना ।
अवरुह्य तरुस्कन्धाद्वक्तुं तामाययौ कपिः ॥ ३२५ ॥
स तां विनीतः शनकैः प्रससर्प यथा यथा ।
तथा तथा रावणोऽयमित्याशङ्कत जानकी ॥ ३२६ ॥
सोऽब्रवीद्देवि दूतोऽहं रामस्य यशसां निधेः ।
मनोरथमिवोल्लङ्घ्य समुद्रं त्वामुपागतः ॥ ३२७ ॥
त्वदनुसरणध्यानतत्परस्त्वत्कथाजपः ।
कुशली राघवः सीते कानने विरहव्रते ॥ ३२८ ॥

१. 'म्याम्बुजाननम्' ख०. २. 'ल्पोऽथ' ख०.

हत्वा शक्रसुतं वीरं वालिनं वानरेश्वरम् ।
सुग्रीवाय ददौ राज्यं त्वत्कृते रघुनन्दनः ॥ ३२९ ॥
सुग्रीवः कुशलो देवि रामस्य दयितः सुहृत् ।
सेतुस्त्वद्विरहाम्भोधौ त्वदन्वेषणवान्धवः ॥ ३३० ॥
रामः कमलपत्राक्षः सिंहस्कन्धो महाभुजः ।
शशीव राकारहितस्त्वत्कृते तनुतां गतः ॥ ३३१ ॥
सुग्रीवः शाश्वतीं कीर्तिं त्वामवाप्तुं च राघवः ।
कृतक्षणावेककाया लतासक्ते फलद्वये ॥ ३३२ ॥
रामस्य दारहरणं सुग्रीवेण च संगमः ।
इयती रावणवधे सामग्री विधिनिर्मिता ॥ ३३३ ॥
त्यक्त्वाहमागतः सीतामिति नित्यमधोमुखः ।
ह्रिया शुष्यति सौमित्रिर्याच्ञयेव कुलोन्नतः ॥ ३३४ ॥
स ते कृताञ्जलिर्मातः कुशलं परिपृच्छति ।
तप्तस्तापेन रामस्य सूर्यकान्तो रवेरिव ॥ ३३५ ॥
इति ब्रुवाणो जानक्या पृष्टः पवननन्दनः ।
सुग्रीवसख्यं विपुलामूचे रामकथां पुरः ॥ ३३६ ॥
निखिलं रामवृत्तान्तं निवेद्यास्यै प्लवंगमः ।
प्रददौ रामनामाङ्कं प्रत्ययायाङ्गुलीयकम् ॥ ३३७ ॥
सा तदादाय लोलाक्षी हर्षवाष्पाप्लुतस्तनी ।
अभूत्पतिमिवालोक्य पुलकालंकृताकृतिः ॥ ३३८ ॥
सावदन्मम दिष्ट्यासौ पतिर्जीवति राघवः ।
अशेषं राक्षसकुलं यस्य कोपानलाहुतिः ॥ ३३९ ॥
रामसुग्रीवयोः सख्यं स विन्ध्यो नाम राक्षसः ।
वृद्धो न्यवेदयन्मह्यं जनस्थानादुपागतः ॥ ३४० ॥
कच्चित्स्मरति मे नाथः कच्चिन्न शिथिलादरः ।
कच्चिन्न दारहरणप्रतीकारो विलम्बते ॥ ३४१ ॥

१. 'न' शा०.

यद्यहं तस्य वीरस्य दयिता हृदये स्थिता ।
तत्किमद्यापि लङ्केयं न विशीर्णा सराक्षसा ॥ ३४२ ॥
दैवं प्रमाणमाश्रित्य नोद्योगे यः प्रवर्तते ।
तेन [1]कण्ठगतच्छिद्रे घटे जलमिवोद्धृतम् ॥ ३४३ ॥
देशकालोपपन्नस्य पौरुषस्याविरोधिनः ।
अविसंवादिनी य[2]स्माद्बाणस्येव फलोद्गतिः ॥ ३४४ ॥
अपि पौरुषमास्था[3]य रामः प्रक्षालयिष्यति ।
इमां पराभवम्लानिं रावणान्तःपुराश्रुभिः ॥ ३४५ ॥
इति सीतावचः श्रुत्वा बभाषे पवनात्मजः ।
जीविताशां कथं रामस्त्वां विसरति वल्लभाम् ॥ ३४६ ॥
भूमिशायी निराहारः स्वशरीरेऽपि निःस्पृहः ।
मुनिरेव सुसंवृत्तः किं तु रागोऽस्य वर्धते ॥ ३४७ ॥
अचिरेणैव काकुत्स्थः करिष्यति महीमिमाम् ।
पौलस्त्यगात्रैः पतितैर्गि[4]रिदुर्गवतीमिव ॥ ३४८ ॥
दशाननकचाकर्षप्रौढरामशराङ्गुलिः ।
करः करालः कालस्य प्रवेक्ष्यति पुरीमिमाम् ॥ ३४९ ॥
लङ्केयं रघुनाथस्य नाद्यापि श्रुतिगोचरम् ।
गता तेन विलम्बोऽत्र मृत्योरागमनोत्सवे ॥ ३५० ॥
स्कन्धपीठाधिरूढां त्वामद्यैवादाय खेचरः ।
राघवं लङ्घिताम्भोधिर्गच्छामि यदि मन्यसे ॥ ३५१ ॥
त्वां प्राप्य राघ[6]वः क्षिप्रं क्षपयिष्यति रा[5]क्षसात् ।
स्वस्थे चित्ते हि निष्पत्तिः कार्याणामुपजायते ॥ ३५२ ॥
वानराणां प्रियाः शैलास्तैः समूलफलोदकैः ।
तृप्तः समाज्ञारुचिरं सानुजं विपुलाशयम् ॥ ३५२ ॥

---

१. 'कार्यं शतच्छिद्रे' शा०. २. 'निलं' शा०. ३. 'श्रित्य' शा०. ४. 'रा' शा०.
५. 'क्षसान्क्षि' शा०. ६. 'घवः' शा०.

शपे त्वच्चरणाभ्यां च तूर्णं द्रक्ष्यामि राघवम्।
इति ब्रुवाणं प्लवगं प्रत्यभाषत जानकी ॥ ३५४ ॥
कथं नु मुष्टिमात्रस्त्वमितो मां नेतुमर्हसि।
श्रुत्वैतदस्यै स्वं रूपं कपिर्महददर्शयत् ॥ ३५५ ॥
अवज्ञां प्रीतिवाक्येऽपि न सहन्तेऽभिमानिनः।
प्रवर्धमानः सहसा पुनर्विन्ध्य इवोत्थितः ॥ ३५६ ॥
प्रभाव इव रामस्य विश्वव्यापी बभूव सः।
करावलम्बनं नूनं सहे नान्यस्य जातुचित् ॥ ३५७ ॥
इहैव पश्य साधो त्वं कियत्संतर्जितां सतीम्।
दंष्ट्राकरालवदनः सोऽवदत्सनिशाचराम् ॥ ३५८ ॥
लङ्कां नेतुं समर्थोऽहं विकटाट्टालमौलिनीम्।
तमूचे मैथिली हर्षविस्मयोत्फुल्ललोचना ॥ ३५९ ॥
जाने त्वां तेजसां राशिं मारुते क्षम्यतां भवान्।
अवज्ञामन्थरं वक्तुं प्रगल्भन्ते महत्स्वपि ॥ ३६० ॥
मुग्धाः स्वभावात्प्रायेण योषितस्तरलाशयाः।
गगनं गरुडस्येव व्रजतस्ते तरस्विनः ॥ ३६१ ॥
वेगेन धर्तुमात्मानमबला कथमुत्सहे।
व्योम्ना प्रभञ्जनजवे मामादाय गते त्वयि ॥ ३६२ ॥
अभिद्रुतेषु रक्षःसु विद्धि मामम्बुधौ च्युताम्।
न च मे परगात्रेषु स्पर्शो युक्तः कुलस्त्रियाः ॥ ३६३ ॥
तस्मात्त्वं गच्छ सावेगं स्वयमायातु राघवः।
पश्य मां मलदिग्धाङ्गीं तैर्जितां राक्षसीगणैः ॥ ३६४ ॥
प्रियां रामस्य महिषीं दीनां स्थण्डिलशायिनीम्।
इति सीतावचः श्रुत्वा हनूमान्साश्रुलोचनः ॥ ३६५ ॥
पुनः शरीरं संक्षिप्य तामूचे शीलशालिनीम्।
भवत्या सत्यमेवैतद्युक्तमुक्तं कुलोचितम् ॥ ३६६ ॥

१. 'गोपुरान्' शा०. २. 'त्वद्वचसा तूर्णं' शा०. ३. 'भर्त्सितां' शा०.

सदृशं भाषसे सर्वं शीलस्याभिजनस्य च ।
तीर्णोऽब्धिर्विचिता लङ्का त्वमिहस्थावलोकिता ॥ ३६७ ॥
अभिज्ञानं तु रामाय किमादाय व्रजाम्यहम् ।
एतदाकर्ण्य वैदेही पुनः प्रोवाच मारुतिम् ॥ ३६८ ॥
वाच्यः संप्रत्ययायैव त्वया रहसि राघवः ।
विलोलमञ्जरीपुञ्जकिञ्जल्कै रञ्जितानिले ॥ ३६९ ॥
विकटे[1] चित्रकूटस्य रम्ये मन्दाकिनीतटे ।
अहं त्वदङ्कपर्यङ्के जलकेलिश्रमाकुला ॥ ३७० ॥
निषण्णा त्वन्मुखाम्भोजलोललोचनषट्पदा ।
ऐषीकेनानिलजवः शक्रसूनुसहेलया ॥ ३७१ ॥
नखोल्लेखविधायी मे काणः काकः कृतस्त्वया ।
अद्यापि हृदये लीना ललाटे लिखितापि च[2] ॥ ३७२ ॥
त्वया मनःशिलोल्लेखलीलातिलकमञ्जरी ।
अभिमान इवायं मे रामप्रणयसंभवः ॥ ३७३ ॥
त्वदुक्तिप्रत्ययायास्तु मणिं वेणीविभूषणम् ।
इत्युक्त्वा वेणिकामस्मै विमुच्य रुचिरं मणिम् ॥ ३७४ ॥
प्रददौ वासरालोकमिव पुञ्जीकृतं निशि ।
मणेः प्रभाकरस्तस्य[3] तिरस्कृतनिशाकरः ॥ ३७५ ॥
रामदर्शनयात्रायां हर्षहास इवाबभौ[4] ।
दत्त्वा मणिं कपिं सीता पुनरूचे कृताञ्जलिः ॥ ३७६ ॥
अधुना त्वत्प्रभावाङ्के रामकार्यं विवर्धते ।
हृतेति लोकविदितं त्रस्तेति स्त्रीजनोचितम् ॥ ३७७ ॥
शुष्यतीति प्रलापो यः संस्थासीत्यतिनिष्ठुरम् ।
विस्तृतासीत्यनुचितं दयितासीति चापलम् ॥ ३७८ ॥
जीवन्तीत्यतिलज्जेयं शोकार्तेति किमद्भुतम् ।
असिन्दुःखार्णवे मग्नां रघुनाथः कृपानिधिः ॥ ३७९ ॥

१. 'कटके' शा०. २. 'मे' शा०. ३. 'भ' शा०. ४. 'भवन' शा०.

विचाराचारसहितो मां समुत्तारयिष्यति ।
अथ वा सर्वमेव त्वं जानीषे धीमतां वर ॥ ३८० ॥
त्वयैव तस्य ह्युचितं तत्तद्वाच्यः पतिर्मम ।
इति निद्रायमाणासु राक्षसीषु प्लवंगमः ।
श्रुत्वा सीतावचः क्षिप्रं तामामन्त्र्य शनैर्ययौ ॥ ३८१ ॥

इति हनुमत्सीतासंभाषणम् ॥ ७ ॥

सीतां प्रदक्षिणीकृत्य प्रस्थितः पवनात्मजः ।
वर्धमानवपुर्वीरः कार्यशेषमचिन्तयत् ॥ ३८२ ॥
रामकार्यं कृतं तावद्यदर्थं प्रेषिता वयम् ।
तदुक्ताभ्यधिकं कर्तुमधुना मे मनोरथः ॥ ३८३ ॥
एककार्यविसृष्टानामनेकार्थविधायिनाम् ।
स्वामिसन्मानसफलं जीवितं वर्धमायिनाम् ॥ ३८४ ॥
निशि सुप्तजनां लङ्कां दृष्ट्वा चोर इवाखिलाम् ।
गमिष्याम्यपरिज्ञातः कथं भुजबलोऽर्जितः ॥ ३८५ ॥
स्वीकारविमुखा घोरा न भिद्यन्ते सुसंहताः ।
नार्थिनो जितवित्तेशा युद्धार्हा एव राक्षसाः ॥ ३८६ ॥
तस्मादशोकवनिकां दयितां राक्षसप्रभोः ।
युद्धदूतीं करोम्येष निखिलोद्धूलितद्रुमाम् ॥ ३८७ ॥
इति संचिन्त्य हनुमान्त्रसपूर्णाश्रुवर्षिणः ।
बभञ्ज पादपान्स्रस्तपुष्पपल्लवभूषणान् ॥ ३८८ ॥
अश्वकर्णैर्निपतितैर्नागैश्च शकलीकृतैः ।
रणाङ्गणमिवोद्यानमभूदस्तशिलीमुखम् ॥ ३८९ ॥
दवेषु पतितेष्वग्रे बभुर्विवलिता लताः ।
उद्भूतालिकुलालापैः साक्रन्दा इव योषितः ॥ ३९० ॥
महातरूणां पततां त्रस्तानां च पतत्रिणाम् ।
पूरिताशावकाशेन शब्देन बुबुधे जनः ॥ ३९१ ॥

---

१. 'न जाने केन वचसा' शा०. २. 'सं' शा०. ३. 'वैशस्याम्' क. ४. 'रम्यमुचितं' शा०.

बालप्रवालशालेषु रत्नतालीवनेषु च ।
सुवर्णकर्णिकारेषु भग्नेष्वनिलजन्मना ॥ ३९२ ॥
किमेतदिति संभ्रान्ता विस्मयामर्षनिश्चलाः ।
राक्षस्यो ददृशुर्वीरं तोरणे तरणिप्रभम् ॥ ३९३ ॥
विदारितोऽयं मन्दारश्छिन्ना कनककेतकी ।
चारुचामीकरमयश्च्युतश्चूतोऽयमुन्नतः ॥ ३९४ ॥
पाटितः पाटलश्चायमशोकः शकलीकृतः ।
इत्यभूद्विपुलः शब्दः क्षणदाचरयोषिताम् ॥ ३९५ ॥
ताः समभ्येत्य वैदेहीमूचुर्विकृतविग्रहाः ।
उन्मूलिततरुः कोऽयं स्वैरं संभाषितस्त्वया ॥ ३९६ ॥
तच्छ्रुत्वा साब्रवीन्नाहं जानाम्येनं तरस्विनम् ।
मायाविनो गतिं वेत्ति मायी युष्मद्विधो जनः ॥ ३९७ ॥
इति ब्रुवाणां निर्भर्त्स्य सीतां नक्तंचरस्त्रियः ।
अन्तःपुरोदरगतं गत्वा रावणमूचिरे ॥ ३९८ ॥
देव संभाषिता सीता स्वैरं स्वैरेण वाङ्मयैः ।
भग्नं च प्रमदोद्यानं वानरेण तरस्विना ॥ ३९९ ॥
रतिभोगप्रणयिनी सा तवात्यन्तवल्लभा ।
अशोकवनिका तेन चपलेन प्रधर्षिता ॥ ४०० ॥
भ्रष्टकर्पूरतिलका विनष्टागुरुपल्लवा ।
संतर्जिता तु दुष्टेन भग्निता वाटिका शुभा ॥ ४०१ ॥
मदनाक्रान्ततिलका विमर्दच्युतचन्दना ।
अशोकाः शोकदास्तत्र निष्फला बकुलावली ॥ ४०२ ॥
त्रस्ता सर्वविहंगाली लवङ्गालीनकेसरा ।
निर्दयेन त्वया भुक्ता सुकामारीव कामिनी ।
सा तवोद्यानवसुधा लूना तेन प्रमादिना ॥ ४०३ ॥
देवी मन्दोदरी येभ्यः कर्णपूराय पल्लवम् ।

त्वदाज्ञयैव लभते तरवस्ते निपातिताः ॥ ४०४ ॥
सहकारवने भग्ने छिन्ने चन्दनकानने ।
मदनस्य न जानीमः क्व भविष्यति संश्रयः ॥ ४०५ ॥
हृतपुष्पाम्बरा तेन गाढदन्तनखक्षतैः ।
सापि कल्पतरुश्रेणी वेश्येव विवशीकृता ॥ ४०६ ॥
तेनार्दितद्विजगणा विनष्टगुणमण्डला ।
जनता कुनृपेणेव परिभूता सरोजिनी ॥ ४०७ ॥
न विसृष्टो बलवता यदि नाम स केनचित् ।
तत्कथं केलियोगस्य कपेः सा प्रभविष्णुता ॥ ४०८ ॥
वरुणेन नवीभूतः कायमस्य प्रगल्भता ।
वराकः कः कुबेरो वा शक्तिर्नास्त्येव वज्रिणः ॥ ४०९ ॥
रामेण प्रेषितो नूनं स दूतः कपिरूपधृक् ।
यत्सीतासंश्रयस्तेन रक्षितः शिंशिपातरुः ॥ ४१० ॥
स सुरो वासुरो वास्तु वानरो वा नरोऽथ वा ।
देव प्रयातु सहसा त्वत्कोपाग्निपतङ्गताम् ॥ ४११ ॥
स्वल्पोऽप्यनल्पतां याति मेघस्तोक इवाम्बरे ।
नीचावमानमलिनो मन्युर्मनसि मानिनाम् ॥ ४१२ ॥
इति तासां वचः श्रुत्वा सभ्रूभङ्गां मुखावलीम्[1] ।
स चक्रे वक्रहोमाग्निलग्नधूमलतामिव ॥ ४१३ ॥

इत्यशोकवनिकाभङ्गः ॥ ८ ॥

प्रौढकोपाग्नितप्तोऽपि तूष्णीमासीद्दशाननः ।
विचारमन्थरासत्यमल्पेषु महतां रुषः ॥ ४१४ ॥
तेन मानससंभूता निर्दिष्टा रक्षसां गणाः ।
निग्रहाय कपेर्वीराः किंकरा राम निर्ययुः ॥ ४१५ ॥
अथाशीतिसहस्राणि गदामुद्गरधारिणाम् ।
रक्षसां मेघवर्णाणां[2] चक्रुर्ग्रस्ताम्बरा दिशः ॥ ४१६ ॥

---

१. 'मावलीमि' शा०. २. 'र्णानां' शा०.

ते गत्वा ददृशुर्घोरं प्लवंगं गिरिविग्रहम् ।
चैत्य[1]प्रासादमारूढमदृश्यं तेजसां निधिम् ॥ ४१७ ॥
शस्त्रवीचिचया लोलं संरम्भात्समभिद्रुतम् ।
[2]रक्षसांगणमालोक्य ननाद पवनात्मजः ॥ ४१८ ॥
तस्य शब्देन संत्रस्तत्रैलोक्याश्चर्य[3]कारिणा ।
नवो बभूव लङ्कायां कालहुंकारसंभ्रमः ॥ ४१९ ॥
व्यशीर्यत तदाक्रान्तः प्रासादो रत्नशेखरः ।
शक्राशनिहतः क्षिप्रं रोहणाद्रिरिवापरः ॥ ४२० ॥
निर्घोषस्तस्य लाङ्गूलसावेगास्फालनोद्भवः ।
लेभे भुवनगर्भेषु सुचिराभ्यासदीर्घताम् ॥ ४२१ ॥
उत्सृष्टां राक्षसभटैः शस्त्रवृष्टिं निरन्तराम् ।
स विधूयैव जग्राह परिघं तोरणाश्रयम् ॥ ४२२ ॥
स तेन राक्षसवनं जघान घननिःस्वनः ।
क्षणार्धेनाभवद्भूमिश्छन्ना स्फारशिरःफलैः ॥ ४२३ ॥
स राक्षसक्षयारम्भे जगाद निनदन्मुहुः ।
दिग्भिर्मत्ताभ्यनुमतः प्रीत्या प्रतिरवैरिव ॥ ४२४ ॥
जयत्याज्ञाहताराातिग्रामो रामः सलक्ष्मणः ।
तत्प्रसादसितच्छत्रः सुग्रीवश्च महीपतिः ॥ ४२५ ॥
जगच्चूडामणेस्तस्य दूतोऽहं जानकीपतेः ।
रक्षःक्षयेऽस्मिन्विपुले प्रारम्भविजयध्वजः ॥ ४२६ ॥
न रावणसहस्रं मे समरे गणनास्पदम् ।
मद्विसृष्टाश्च सन्त्यन्ये तद्भृत्यपरमाणवः ॥ ४२७ ॥
इति तस्य वचः श्रुत्वा गगनस्थस्य राक्षसाः ।
तमदृश्यं ततश्चक्रुर्घोरशस्त्रास्त्रवृष्टिभिः ॥ ४२८ ॥
ततः समभिपत्याशु वेगेन पवनात्मजः ।
विदधे परिघाघातैः कदनं पिशिताशिनाम् ॥ ४२९ ॥

---

१. 'दैत्य' शा०. २. 'रक्षःसागर' शा०. ३. 'कम्प' शा०. ४. 'रवितैरिव स' शा०.

निष्पिष्टे किंकरकुले हतशेषा निशाचराः ।
तूर्णं न्यवेदयन्गत्वा दशग्रीवाय तत्क्षणम् ॥ ४३० ॥
नवावतारस्फारेण समाक्रान्तः स मन्युना ।
आदिदेश प्रहस्तस्य तनयं जम्बुमालिनम् ॥ ४३१ ॥

इति किंकरवधः ॥ ९ ॥

स विसृष्टः कपिवधे स्वामिना मानकारिणा ।
रथी कनकसंनाहः प्रययौ धन्विनां वरः ॥ ४३२ ॥
तमायान्तं समालोक्य स्थितस्तोरणशेखरे ।
हृष्टो जजृम्भे हनुमान्समरारम्भसादरः ॥ ४३३ ॥
तं जम्बुमाली निशितैर्बाह्वोरुरसि चाशुगैः ।
दूरादपूरयद्बाणैर्गिरिं सूर्य इवांशुभिः ॥ ४३४ ॥
क्रुद्धः पवनजस्तूर्णमादाय विपुलां शिलाम् ।
चिक्षेप तस्मै स च तां चिच्छेद दशभिः शरैः ॥ ४३५ ॥
हनुमान्सालमुत्पाट्य तं समभ्याद्रवज्जवात् ।
तं चाकीर्णं शरैश्चक्रे वृक्षं विक्षिप्य राक्षसः ॥ ४३६ ॥
ततः परिघमादाय घोरघोषभ्रमं युधि ।
अपातयत्कपिवरः स्यन्दनाज्जम्बुमालिनम् ॥ ४३७ ॥
परिघाघातनिष्पिष्टमलक्ष्यावयवं वपुः ।
कालसूदाहृतं तस्य श्लक्ष्णमांसमिवाभवत् ॥ ४३८ ॥
श्रुत्वा प्रहस्ततनयं निष्पिष्टसरथायुधम् ।
सप्त मन्त्रिसुतान्वीरानादिदेश दशाननः ॥ ४३९ ॥

इति जम्बुमालिवधः ॥ १० ॥

सप्तसप्तिप्रभास्तस्य दीप्तकङ्कटकुण्डलाः ।
ते समेत्य हरिं चक्रुः पिङ्गं हेमशरांशुभिः ॥ ४४० ॥
बाणवृष्टिं तदुत्सृष्टां विलङ्घ्याधिकविक्रमः ।
अलातचक्रप्रतिमः क्षणं बभ्राम मारुतिः ॥ ४४१ ॥

---

१. 'सप्त' शा०. २. 'कपिं' शा०.

तलाघातैर्नखैर्दन्तैः पञ्चामूरुजवेन च ।
हत्वा तान्मारुतिस्तीर्णमनायातानिवाकरोत् ॥ ४४२ ॥
ससैन्यान्मन्त्रितनयान्हतानाकर्ण्य रावणः ।
पञ्चसेनाग्रकान्कोपादादिदेश कपेर्वधे ॥ ४४३ ॥

इति मन्त्रितनयवधः ॥ ११ ॥

ते विरूपाक्षयूपाक्षदुर्धरप्रघसाः समम् ।
भासकर्णश्च तं देशमाययुर्विपुलैर्बलैः ॥ ४४४ ॥
अप्रमादेन योद्धव्यमित्युक्त्वा प्रभुना स्वयम् ।
ते मारुतिं समभ्येत्य चक्रुः शैरमयं वपुः ॥ ४४५ ॥
दुर्धरेणाधिकं बाणैराहतः कपिकुञ्जरः ।
खं समुत्पत्य सहसा पपातास्य रथे जवात् ॥ ४४६ ॥
तद्गात्राभिहता क्षिप्रं साश्वसूतरथध्वजः ।
बभूव दुर्धरोऽन्येषां यमवर्त्मपुरःसरः ॥ ४४७ ॥
दुर्धरेऽभिहते वीरे पुनरुत्पतितं नभः ।
तं विरूपाक्षयूपाक्षावुत्पत्त्याभिद्रुतौ जवात् ॥ ४४८ ॥
मुद्गराभ्यां समं ताभ्यां कपिर्वक्षसि ताडितः ।
तौ समादाय बाहुभ्यां निपपात महीतले ॥ ४४९ ॥
ततः सालप्रहारेण तौ हत्वा कपिपुंगवः ।
प्रघसं भासकर्णं च वायुवेगः समाद्रवत् ॥ ४५० ॥
स ताभ्यां वीक्षितः क्षिप्रं शूलपट्टिशसायकैः ।
गिरिशृङ्गेण गुरुणा निष्पिपेष निशाचरौ ॥ ४५१ ॥
पञ्चसेनाग्रगान्वीरान्विज्ञाय युधि पातितान् ।
पौलस्त्यः स्वसुतं युद्धे श्लक्ष्णमक्षं निरैक्षत ॥ ४५२ ॥

इति दुर्धरादिवधः ॥ १२ ॥

स हेमसंनाहवृतः सैन्येन महता वृतः ।
प्रययौ ककुभः कुर्वन्ध्वजपट्टाट्टहासिनीः ॥ ४५३ ॥

---

१. 'श्रममयं' शा०. २. 'वज्रवेगः' शा०. ३. 'युद्धदक्षमक्षं' शा०.

तस्मिन्समुद्यते योद्धुं चकम्प साचला मही ।
क्षोभोऽभवन्महाम्भोधेः प्रववौ न च मारुतः ॥ ४५४ ॥
स हेमपुङ्खैर्विशिखैः समापूर्य प्लवंगमम् ।
उन्ननादः सुरस्त्रीणां संत्रासगुरुतां गतः ॥ ४५५ ॥
सुरराजरणोत्साहवज्रोल्लिखितवक्षसम् ।
कुमारमक्षं हनुमान्सावष्टम्भमयोधयत् ॥ ४५६ ॥
ततो बभूव गगने योधयोः समरोत्सवः ।
निरालम्बस्य च कपेः सरथस्य च रक्षसः ॥ ४५७ ॥
तुलाभिघातोन्मथितस्तस्य मारुतिना रथः ।
पपात गगनाकारः सच्छत्रध्वजकूबरः ॥ ४५८ ॥
स खड्गः श्यामले व्योम्नि विचरन्खड्गचर्मभृत् ।
धैर्यराशेरपि कपेर्मतिमोहमिवाकरोत् ॥ ४५९ ॥
ततश्चरणयोर्वीरं तमादाय प्लवंगमः ।
सहस्रशः परिभ्राम्य क्षितौ क्षिप्रमपातयत् ॥ ४६० ॥
तं पिष्टमुकुटं कीर्णकेयूरं दलिताङ्गदम् ।
निर्मथ्योद्गीर्णरुधिरं व्यसुं तत्याज मारुतिः ॥ ४६१ ॥
अबालचरिते बाले हते तस्मिन्सुरद्विषि ।
शशी मुमोच सुचिरात्स्वर्गविष्टं ससाध्वसम् ॥ ४६२ ॥

इत्यक्षवधः ॥ १३ ॥

हते कुमारे पौलस्त्यो न शुशोच रु[1]षा ज्वलन् ।
न ह्यमर्षपदे शो[2]कैः प्रभवत्यभिमानिनाम् ॥ ४६३ ॥
स निश्वसन्क्षणं ध्यात्वा जगादेन्द्रजितं सुतम् ।
प्रभावेण प्लवंगस्य परं विस्मयमागतः ॥ ४६४ ॥
कियती विक्रमश्लाघा क्रियते जयिनस्तव ।
अन्वर्थयुक्तं नामैव यस्य लोकेषु गीयते ॥ ४६५ ॥

---

१. 'क्रुधा' शा०. २. दुःखं' शा०.

अल्पेऽप्यनल्पचरिता युज्यन्ते यद्भवद्विधाः।
शत्रुलेशासहत्वं तत्त्वनयस्याभिशङ्किनः॥ ४६६॥
कपेश्चिन्त्यो वधे तस्य विसृष्टाः सैन्यनायकाः।
हतास्तेऽपि वधे सेयमद्भुताज्ञाप्रगल्भता[1]॥ ४६७॥
दुर्धरप्रमुखा वीरा वानरेण निपातिताः।
दैवमत्र परं मन्ये धिगास्तां पौरुषे वृथा॥ ४६८॥
प्रभावे नास्ति विश्वासः शक्तिर्नूनमनिश्चिता।
कालैन्द्रजालिकस्यास्य विचित्रं किं न दृश्यते॥ ४६९॥
दैवप्रतीपं चरतस्तवैवैकस्य विश्रुता।
सर्वत्राकुण्ठितोत्साहा शक्तिः स्वच्छन्दचारिणी॥ ४७०॥
अधुना वानरवधे त्वमेवास्मिन्प्रतिक्रिया।
तस्यापि यत्कृतान्तस्य दंष्ट्रोन्मूलनलम्पटः॥ ४७१॥
इति शासनमादाय जनकस्य सुरेन्द्रजित्।
व्याडैश्चतुर्भिः संयुक्तं रथमारुह्य निर्ययौ॥ ४७२॥
तस्मिन्युद्धोद्यते विश्वप्रलयारम्भविभ्रमः।
बभूव सर्वभूतानां भुवनाकल्पविप्लवः[2]॥ ४७३॥
कालुष्यकलिले व्योम्नि ध्वान्तध्वस्तजगत्त्रये।
बभूवुर्दुर्निमित्ता ये रेणुप्रावरणा दिशः॥ ४७४॥
ततः क्षणमभूद्व्योम्नि युद्धं रक्षःप्लवंगयोः।
निःसरत्सायकशिलाज्वलज्जाताग्निपिङ्गलम्॥ ४७५॥
अथेन्द्रजिद्भुजोत्सृष्टशरासारनिरन्तरे।
अलग्नाङ्गश्चचारैव वीरो मारुतिरम्बरे॥ ४७६॥
विशिखेषु विलक्षेषु विलक्ष्येष्विव रक्षसः।
क्षणं ध्यात्वा जिघृक्षुस्तं वीरो ब्राह्ममाददे॥ ४७७॥
प्रादुर्भूते ततस्तस्मिन्नस्त्रे पाशशतैः कपिः।
बद्धः क्षितौ निपतितः कार्यशेषमचिन्तयत्[3]॥ ४७८॥

१. 'प्रगल्भते' शा० २. 'व्यूहे' क. ३. 'संभ्रमः' शा०

ब्रह्मास्त्रवारणे शक्तिरस्ति मे ब्रह्मणो वरात् ।
तथापि धारयाम्येतदस्त्रं मन्त्रस्य गौरवात् ॥ ४७९ ॥
पाशबद्धस्य चावश्यं दर्शनं मे भविष्यति ।
दशकण्ठसभास्थाने संवादश्च चिरं स्थितः ॥ ४८० ॥
इति चिन्तयतस्तस्य तूर्णं विग्रहमाग्रहात् ।
रज्जुवल्कलवल्लीभिर्बबन्धुः पिशिताशिनः ॥ ४८१ ॥
रज्जुबद्धस्य तस्यास्त्रपाशाः क्वापि स्वयं ययुः ।
न महान्तः सहन्ते हि प्राकृतैः समशीर्षकाम् ॥ ४८२ ॥
अस्त्रमुक्तोऽपि मिथ्यैव दर्शयन्बन्धुमात्मनः ।
कृष्यमाणश्च रक्षोभिः सर्वं सेहे महाकपिः ॥ ४८३ ॥
इति हनुमद्ग्रहणम् ॥ १४ ॥
ततो निशाचरैर्नीतः क्षिप्रं रक्षःपतेः सभाम् ।
प्रभामिव प्रतापाग्ने रक्तरत्नां ददर्श सः ॥ ४८४ ॥
तां प्रविश्य वृतां वीरः श्रेणीभिस्त्रिदशद्विषाम् ।
स्फाररत्नासनासीनं राक्षसेन्द्रं व्यलोकयत् ॥ ४८५ ॥
द्राग्वध्यो बहिरेवायं दृष्टेन किमनेन नः ।
इत्यनल्पोऽभवज्जल्पस्तत्र तं वीक्ष्य रक्षसाम् ॥ ४८६ ॥
कपिर्दृष्ट्वा दशग्रीवं त्रैलोक्यविजयोर्जितम् ।
सृजन्तं रत्नमुकुटत्विषा बालातपश्रियम् ॥ ४८७ ॥
चामराञ्चितहस्तानां कान्तानां गण्डभित्तिषु ।
चित्रपत्रनखोल्लेखाः कुर्वाणं भूषणांशुभिः ॥ ४८८ ॥
सुस्कन्धैः स्फारकेयूरकिरणारुणपल्लवैः ।
हारांशुकुसुमस्मेरैर्भूषितं भुजपादपैः ॥ ४८९ ॥
वज्राद्रिभङ्गगुरुभिर्वक्षोभिर्व्यक्तविक्रमैः ।
आसेव्यमानं रक्षोभिस्त्रिजगज्जयलक्षणैः ॥ ४९० ॥
निर्भर्त्सितो वेत्रिगणैः पुरः परुषवादिभिः ।
अचिन्तयत्क्षणं गाढं विस्मयावेगनिश्चलः ॥ ४९१ ॥

अहो धैर्यममर्यादमहो साम्राज्यमूर्जितम् ।
अहो सुरासुरश्लाघ्याः सावष्टम्भा विभूतयः ॥ ४९२ ॥
अहो बतास्य पुरतः प्रकम्पन्ते महौजसः ।
न वचांसि न चेतांसि न तेजांसि तपांसि वा ॥ ४९३ ॥
बलं कैलासमूलेषु प्रतापः सुरवेश्मसु ।
प्रयाति लक्ष्यतामस्य श्रीराश्रितगृहेषु च ॥ ४९४ ॥
समस्तभुवनैश्वर्यमर्हत्येष न संशयः ।
यदि न स्यादयं पापः क्रूरः क्रूरतरैर्वृतः ॥ ४९५ ॥
सदाचारः श्रियो मूलं प्रभावे गुणसंभवः ।
इति प्रवादोऽप्येतेन बलान्मन्ये तिरस्कृतः ॥ ४९६ ॥
अहो दुर्नयपक्षस्य व्यसनस्यायता गतिः ।
इयतीं भूमिमारूढा ह्रियन्ते येन संपदः ॥ ४९७ ॥
इति विस्मयनिस्पन्दे चिन्तयत्यनिलात्मजे ।
कोऽयं कस्य कुतो वेति प्रहस्ते रावणोऽब्रवीत् ॥ ४९८ ॥
ततो जगाम प्लवगं प्रहस्तः शासनात्प्रभोः ।
प्रीतिप्रसादितोष्ठाग्राह्यां संदर्शयन्निव ॥ ४९९ ॥
कपे कथय कस्यासि न भयं विद्यते तव ।
न हि नाम निपात्येषु पतन्ति प्रभुदृष्टयः ॥ ५०० ॥
मन्ये न प्रेषितस्तावत्त्वं शक्रवरुणादिभिः ।
ललाटे लोकपालानां न शक्तिर्लिखितैव सा ॥ ५०१ ॥
लङ्काभिलाषिणो विष्णोः कुतः सा प्रभविष्णुता ।
ते तस्य जीर्णाः सततं स्वाङ्गेष्वेव मनोरथाः ॥ ५०२ ॥
माया कथय कस्येयमात्मक्षयविधायिनी ।
वदतस्तव मोक्षोऽस्ति मौने निःसंशयो वधः ॥ ५०३ ॥
इति ब्रुवाणे सावज्ञं प्रहस्ते पवनात्मजः ।
उवाच रावणाग्रेऽपि प्रतिभाभरणं वचः ॥ ५०४ ॥

त्रिदशैर्नास्ति मे सख्यं प्रेषितोऽहं न विष्णुना।
उद्यानं राक्षसपतेर्दर्शनाय मया हतम्॥ ५०५॥
शक्तेनापि प्रतीकारे मयास्त्रं न निवारितम्।
अस्त्रपाशविमुक्तोऽहं स्वयं त्वां द्रष्टुमागतः॥ ५०६॥
दूतोऽहं रघुनाथस्य जयिनो जानकीपतेः।
सुग्रीवस्य च तत्प्रीतिप्राप्तराज्यनिजश्रियः॥ ५०७॥
कुशलं प्रीतिकुशलः स्पृष्ट्वा स्पष्टीकृताशयः।
समादिशति देवस्त्वां सुग्रीवः सूर्यनन्दनः॥ ५०८॥
विस्रम्भधाम्नः सुहृदः प्रभोः सर्वप्रदस्य वा।
मया गृहीतं रामस्य सीतान्वेषणशासनम्॥ ५०९॥
तस्य देवस्य भृत्येषु मद्विधेष्वभिमानिषु।
जीवत्सु कः स्वयं शेते कृत्वा किल्बिषविप्लुषम्॥ ५१०॥
अहं तु सुग्रीवगिरा हनूमान्पवनात्मजः।
सीतां विचेतुं जलधिं विलङ्घ्याप्तः पुरीमिमाम्॥ ५११॥
अस्मद्विशिष्टा बहवो दिक्षु सुग्रीवशासनात्।
चरन्ति जानकीहेतोरगम्यासु महीष्वपि॥ ५१२॥
इह सीता मया दृष्टा निरुद्धा बलिना त्वया।
च्युतेव दुर्निमित्ताय तन्वी शशिकला दिवः॥ ५१३॥
सदाचारनिरुद्धेषु निषिद्धेष्वात्मघातिषु।
धीधना न निवर्तन्ते त्वद्विधाः किल कर्मसु॥ ५१४॥
नयप्रणयिनी लक्ष्मीः सत्त्वप्रणयिनी धृतिः।
कुलीनानां भवत्येव धर्मप्रणयिनी मतिः॥ ५१५॥
न शीलविकला वृत्तिर्न चासत्यव्रतं वचः।
न विभूतिर्यशःशून्या भवत्युचितचेतसाम्॥ ५१६॥
नेयं विराजते राजन्वर्जितेवामृतत्विषा।
निशा नयोज्झिता लक्ष्मीरक्षीणतिमिरावृता॥ ५१७॥

न हि पश्यामि तं देशं कालशक्तिरिवायता ।
सा लक्ष्मणशरश्रेणी यत्र भग्नमनोरथा ॥ ५१८ ॥
इदं रक्षःपते रक्ष लङ्कालंकरणं वपुः ।
न नाम रामविशिखाः क्षमन्ते क्षणमप्रियम् ॥ ५१९ ॥
कस्तां शक्नोति तरसा धर्तुं जनकनन्दिनीम् ।
चरन्ति यत्कृते पश्चान्मार्गणा राममार्गणाः ॥ ५२० ॥
दिग्जयार्जितमैश्वर्यं कायक्लेशार्जितं तपः ।
सर्वमेकपदे नष्टं[1] परदारधिया तव ॥ ५२१ ॥
इमाः शीलविरामेण कामेन गुणवैरिणा ।
रणाभिमानवामेन[2] न क्षम्यन्ते विभूतयः ॥ ५२२ ॥
मार्गो न दुर्गमः कश्चिन्मृत्यो दुर्नयरूपिणः ।
दीर्घव्यसनहस्तस्य समस्ताकृष्टिशालिनः ॥ ५२३ ॥
व्यक्ता शक्तिस्तपस्तीव्रं श्रुता श्रीरमलं कुलम् ।
दुर्नयेन निगीर्णोऽयमहो गुणगणस्तव ॥ ५२४ ॥
त्यज्यतां जानकी नूनं[3] राघवश्च प्रसाद्यताम् ।
मृत्योरायतपक्षस्य विफलः क्रियतां श्रमः ॥ ५२५ ॥
संक्षेपः श्रूयतामेष बुद्धिरात्महिते यदि ।
जानकीमपरित्यज्य नास्त्येव तव जीवितम् ॥ ५२६ ॥
इति सावज्ञकोपाग्निगम्भीरपरुषं वचः ।
श्रुत्वा दशमुखस्तूर्णमादिदेश कपेर्वधम् ॥ ५२७ ॥
आदिष्टे राक्षसेन्द्रेण वधे पवनजन्मनः ।
बभाषे भ्रातरं कीर्तिभ्रंशभीरुर्विभीषणः ॥ ५२८ ॥
विचाररुचिरालोकविवेककलितोदया ।
शास्त्रानुगा तव मतिस्त्रैलोक्याक्रान्तिदूतिका ॥ ५२९ ॥
क्रोधेन क्षोभमायाति न गम्भीरो महाशयः ।

१. 'ध्वस्तं' शा०. २. 'लङ्काभिमान' शा०. ३. 'तूर्णं' शा०.

शफरीस्फुरितेनेव सत्त्वराशिर्महोदधिः ॥ ५३० ॥
कृतमेकेन कपिना दुःसहं महदप्रियम्।
तवापि यन्न मर्यादां भिनत्ति क्रोधविप्लवः ॥ ५३१ ॥
तथापि वधदण्डोऽस्मिन्दूते साधुविगर्हितः।
न कस्यांचिदवस्थायां दूतो वध्यः क्षमाभुजाम् ॥ ५३२ ॥
वैरूप्यं केशगात्रेषु दग्धलक्ष्माकषाहतीः।
दूतोऽर्हति न दृष्टस्तु वधो दूतस्य कर्हिचित् ॥ ५३३ ॥
परोक्तवादिनो दूताः कस्तेषां निग्रहे गुणः।
यैरयं प्रेषितस्तेषु दण्डः क्रोधोचितः क्षमः ॥ ५३४ ॥
इति भ्रातुर्वचः श्रुत्वा जगाद दशकंधरः।
दह्यतामस्य लाङ्गूलं प्रियपुच्छा हि वानराः ॥ ५३५ ॥
ततः शासनमादाय राक्षसेन्द्रस्य राक्षसाः।
दीप्तं चक्रुः कपेः पुच्छं तैलवस्त्रविवेष्टितम् ॥ ५३६ ॥
अथ ज्वालितलाङ्गूलः कृष्यमाणः क्षपाचरैः।
स लङ्कां दग्धुमखिलां क्षणं सेहे पराभवम् ॥ ५३७ ॥
अयं स प्रमदोद्यानं भग्नं येन सराक्षसम्।
इत्युच्चचार विपुलः पटहानुगतो ध्वनिः ॥ ५३८ ॥
हृष्टाः समेत्य वैदेहीमूचुर्नक्तंचरस्त्रियः।
स तैः संदह्यते सीते सुहृत्संभाषणोचितः ॥ ५३९ ॥
एतदाशाधृतिच्छेददुःसहं विषमं वचः।
आकर्ण्य सीता तद्वह्निव्याप्तेव सहसाभवत् ॥ ५४० ॥
सा शोकविवशा ध्यात्वा बाष्पनिर्झरवर्षिणी।
हनुमद्वह्निसंतापशान्तये स्वयमभ्यधात् ॥ ५४१ ॥
सतीवृत्तेन यदि मे किंचिदस्ति तपःफलम्।
तेनास्तु भगवान्वह्निर्मारुतेः शशिशीतलः ॥ ५४२ ॥
इत्यर्थितस्तया क्षिप्रं प्रदक्षिणशिखः शिखी।

हिमसंघातशीतोऽभूत्पितुर्मित्रं हनूमतः ॥ ५४३ ॥
ततश्छित्त्वा स सहसा निबिडं भुजबन्धनम् ।
उत्पपातोग्रलाङ्गूलज्वालावलयिताम्बरः ॥ ५४४ ॥
छिन्नेष्वशेषपाशेषु मुक्तस्त्रस्ताखिलग्रहः ।
योगीव निर्बभौ व्योम्नि स ज्योतिर्मयतां गतः ॥ ५४५ ॥
स नदद्घोरनिर्घोषदीप्तलाङ्गूलविप्लवः ।
बभार प्रलयाभ्रस्य तडित्पुञ्जजुषः प्रभः ॥ ५४६ ॥
ततो निपत्य हनुमान्पुरद्वाराग्रशेखरे ।
लङ्कां परिघमादाय बभञ्ज च ददाह च ॥ ५४७ ॥
वह्निना हेमवर्णेन धूमेन जलदत्विषा ।
अभूत्पीतांशुकाङ्केव लङ्का मेचककञ्चुका ॥ ५४८ ॥
ज्वलनेनोग्रवेगेन ज्वलितेष्वथ वेश्मसु ।
चक्रे ज्वालावली दिक्षु हेमस्रग्दामविभ्रमम् ॥ ५४९ ॥
ततो विनिर्ययुस्तूर्णं त्रस्तास्तरललोचनाः ।
धूममालावलयिता देवता इव वेश्मनाम् ॥ ५५० ॥
तासां कपोलपत्राभाः कर्णे कुवलयश्रियः ।
धूमलेखा बभुर्नाभिमूले रोमलता इव ॥ ५५१ ॥
स्फुलिङ्गैः शुशुभे व्योम मुहूर्तावर्तवर्तितैः ।
स्फुरन्मणिगृहोदग्ररत्नजीवैरिवोद्धृतैः ॥ ५५२ ॥
व्याप्ताः सप्तार्चिषः प्राज्यज्वालाजालैर्बभुर्दिशः ।
प्रत्यग्रकनकाट्टालवलद्वीचिचयैरिव ॥ ५५३ ॥
संवर्त्तकाभ्रगम्भीरः प्रलयारम्भसूचकः ।
घोरः कलकलाशब्दः प्रययौ कृष्णवर्त्मनः ॥ ५५४ ॥
असंप्राप्तो हि हैमेषु प्रजज्वालेव वेश्मसु ।
दीप्तोऽपि मणिगेहेषु नादृश्यत हुताशनः ॥ ५५५ ॥
क्वचिद्विनाशप्रारम्भसंभारोद्गारसंकुलैः ।

क्वचिद्विश्वतिरस्कारमार्जनीवल्लरीनिभैः ॥ ५५६ ॥
क्वचित्प्रदीप्तविलुठत्सुमेरुशिखरोपमैः ।
क्वचिद्धूमपिशाचस्य पिङ्गश्मश्रुशिखासखैः ॥ ५५७ ॥
क्वचिद्गृहविहंगानां हेमपञ्जरविभ्रमैः ।
क्वचिद्व्योमाब्धिपर्यन्तविद्रुमद्रुमसोदरैः ॥ ५५८ ॥
क्वचिन्मेघगजेन्द्राणां हेमसंनाहसंनिभैः ।
कृशानोरर्चिषां चक्रैरपूर्यन्त दिशो दश ॥ ५५९ ॥
स्फुलिङ्गालिकिसलयो धूमश्यामलपल्लवः ।
शिखाशाखोऽपि विटपो लङ्कातङ्काफलोऽभवत् ॥ ५६० ॥
हनुमत्परिघाघातभग्नानां मणिवेश्मनाम् ।
प्लुष्टानां पततां शब्दस्तीव्राक्रन्द इवाबभौ ॥ ५६१ ॥
ज्वालामालाकुला लङ्का जलधौ प्रतिबिम्बिता ।
तापनिर्वापणायैव निमग्नान्तरदृश्यत ॥ ५६२ ॥
वेगदीर्घीकृताश्चेरुर्व्योम्नि वह्निकणाश्चिरम् ।
रामचापच्युता हेमनाराचनिचया इव ॥ ५६३ ॥
विमानध्वजपालीषु पवनाकुलपल्लवः ।
अवाप पावकः क्षिप्रं लीलापाटलपद्धतिम् ॥ ५६४ ॥
सगोपुरपुरद्वारसभाभवनभित्तिषु ।
सालाट्टालप्रतोलीषु दीप्तासु पतितास्वपि ॥ ५६५ ॥
एष दूरे स्थितस्तूर्णसमं प्राप्तो हता वयम् ।
अनिलोत्तालिते वह्नौ बभूवेति जनस्वनः ॥ ५६६ ॥
ततः क्षपाचरान्क्रूरक्रोधानायुधवर्षिणः ।
उत्पाट्य कनकस्तम्भं जघान पवनात्मजः ॥ ५६७ ॥
ज्वालास्तम्भभुजं वह्निं समास्तम्भायुधं कपिम् ।
त्रस्ताः सर्वत्र ददृशुर्विश्वरूपं क्षपाचराः ॥ ५६८ ॥
अत्रान्तरे जनकजां सरमा नाम राक्षसी ।

१. 'वोयर्चां' शा०. २. 'पटलपद्धताम्' शा०.

उवाच खैरमाभाष्य चिन्तासंतापिताशयाम् ॥ ५६९ ॥
सखि निर्मुक्तपाशोऽसौ वीरो वानरयूथपः ।
प्रज्वाल्य निखिलां लङ्कां निहत्य सुभटान्गतः ॥ ५७० ॥

इति लङ्कादीपनम् ॥ १५ ॥

इति पीयूषवर्षेण तया सिक्तैव मैथिली ।
अनलानिलयोश्चक्रे नमस्कारं मनस्विनी ॥ ५७१ ॥
दग्ध्वा दशास्यनगरीं ज्वलनेन बलीयसा ।
पश्चात्तापाकुलश्चिन्तामवाप[1] पवनात्मजः ॥ ५७२ ॥
अहो प्रमादिना मोहादसमीक्षितकारिणा ।
क्रुद्धेन दहता लङ्कां मया दग्धैव जानकी ॥ ५७३ ॥
धीरास्ते कीर्तिशुभ्राणां भाजनं सर्वसंपदाम् ।
न ये प्रचण्डकोपाग्नेर्यान्ति क्रीडापतङ्गताम् ॥ ५७४ ॥
यदर्थे विपुलः क्लेशः कृतः सैव हता मया ।
तरोः फलाभिकामेन मूलमुन्मूलितं पुनः ॥ ५७५ ॥
मूढेन कार्यसर्वस्वं स्वहस्तेन हतं मया ।
अस्मिन्नेव पताम्यग्नौ घोरे वा मकराकरे ॥ ५७६ ॥
सिद्धोऽप्यर्थः प्रनष्टो मे चपलस्य प्रमादिनः ।
काकतालीयसंप्राप्तो विभवः कुमतेरिव ॥ ५७७ ॥
निमित्तानि च पश्यामि शुभशंसीनि केवलम् ।
अप्यग्निना दक्षिणेन रक्षिता सा पतिव्रता ॥ ५७८ ॥
इति चिन्ताकुलः क्षिप्रं मारुतिर्व्योमचारिणाम् ।
स्थितां शुश्राव वैदेहीमाश्चर्यकथने मिथः ॥ ५७९ ॥
ततः प्रहृष्टोऽतिजवादशोकवनिकां पुनः ।
गत्वा दृष्ट्वा च वैदेहीं समाश्वास्याभिवाद्य च ॥ ५८० ॥
आरुरोह गिरेः शृङ्गं समुद्रं तर्तुमुद्यतः ।

1. 'चिन्तां प्रपेदे' शा०.

मारुतिः सत्त्वसंपन्नः सोत्साह इव वीर्यवान् ॥ ५८१ ॥
लङ्घनाक्रान्तिगुरुणा भूधरस्तेन पीडितः ।
स त्रिंशद्योजनोत्सेधः क्षणात्क्षितिसमोऽभवत् ॥ ५८२ ॥
ततः स गगनं शाणोल्लीढनीलमणिप्रभम् ।
व्यगाहत महोत्साहः सहस्रांशुरिवापरः ॥ ५८३ ॥
पितुः समानचरितः स्कन्धबन्धयुतान्पुरः[1] ।
क्षिपन्स मेघसंघातान्योगाभ्यासमिवाकरोत् ॥ ५८४ ॥
मैनाकं पुनरङ्गुल्या स्पृष्ट्वा प्रीत्यर्थमुद्गतम् ।
द्रुमैः श्यामां गिरितटीं स ददर्शोदधेस्तटे ॥ ५८५ ॥
तस्योरुवेगमाकर्ण्य नादं चानन्दलक्षणम् ।
जगाद जाम्बवान्हर्षादङ्गदं भङ्गदं द्विषाम् ॥ ५८६ ॥
कृतार्थो नूनमायातस्तरस्वी मारुतात्मजः ।
यदस्य श्रूयते वेगनिर्घोषो बलवत्तरः ॥ ५८७ ॥
एष संदृश्यते दूरान्मारुतिर्महसां निधिः ।
सुपर्ण इव सावेगः सुमेरुरिव पक्षवान् ॥ ५८८ ॥
इति जाम्बवतो वाक्यमाकर्ण्य हरियूथपाः ।
समुत्थायोन्नतग्रीवा ददृशुस्तं सविस्मयाः ॥ ५८९ ॥
वृक्षानन्ये समारुह्य शिखराणि गिरेः परे ।
प्रहर्षविवशास्तस्थुर्हनुमद्दर्शनोत्सुकाः ॥ ५९० ॥
समापतन्तं वेगेन तं प्लवंगगणाः पराः ।
कृताञ्जलिपुटाः सर्वे प्रणेमुः प्रणयानताः ॥ ५९१ ॥
निपत्य मारुतिस्तूर्णं महेन्द्रगिरिशेखरे ।
निषसाद कृतातिथ्यः पादपैः पुष्पवर्षिभिः ॥ ५९२ ॥
तं निशाचरशस्त्रास्त्रलेखोल्लिखितविग्रहम् ।
परिष्वज्याङ्गदमुखाः प्रीतिरन्तं न लेभिरे ॥ ५९३ ॥
स प्रणम्य गुरुं वृद्धं जाम्बवन्तं कृताञ्जलिः ।

---

१. 'स्कन्धबद्धिधुतान्' ख; 'स्कन्धबन्धधुरान्' शा०.

युवराजं च सानन्दं देवी दृष्टेत्यभाषत ॥ ५९४ ॥
तस्य सुस्पष्टदंष्ट्रांशुसुधाधाराकुलं वचः।
जीवप्रदं कपिवराः श्रोत्राञ्जलिपुटैः पपुः ॥ ५९५ ॥
कथं दृष्टेति पृष्टोऽत्र मारुतिर्वालिसूनुना।
वैदेहीदर्शने सर्वं यथावृत्तं न्यवेदयत् ॥ ५९६ ॥
इति हनुमत्पुनरागमनम् ॥ १६ ॥
दृष्टां जनकजां श्रुत्वा सतीं शोकानलाकुलाम्।
भग्नामशोकवनिकां किंकरांश्च निपातितान् ॥ ५९७ ॥
जम्बुमालिमुखान्वीरानक्षं च क्षितिपात्मजम्।
दग्धां च निखिलां लङ्कां प्रहृष्टोऽवददङ्गदः ॥ ५९८ ॥
मारुते शत्रुशल्येन सुहृदानन्ददायिना।
कृतकृत्येन भवता कृतं कृत्यं यथोचितम् ॥ ५९९ ॥
अहो महत्त्वयैवाग्र्यं भुवनाक्रान्तिजं यशः।
प्राप्तं प्रतापनिधिना देवेनेव विवस्वता ॥ ६०० ॥
प्रभूनां सुहृदां चित्ते कार्यकाले स्फुरन्ति ये।
तेषां सिद्धार्थयशसां धन्यानां साधु जीवितम् ॥ ६०१ ॥
महत्ते पौरुषोद्योगविपुलोत्साहसेवनम्।
भयादिवातिकुटिलं दैवमप्यनुवर्तते ॥ ६०२ ॥
विलङ्घितोऽब्धिर्भवता सती दृष्टा च जानकी।
परिभूतश्च पौलस्त्यः कर्तव्यं किमतः परम् ॥ ६०३ ॥
अधुना तां समाहृत्य सतीं हत्वा च रावणम्।
भवद्भिः सहितो वीरैर्द्रष्टुमिच्छामि राघवम् ॥ ६०४ ॥
इन्द्रजिद्यदि मायावी दिव्यास्त्रग्रामदुःसहः।
तथापि न वयं तेषां युद्धे परिभवास्पदम् ॥ ६०५ ॥
कथयामि ध्रुवं शक्तिं तद्वधे स्वयमात्मनः।
परात्मनिन्दाश्लाघासु मौनिनो हि मनीषिणः ॥ ६०६ ॥

अस्य जाम्बवतः शौर्यस्तवेन वयमीश्वराः।
वक्तुं रविप्रतापस्य प्रमाणं कः प्रगल्भते॥ ६०७॥
मारुते दृष्टसारस्त्वं क्षणदाचरसंक्षये।
तवास्मिन्विक्रमारम्भे पुनरुक्ता गुणस्तुतिः॥ ६०८॥
अयं च सततं तुल्यः पनसो मनसो जवी।
न कस्यैतत्सुविदितं यः क्षमस्त्रिजगज्जये॥ ६०९॥
नलो न लोके विदितो यदि विक्रमकर्मसु।
तद्व्यभ्रेऽह्नि न जानाति जनो जाने दिवाकरम्॥ ६१०॥
स्थितौ च मैन्दद्विविधौ कार्येऽस्मिन्नश्विनः सुतौ।
याभ्यां जित्वा सुरान्पीतं पीयूषं यशसा सह॥ ६११॥
अनादिष्टोऽपि रामेण सुग्रीवेण च मानिना।
अस्मद्विधानामुचितो दशाननवधोद्यमः॥ ६१२॥
समर्थानां परार्थेषु प्रार्थना क्वोपयुज्यते।
स्वयं प्रतापयत्यर्कः पृथ्वीं शेषो बिभर्ति च॥ ६१३॥
तस्माल्लङ्कामितो गत्वा करोम्येष यथोचितम्।
सीता दृष्टा न चानीता वक्तुमित्युत्सहे कथम्॥ ६१४॥
इत्यङ्गदवचः श्रुत्वा वृद्धः प्रोवाच जाम्बवान्।
अवाच्यं कृतमप्येतत्काकुत्स्थाय न रोचते॥ ६१५॥
रामेण रावणवधः प्रतिज्ञातो जनाग्रतः।
स कथं तद्विसंवादं सहते सत्यसंगरः॥ ६१६॥
मनोरथक्षयायैव तस्यायं त्वत्समुद्यमः।
सेयं यदि परा भक्तिः तस्मिन्का नाम वैरिता॥ ६१७॥
शत्रुस्ते निहतोऽस्माभिरिति रामस्य नेप्सितम्।
प्रच्छादनं प्रतापस्य न सहन्ते हि[1] मानिनः॥ ६१८॥
तस्माद्यथोक्तं कृत्वैव गच्छामो रघुनन्दनम्।
इति ब्रह्मसुतेनोक्ते तथेत्यूचुः प्लवंगमाः॥ ६१९॥

---

१. 'ऽभिमानिनः' शा०.

ततः प्रमोदसमदा वारणा इव वानराः ।
गन्तुं समुद्ययुर्वीरा वालिवायुसुताग्रगाः ॥ ६२० ॥
ते निरन्तरसंघातघनग्रस्तनभस्तलाः ।
हर्षाधिकजवा जग्मुः सुपक्षा इव भूधराः ॥ ६२१ ॥
व्यस्ताभ्रकञ्चुकैस्तेषां लाङ्गूलैर्वलितैर्मुहुः ।
भोगिभोगनिभैर्व्याप्तं खं पातालमिवावभौ ॥ ६२२ ॥
रामाय प्रियमाख्यातं सोत्कण्ठाः समरोत्सुकाः ।
ते सुग्रीवप्रियं प्रापुः क्षणान्मधुवनं महत् ॥ ६२३ ॥
मधूनि तत्र दिव्यानि पीयूषरसवन्ति च ।
स्वयंग्रेहाणि हरयो हनुमन्तं ययाचिरे ॥ ६२४ ॥
हनुमानपि संहृष्टस्तेषामर्थे कृताञ्जलिः ।
युवराजं मधुवनप्रवेशाज्ञामयाचत ॥ ६२५ ॥
यथेष्टमत्र क्रियतां मधुपानाशनोत्सवः ।
इत्यङ्गदाज्ञया तूर्णं विविशुः कपयः समम् ॥ ६२६ ॥
ते प्रविश्यामृतमयं दिव्यामोदं फलासवम् ।
मधु भुक्त्वा यथाकामं मदेन मदनिर्भराः ॥ ६२७ ॥
वृक्षानारुरुहुः केचित्केचिद्युयुधिरे फलैः ।
अपरे जहसुर्नादैः शाखाश्चान्ये ललम्बिरे ॥ ६२८ ॥
धावद्भिश्च पतद्भिश्च कर्षद्भिश्च परस्परम् ।
प्रनृत्यद्भिश्च कपिभिः सर्वं वनमकम्पत ॥ ६२९ ॥
तैर्निषेधरुषा मत्तैस्ताडितः काननाधिपः ।
तानद्रवद्दधिमुखः कोपादुद्यम्य पादपम् ॥ ६३० ॥
तमभ्येत्याङ्गदः कोपात्परित्यज्यार्यगौरवम् ।
भुवि निष्पिष्य विदधे भग्नोरुभुजकंधरम् ॥ ६३१ ॥

१. 'फलानि' ख. शा०.

स मोहमूर्छानिःस्पन्दः शनकैर्लब्धजीवितः ।
प्रययौ यत्र सुग्रीवः काकुत्स्थाभ्यां सह स्थितः ॥ ६३२ ॥

इति मधुवनविलोपनम् ॥ १७ ॥

निपत्य गगनात्तूर्णं पादयोः प्लवगप्रभोः ।
स कृच्छ्रेण पृथुश्वासस्खलिताक्षरमभ्यधात् ॥ ६३३ ॥
देव दिव्यं तवोद्यानं त्रिदशैरप्यधर्षितम् ।
अङ्गदप्रमुखैर्भुक्तं प्रहारैरभिहन्य माम् ॥ ६३४ ॥
बलान्मधूनि पीतानि तानि दिव्यरसानि तैः ।
तद्विधं ते न चेष्टन्ते मृत्युना तेन चोदिताः ॥ ६३५ ॥
श्रुत्वा दधिमुखेनैतत्कथितं वानरेश्वरः ।
किमेतदिति पृष्टश्च लक्ष्मणेन तदाभ्यधात् ॥ ६३६ ॥
अवश्यं जानकी दृष्टा हनुमत्प्रमुखैः सती ।
न तेषामकृतार्थानामेवंरूपो भवेन्मदः ॥ ६३७ ॥
स्वाधीनमङ्गदादीनां कामं मधुवनं मम ।
विश्रान्तास्तूर्णमायान्तु मद्गिरा ते तरस्विनः ॥ ६३८ ॥
इति ब्रुवाणे सुग्रीवे सादरं विगतक्लमः ।
सौमित्रिणा तथेत्युक्त्वा ययौ दधिमुखः क्षणात् ॥ ६३९ ॥
स प्रसाद्याङ्गदमुखान्प्रशान्तमदविप्लवान् ।
भर्तुः शासनमादाय गुणोदारानपूजयत् ॥ ६४० ॥
ततस्ते रामसुग्रीवदर्शनाभ्यधिकोत्सुकाः ।
ययुर्व्योम्ना समुत्पत्य नन्दन्तो जलदा इव ॥ ६४१ ॥
रामलक्ष्मणसुग्रीवान्दूरादालोक्य सादरान् ।
अवरुह्याम्बरात्तूर्णं पद्भ्यामभिमुखं ययुः ॥ ६४२ ॥
अङ्गदप्रमुखा वीरास्ते मारुतिपुरःसराः ।
प्रभुं ववन्दिरे तेन सानन्दमभिवन्दिताः ॥ ६४३ ॥

इति वानरप्रत्यागमनम् ॥ १८ ॥

ततो जगाद हनुमान्प्रणम्य रघुनन्दनम् ।
प्रीतिप्रसादितेनाक्ष्णा सुग्रीवेण निरीक्षितः ॥ ६४४ ॥
देव देववधूः श्लाघ्या सती जीवति जानकी ।
दृष्टा च संक्षयक्लिष्टा लेखेव शशिलक्ष्मणः ॥ ६४५ ॥
श्रुत्वैतदमृतास्वादसोदरं हनुमद्वचः ।
ऊचे रामः शिखण्डीव नवाम्भोदस्वनोदितः ॥ ६४६ ॥
दिष्ट्या जीवति वैदेही देहबद्धा धृतिर्मम ।
कथं दृष्टा क्व वा दृष्टा कथं वा मयि वर्तते ॥ ६४७ ॥
मद्वियोगेन महता तन्वी प्रतनुतां गता ।
कान्तिमात्रावशेषेण मन्ये सा वपुषा स्थिता ॥ ६४८ ॥
इत्युक्ते रघुनाथेन जगाद पवनात्मजः ।
पारेसमुद्रं लङ्कायां मया दृष्टा तव प्रिया ॥ ६४९ ॥
एकवेणीव्रता दीर्घध्याननिश्चललोचना ।
मलिना गाढशोकाग्निधूमेनेवाश्रुवर्षिणी ॥ ६५० ॥
दशाननगृहोद्याने राक्षसीभिः सुरक्षिता ।
लक्षिता त्वद्वियोगेन तप्तनिश्वासलक्ष्मणा ॥ ६५१ ॥
यत्तस्यास्तीव्रचारित्रतपोदीप्तेन चक्षुषा ।
नाद्यापि दग्धः पौलस्त्यः सा तस्यापि प्रगल्भता ॥ ६५२ ॥
अथ वा क्षुष्ट एवासौ तत्प्रकोपकृशानुना ।
त्वद्बाणमाला येनास्मिन्हेतुमात्रं भविष्यति ॥ ६५३ ॥
इत्युक्त्वा विस्तरेणास्मै सीतासंदेशभाषितम् ।
अभिज्ञानकथां तस्याः स्ववृत्तं च न्यवेदयत् ॥ ६५४ ॥
निखिलं विनिवेद्याथ मारुतिर्मैथिलीवचः ।
रामस्य प्रत्ययायैव ददौ तं वेणिकामणिम् ॥ ६५५ ॥
रामोऽपि मणिमादाय बाष्पाम्बुभिरपूरयत् ।
विरहानलसंतप्तं तस्या मूर्तमिवाशयम् ॥ ६५६ ॥

---

१. 'विस्फारिताक्षेण' शा०. २. 'कृता' शा०.

ततः स विदधे रत्नं दयितादयितं हृदि ।
चिरप्रवासादायातं स्थिरं[1] धैर्यमिवात्मनः ॥ ६५७ ॥
धृतिं लेभे परिष्वज्य स श्लाघ्यां पावनेस्तनुम् ।
वैदेहीदर्शनेनेव यातामतिपवित्रताम् ॥ ६५८ ॥
सोऽब्रवीत्सुमहत्कर्म कुर्वतो मारुते तव ।
यशः स्फीतं भवाम्भोधौ यादमक्षयसेतुताम् ॥ ६५९ ॥
सुहृदं च प्रभूणां च वन्धूनां स्वजनस्य च ।
मनोरथफलप्राप्त्यै त्वद्विधो जायते जनः ॥ ६६० ॥
इत्युक्त्वा वल्लभाप्री[2]तिसंकल्पाकृष्टमानसः ।
रामः समुद्रतरणं मध्ये विघ्नममन्यत ॥ ६६१ ॥
स चिरं सागरं ध्यात्वा वियोगमिव दुस्तरम् ।
पपात विस्मृतधृतिर्विपुले[3] दुःखसागरे ॥ ६६२ ॥
तं शोकविवशं ज्ञात्वा मकराकरचिन्तया ।
जगाद प्रणयानम्रः सुग्रीवो मित्रवत्सलः ॥ ६६३ ॥
कोऽयं तवापि विदुषः सुमतेर्धैर्यवारिधेः ।
विक्रमावसरे व्यस्तविवेकः शोकविप्लवः ॥ ६६४ ॥
त्यज्यतां हृदयादश्यामिकां स्नेह[4]दूतिकाम् ।
शुचं वैक्लव्यजननीं क्लेशपाशपिशाचिकाम् ॥ ६६५ ॥
उत्साहशत्रुणानेन शोकः शोकेन वर्धते ।
संचयेन कदर्यस्य लोभाभ्यास इवानिशम् ॥ ६६६ ॥
उत्साहदर्पदयिताः कालेऽस्मिन्विजयोर्जिताः ।
उचिताः शितशस्त्रास्त्रपरुषाः पौरुषश्रियः ॥ ६६७ ॥
पप्रच्छ दुर्गरचनां लङ्कायां पवनात्मजम् ।
सोऽब्रवीत्परिखागुप्तवप्रप्राकारदुर्गमा ॥ ६६८ ॥
परिघार्गलितद्वारप्रकटाज्वालमालिनी ।
यन्त्रशस्त्रास्त्रसंबाधा त्रिकूटोत्तुङ्गशायिनी ॥ ६६९ ॥

१. 'धैर्यं साक्षादिवात्मनः' शा०. २. 'कान्ति' शा०. ३. 'दुस्तरे' शा०. ४. 'मोह' शा०.

अदृश्या त्रिदशैर्लङ्का नदी निर्झरशालिनी ।
रक्षसां प्रयुतं तत्र पूर्वद्वाराभिसंश्रयम् ॥ ६७० ॥
पद्मं तत्रोत्तरद्वारि पश्चिमे द्वारि चार्बुदम् ।
नियुतं दक्षिणद्वारि शूलमुद्गरधारिणाम् ।
वारेण तिष्ठति न्यस्तं रावणेन दिवानिशम् ॥ ६७१ ॥
क्रियतामुद्यमस्तूर्णं रघुनाथ रिपुक्षये ।
दुर्गमं त्वत्प्रतापस्य दैवस्येव न युज्यते ॥ ६७२ ॥
इति रामः प्रहृष्टस्य श्रुत्वा हनुमतो वचः ।
सुग्रीवमवदत्प्रीत्या दयितादर्शनोत्सुकः ॥ ६७३ ॥
अस्मिन्मुहूर्ते विजये मध्याह्ने शुभलक्षणे ।
उत्तराफाल्गुनीयुक्ते जययात्रा ममोचिता ॥ ६७४ ॥
इत्युक्त्वा सह संनद्धैर्वानरानीकनायकैः ।
नीलं सेनाग्रगं कृत्वा प्रतस्थे रघुनन्दनः ॥ ६७५ ॥
मध्ये प्लवंगसैन्यानां राघवः पवनात्मजम् ।
ययौ श्रीमान्समारुह्य वैनतेयमिवाच्युतः ॥ ६७६ ॥
लक्ष्मणोऽप्यङ्गदारूढः सुग्रीवाग्रगमग्रजम् ।
जगाद जयशंसीनि निमित्तानि विलोकयन् ॥ ६७७ ॥
एष वाति सुखस्पर्शः पवनः शुभसूचकः ।
सर्वथैवार्य पर्याप्तस्तव हस्तगतो जयः ॥ ६७८ ॥
ग्रहाः सूर्यादयो व्योम्नि प्रसन्नास्तरुणार्चिषः ।
तवोदयं वदन्त्येते त्रिशङ्कुश्च महीपतिः ॥ ६७९ ॥
विशाखाख्यं च नक्षत्रं रघूणां निरुपप्लवम् ।
मूलं राक्षसनक्षत्रं पीडितं धूमकेतुना ॥ ६८० ॥
शंसन्ति मैथिलीलाभं दक्षिणा मृगपक्षिणः ।
भ्रातुः श्रुत्वेति काकुत्स्थः प्रीतिं सीतामिवाप्तवान् ॥ ६८१ ॥
पूरिताशावकाशेन कपिसैन्येन सर्पता ।

स बभौ सागरेणेव सेवितः क्षोभभीरुणा ॥ ६८२ ॥
विन्ध्याचलमतिक्रम्य मलयं च महागिरिम्।
रामः प्राप्य महेन्द्राद्रिं ददर्श मकराकरम् ॥ ६८३ ॥
तरङ्गैः पवनावेगतुङ्गैरालम्बिताम्बरम्।
दीप्तरत्नप्रभागर्भैः सतडिद्भिरिवाम्बुदैः ॥ ६८४ ॥
फणारत्नांशुकपिशैर्वलद्भिर्व्यालमण्डलैः।
वडवाग्निस्फुलिङ्गाङ्कैर्धूमावर्तैरिवावृतम् ॥ ६८५ ॥
शुभ्राभ्रेण स्फुरत्फेनं नभसा मिश्रतां गतम्।
सत्संगतमिवाजस्रमविघातान्तरं परैः ॥ ६८६ ॥
तं महाशयमालोक्य बन्धुप्रीत्यैव सागरम्।
अवरुह्य महेन्द्राग्रात्काकुत्स्थोऽब्धितटीं ययौ ॥ ६८७ ॥
तटमालानिविष्टेषु कपिसैन्येषु सर्वतः।
निषसाद स्वयं रामो वेलाकूलशिलातटे ॥ ६८८ ॥

इति समुद्रदर्शनम् ॥ १९ ॥

ततः कल्लोलसंघट्टघोषघट्टितदिक्तटे।
तटे निविष्टः सुग्रीवं जगाद रघुनन्दनः ॥ ६८९ ॥
एष सत्त्वनिधिः श्रीमानपारः पाथसां निधिः।
अधुना तरणोपायस्तूर्णमस्मिन्विचिन्त्यताम् ॥ ६९० ॥
अप्रमत्तास्तु देशेऽस्मिन्भवन्तु हरियूथपाः।
विनिवेशश्च सैन्यानां यथास्थानं निधीयताम् ॥ ६९१ ॥
मन्त्रश्च क्रियतामस्मिन्पृथक्संभूय वा क्षणम्।
कार्यमेतदनल्पं हि समुद्रस्यास्य लङ्घनम् ॥ ६९२ ॥
आरम्भाः पुरुषद्रव्यदेशकालफलोचिताः।
विनिपातप्रतीकारैः कार्यसिद्धिविधायिनः ॥ ६९३ ॥
इति सुग्रीवमादिश्य शनैः सौमित्रिमब्रवीत्।

---

१. 'कपिलै' क. ख.

शोकसंतप्तनिश्वासैः शोषयन्निव सागरम् ॥ ६९४ ॥
अहन्यहनि भावानां म्लानिः समुपजायते।
अयं तु मे नवीभूतः शोकः सीतावियोगजः ॥ ६९५ ॥
मद्वियोगाग्नितापेन सा तन्वी तनुतां गता।
वृत्तिः परार्थनादैन्यभीरोरिव यशस्विनः ॥ ६९६ ॥
इयतीं भूमिमुल्लङ्घ्य सीतां दृष्ट्वा समीरणः।
एष बन्धुरिवाश्वासकारी स्पृशति मां पुनः ॥ ६९७ ॥
असौ सुधापरिचयी धन्योऽयं मे मनोरथः।
क्षणेन शतशो दृष्ट्वा सीतां स्पृष्ट्वाभ्युपैति सः ॥ ६९८ ॥
इमं महाजलनिधिं वियोगाचलदुःस्थिरम्।
अपि पश्येयमुल्लङ्घ्य वैदेहीचरणाम्बुजम् ॥ ६९९ ॥
जीवन्तीं तामहं श्रुत्वा संप्रति श्रोत्रजीवितः।
कदा दृष्ट्वा भविष्यामि चिरं लोचनजीवितः ॥ ७०० ॥
निमेषलेशोऽप्यगमद्विघ्नतां यद्विलोकने।
व्यवधानं कथं मध्ये तस्या जलधिमुत्सहे ॥ ७०१ ॥
आरम्भमात्रसाध्येऽपि दयितादर्शनोत्सवे।
प्रतीक्ष्यते च मे चेतः क्षणमप्यधिकोत्सुकम् ॥ ७०२ ॥
अपैति हृदयैः कीर्णा नेयं मे विरहव्यथा।
जन्तोर्ललाटफलके लिखितेवाक्षरावली ॥ ७०३ ॥
इति प्रलापिनः श्रुत्वा सौमित्रिर्जानकीपतेः।
प्रदध्यौ विविधोपायैर्महोदधिविलङ्घनम् ॥ ७०४ ॥
ततः शनैः प्रयातेऽह्नि बभूव तमसा जगत्।
चक्रवाकवियोगाग्निधूमेनेवान्धकारितम् ॥ ७०५ ॥

इति क्षेमेन्द्रविरचिते रामायणकथासारे सुन्दरकाण्डम्।

---

१. 'मनस्विनः' शा०. २. 'वान' शा०. ३. 'सुहृः' शा०.

अस्मिन्नवसरे वृद्धा जननी रक्षसां प्रभोः।
उवाच धीमतां धुर्यं पुत्रं निशि विभीषणम् ॥ १ ॥
विचित्य निखिलां लङ्कां रावणातङ्ककारिणा।
तेन वानरवीरेण दृष्टा राघववल्लभा ॥ २ ॥
जनापवादमूलोऽयं राज्ञः किल्बिषपल्लवः।
प्रत्यासन्नफलप्रायः प्रौढो दुर्नयपादपः ॥ ३ ॥
शत्रुसंतोषजननी सुहृद्दुःखविधायिनी।
अधर्मकर्मणि मतिर्भूभुजां क्षयदूतिका ॥ ४ ॥
निःशङ्कं पातकं कृत्वा रमते विभवेषु यः।
पीत्वा हालाहलं घोरं मालाकण्ठः स नृत्यति ॥ ५ ॥
शुचिशीलदुकूलिन्यो यशश्चन्दनचर्चिताः।
गुणरक्ताः सतां सत्यं प्रभावाभरणाः श्रियः ॥ ६ ॥
त्यजन्ति मूर्खं दुर्वृत्तं धर्महीनं प्रमादिनम्।
गुणवर्गानुसारिण्यः स्वभावेन विभूतयः ॥ ७ ॥
दोषासक्तिर्गुणद्वेषः श्रीविनाशस्य लक्षणम्।
पतिष्यतां मतिः प्रायः किल्बिषाभिनिवेशिनी ॥ ८ ॥
सीतामिह स्थितां ज्ञात्वा व्यक्तं तस्य कपेर्गिरा।
रामः करिष्यति शरैः क्षणात्क्षोणीमराक्षसाम् ॥ ९ ॥
खरदूषणसंहारकारिणस्तस्य विक्रमम्।
रक्षःकङ्कालमालिन्यो वदन्ति वनभूमयः ॥ १० ॥
प्रौढः प्रतापो रामस्य रावणस्य च दुर्नयः।
सर्वथायं प्रवृत्तोऽग्निः शुष्केन्धनसमागमः ॥ ११ ॥
पश्य विद्वेषिणो राज्ञो मन्त्रतन्त्राभिवर्तिनः।
व्याधयो दुर्बलस्येव निधनायैव शत्रवः ॥ १२ ॥
निपात्यते सुखेनैव शत्रुभिर्व्यसनी जनः।
कल्लोलिनीकूलजलैश्छिन्नमूल इव द्रुमः ॥ १३ ॥

१. 'निलं' शा०.

विचिन्त्य राघवं पुत्र महन्मे जायते भयम् ।
दारापहारकुपितं कथमुत्सहते युधि ॥ १४ ॥
कालं व्यालं गले कृत्वा धृत्वा मूर्तं हुताशनम् ।
दंष्ट्रामाक्रम्य सिंहस्य मूढः शेते दशाननः ॥ १५ ॥
पौलस्त्यस्य प्ररूढोऽयं विनाशविषपादपः ।
स लङ्काज्वलनो यस्य नवः किसलयोद्गमः ॥ १६ ॥
वात्सल्यं यदि ते भ्रातुस्तद्गत्वा ब्रूहि तं हितम् ।
श्रियं सहायुषा येन संत्यजेन्नोन्नतोन्नताम् ॥ १७ ॥
इत्युक्त्वा राक्षसेन्द्रस्य युक्तं माता विभीषणम् ।
विरराम चिरं ध्यात्वा दुःसहं रामविक्रमम् ॥ १८ ॥

इति विभीषणमातृवाक्यम् ॥ १ ॥

ततः प्रभाते विस्फाररत्नादिशिखरोपमम् ।
ययौ विभीषणस्तूर्णं दशकंधरमन्दिरम् ॥ १९ ॥
स प्रविश्य सभासीनं महामात्यैः[2] समावृतम् ।
ददर्श तेजसां राशिं शेखरं त्रिदशद्विषाम् ॥ २० ॥
सुरकिंनरगन्धर्वनिषेधप्रभविष्णुभिः ।
वेत्रिभिर्भ्रू[1]समुत्क्षेपनिवारितजनस्वनम् ॥ २१ ॥
रूढवज्रशिखोल्लेखगण्डस्थ[3]गितकुण्डलम् ।
प्रणताननुगृह्णन्तं सामन्तानवलोकनैः ॥ २२ ॥
त्यक्तालका कुबेरेण चिरशून्यामरावती ।
ध्वस्तपातालमित्यादिसंदेशे श्रवणोत्सुकम् ॥ २३ ॥
तापं संहर तिग्मांशो नीचैर्गच्छ समीरण ।
मौनी भवाम्भे त्वमिति प्रोद्गताग्रेसरस्व नः ॥ २४ ॥
वक्षःप्रकारगम्भीरस्तम्भसंभारदोर्द्रुमम् ।
अधृष्यं सर्वभूतानां कारागारमिव श्रियः ॥ २५ ॥

१. 'मूर्भि' शा०. २. 'माल्यशतैर्वृतम्' शा०. ३. 'स्खलित' क-ख.

लङ्केश्वरं समालोक्य रत्नाभरणभास्वरम् ।
सुरस्त्रीचामरोल्लासविलासोल्लुलितांशुकम् ॥ २६ ॥
प्रणम्य सूचिता भिक्षा प्रणयेन विभीषणः ।
भेजे तद्भ्रूविनिर्दिष्टं प्रीतिशासनमासनम् ॥ २७ ॥
निवातसुप्तजलधिप्रभे निःशब्दनिश्चले ।
तस्मिन्सदसि गम्भीरे प्रगल्भः सोऽभ्यधात्प्रभुम् ॥ २८ ॥
इयं सुरासुरादेशजययात्रोत्सवाशिषाम् ।
भाजनं भवतो लक्ष्मीरक्षीणोत्साहलक्षणा ॥ २९ ॥
इयतीं भूमिमारूढा संपत्संपन्नपौरुषा ।
लज्जैषा महती याति यदि दुर्नयवाच्यताम् ॥ ३० ॥
विभूतिरयशःस्पृष्टा शिष्टाचारोज्झिता मतिः ।
चेष्टासाधुजनानिष्टा न भवत्युन्नतात्मनाम् ॥ ३१ ॥
सुरासुरशिरोरत्नमालाललितशासनः ।
प्रभावो विभवोद्गारः कस्यान्यस्य यथा तव ॥ ३२ ॥
गुणमानकुलाचारप्रभावविनयादयः ।
निपतन्त्युन्नतिं याता रूक्षास्तस्माद्विशेषतः ॥ ३३ ॥
इयं श्रीर्निरनुक्रोशा वेश्येव बहुगामिनी ।
सरागविमुखी नित्यं व्यसनिभ्यः पलायते ॥ ३४ ॥
राजन्घोराणि दृश्यन्ते निमित्तानि गृहेषु नः ।
यदैव रामस्य वधूः प्रविष्टा दुःखदूतिका ॥ ३५ ॥
अग्निहोत्रे न भात्यग्निर्हविः क्रिमिकुलाकुलम् ।
गजाश्वसंप्रहृष्टं च लङ्का क्रव्यादनादिता ॥ ३६ ॥
तदेषां दुर्निमित्तानां प्रायश्चित्तमिदं परम् ।
यदेषा त्यज्यते तूर्णं काकुत्स्थायैव मैथिली ॥ ३७ ॥
इति भ्रातुर्वचः श्रुत्वा मुखान्यालोक्य मन्त्रिणाम् ।
निजगाद दशग्रीवः कोपजिह्मानताननः ॥ ३८ ॥

भवद्भुजबलाधीना मम विश्वजयश्रियः ।
मन्त्रतन्त्रानपेक्षिण्यः परां प्रौढिमुपागताः ॥ ३९ ॥
यत्स्वजात्युचितं तेन कपिना चापलं कृतम् ।
तस्य मानावलेपस्य मन्मन्त्रोपगमः[1] क्षमः ॥ ४० ॥
क्व गतः प्लवगो जीवन्कृत्वा लङ्कापराभवम् ।
येनायमवकाशोऽस्य मन्त्रस्य विवृतः पुरः ॥ ४१ ॥
अधमस्योचिता शत्रोर्नोपेक्षा न प्रतिक्रिया ।
तस्मात्संदेहदोलायां मन्त्रस्यैव प्रयोजनम् ॥ ४२ ॥
श्रेयान्मन्त्रो मतिष्वैक्यं मध्यमोऽप्यन्तरं गतः ।
विवादद्वेषविक्लिष्टो मन्त्रः क्लेशफलोऽधमः ॥ ४३ ॥
व्यसनी तापसोऽस्माकं चिन्तास्थानं न राघवः ।
न मे तद्विक्रमे चिन्ता तपस्तस्य तु चिन्त्यताम् ॥ ४४ ॥
इति राक्षसराजेन निर्दिष्टे मन्त्रिमण्डले ।
ऊचे प्रहस्तः संचिन्त्य प्रणतः पृतनापतिः ॥ ४५ ॥
देव देववधूर्व्यस्त[2]वियोगस्य तव स्तवः ।
गतो गतार्थतां विश्वविजयश्च नवो नवः ॥ ४६ ॥
कुञ्जरारेर्मृगाघाते संरम्भः क्वोपयुज्यते ।
न मन्त्रः क्रियते कश्चित्सहस्रांशोस्तमःक्षये ॥ ४७ ॥
चिन्ताशान्तिपरा नित्यं मन्त्रैर्मन्दपराक्रमाः ।
शुष्यन्ति सिद्धिमेषां तु विधत्ते विधिरन्यथा ॥ ४८ ॥
विक्रमोत्साहशीलानां सर्वत्राभग्नतेजसाम् ।
स्पष्टतां स्वयमायान्ति पन्थानः कुटिला अपि ॥ ४९ ॥
त्वत्प्रतापहृतैश्वर्ये सहसैव शतक्रतौ ।
[3]लज्जां बृहस्पतिर्धत्ते स्वनयग्रन्थभारिकः ॥ ५० ॥

१. 'पक्रमः' शा०. २. 'न्यस्त' शा०. ३. 'लज्जान्वितः स वक्षेषु नयोऽस्ति भारवाहकः' ख-शा०.

पदच्युतः फलाहारस्तापसः काननाश्रयः ।
कस्य शङ्कास्पदं नाम रामः परिमिताशयः ॥ ५१ ॥
सुग्रीवप्रमुखैः सार्धं यदि रामः समेष्यति ।
का क्षतिर्नः कपिशिरःफलैः क्रीडा भविष्यति ॥ ५२ ॥
साम साधुषु योक्तव्यं दानं लुब्धजनोचितम् ।
भेदो हि शङ्किषु श्रेयान्दण्डस्तब्धेषु भेषजम् ॥ ५३ ॥
छिन्नं हनुमता साम दानं नीचेषु नोचितम् ।
क्व भेदो निःसहायस्य दण्डार्हो राघवः परम् ॥ ५४ ॥
दुर्बलेन पुनश्छिन्नं साम रामेण सर्वदा ।
बलिनोऽपि वयं कस्मान्नीचदर्पं सहामहे ॥ ५५ ॥
प्रस्तुतो यदि रामस्य न दौरात्म्यात्परिक्षयः ।
तत्कथं तद्विधो दूतस्त्वद्विधेषु विसृज्यते ॥ ५६ ॥
इयं सरलता राजन्यमर्त्योऽपि विचिन्त्यते ।
उपायाः क्वोपयुज्यन्ते भोगभोक्तृसमागमे ॥ ५७ ॥
प्रहस्तेनेति कथिते वज्रदंष्ट्रपुरोगमाः ।
दर्पान्धाः प्रवरामात्या दशकंधरमूचिरे ॥ ५८ ॥
मन्त्रारम्भोऽयमस्थाने किमर्थं क्रियते वृथा ।
नोचिता रिपुचर्चापि वानरेष्वल्पकेषु नः ॥ ५९ ॥
देव कैलासकूटेषु विबुधार्यजयोर्जितम् ।
रथचक्रसमुल्लेखैर्लिखितं भवताशयः ॥ ६० ॥
मयेन मायानिधिना दानवेन्द्रेण ते भयात् ।
निजकन्याच्छलेनैव मूर्ता शक्तिरिवार्पिता ॥ ६१ ॥
पुराणि लोकपालानां भग्नोद्यानगृहाणि यत् ।
त्वदाज्ञाध्वजपट्टस्य तद्भ्रूक्षेपस्य चेष्टितम् ॥ ६२ ॥
इति दर्पाद्ब्रुवाणेषु महामात्येषु रावणः ।
क्रोधाध्मातो महापार्श्वः श्वसन्नाग इवाभ्यधात् ॥ ६३ ॥

असमानजने साम कृपया यदि युज्यते ।
तत्सौजन्यं जनो जातु भयमेवाभिमन्यते ॥ ६४ ॥
मनुष्यस्य वधे देव चिन्तास्माकं न शोभते ।
न जम्बुकवधे सिंहः स्वप्नेऽपि कुरुते मतिम् ॥ ६५ ॥
अधुना स्वस्ति मन्त्राय मन्त्रिभ्यश्चायमञ्जलिः ।
भृत्यलेशाज्ञया तूर्णं क्रियतां वानरक्षयः ॥ ६६ ॥
सरामलक्ष्मणस्यास्य कपिसैन्यस्य भक्षणम् ।
मह्यं भृत्याय भवता प्रमाणीक्रियतां विभो ॥ ६७ ॥
इति ब्रुवाणे दर्पान्धे महापार्श्वे मदोद्धरः ।
कोपात्तद्वाक्यमाक्षिप्य जगाद जगतां रिपुः ॥ ६८ ॥
पतङ्गपुत्तिकादंशपिपीलकसरीसृपाः ।
वानरा वा कथं नाम शङ्कास्थानं भवादृशाम् ॥ ६९ ॥
पराभवास्पदं कस्माद्वयं निर्जितनिर्जराः ।
वनेषु लुब्धकैर्वध्या बलिनः केन वानराः ॥ ७० ॥
मनोरथविकल्पानां स्वच्छन्दा कियती गतिः ।
यैस्तृणीक्रियते मेरुर्मेरुतां नीयते तृणम् ॥ ७१ ॥
नूनं देव न जानीषे प्रभावं स्वयमात्मनः ।
परमात्मा जगद्व्यापी स्वस्वभावमिवेश्वरः ॥ ७२ ॥
अपर्याप्ता हरिचमूः सालतालशिलायुधा ।
कुक्षिकोणैकदेशेऽपि पर्याप्तं न हि भोजनम् ॥ ७३ ॥
मद्दंष्ट्रायन्त्रसंघट्टनिष्पिष्टाः प्लवगा मिथः ।
एकीभूता इव प्रीत्या यान्तु प्रेतपतेः पुरीम् ॥ ७४ ॥
इति तेषां वचः श्रुत्वा राक्षसानाममर्षिणाम् ।
बभाषे भीषणं भ्रातुर्नाशं ज्ञात्वा विभीषणः ॥ ७५ ॥
प्रमादमदमत्तानां श्वभ्रे निपततां बलात् ।
मृणालतन्तुना केन क्रियते गतिसंयमः ॥ ७६ ॥

१. 'मे न' शा०. २ 'लिपः' शा०.

आश्चर्यनिधये मायाविधये विधये नमः ।
चिन्त्यमानोऽपि यः क्षिप्रं विदुषामपि वञ्चकः ॥ ७७ ॥
छन्दानुगास्तव प्रायः प्रियाः स्वच्छन्दवादिनः ।
प्रियं वदन्ति न हितं यदेतेऽप्यत्र मन्त्रिणः ॥ ७८ ॥
नमोऽस्तु प्रियवादिभ्यो धूर्तेभ्यः स्वामिनां पुरः ।
ये पथ्यं कटुकं वक्तुं स्वप्नेष्वपि न शिक्षिताः ॥ ७९ ॥
अमुष्मिन्विभवोद्याने शीर्णे तिष्ठन्ति न क्वचित् ।
लक्ष्मीलतापट्चरणा धूर्ता मधुरवादिनः ॥ ८० ॥
ऐश्वर्यं यदि रक्ष्यं चे[1]त्प्रियं यदि च जीवितम् ।
तत्स्वयं त्यज्यतां तूर्णं काकुत्स्थायैव मैथिली ॥ ८१ ॥
कथाशेषोत्सवा यावन्न लङ्का शून्यतां गता ।
रामायैव स्वयं तावद्दीयतां देव मैथिली ॥ ८२ ॥
अप्रमादी महोत्साहः स्थितः सद्धर्मवर्त्मनि ।
न रामः संयुगे जेतुं शक्यः सर्वैः सुरासुरैः ॥ ८३ ॥
अपरित्यक्तशीलानां शूराणामप्रमादिनाम् ।
सत्यव्रतानां धीराणां जयश्रीरपराङ्मुखी ॥ ८४ ॥
गुणानुरागी लोकोऽयं प्रतिष्ठा लोकसंभवा ।
प्रतिष्ठा यशसो मूलं यशोलुब्धा विभूतयः ॥ ८५ ॥
नयानुयायिनी लक्ष्मीरप्रमादोदयो जयः ।
प्रभावप्रभवा शक्तिर्गुणमार्गानुगं यशः ॥ ८६ ॥
श्रीरियं नीतिनलिनी विलासकलहंसिका ।
नश्यत्येव परित्रस्ता दृष्ट्वा दुर्नयदुर्दिनम् ॥ ८७ ॥
जितेन्द्रियाणां संत्यक्तसङ्गानां विदितात्मनाम् ।
योगिनां भूमिपालानां सफला मन्त्रसिद्धयः ॥ ८८ ॥
भव शीलधरो राजन्व्यसने मा कृथा मतिम् ।
त्यक्त्वा कुमतिमायान्ति सदाचारं विभूतयः ॥ ८९ ॥

---

१. 'वः प्रि' ग्रा०.

विघ्नन्ति बहवोऽप्येकमेको हन्ति बहूनपि।
अमर्यादं सदा युद्धं तस्मिन्नप्रत्ययो जयः॥ ९० ॥
श्रुतशीलबलौचित्यप्रभावविभवादयः।
गुणधर्मफलाः सर्वे धर्मायत्तगतिर्जयः॥ ९१ ॥
राजन्सुखसुखस्यायं न कालः प्रणयोचितः।
प्रियः शिखाग्रहेणापि व्यसनाद्विनिवार्यते॥ ९२ ॥
सतः सत्त्वसहायस्य धैर्यराशैर्यशस्विनः।
प्रौढः प्रतापो रामस्य सर्वत्रास्खलितोदयः॥ ९३ ॥
यदि प्रियजने प्रेम यदि भोगेष्वतृप्तता।
यदि प्राणेषु वः प्रीतिस्तत्काकुत्स्थः प्रसाद्यताम्॥ ९४ ॥
उक्ते विभीषणेनेति किंचिदागतविक्रियः।
उवाच विधिवैमुख्यविप्रलब्धो दशाननः॥ ९५ ॥
खड्गमेघशिखण्डिन्यो भुजालानकरेणुकाः।
वीरवक्त्रावलोकिन्यः सत्यमेता विभूतयः॥ ९६ ॥
बन्धुभावादहो मोहः स्नेहः सरलतापि वा।
भ्रातुर्भीरुस्वभावस्य प्रकृतिर्वा तवेदृशी॥ ९७ ॥
कुलाचारमतिक्रम्य कथमसद्विधो जनः।
मानमुत्सृज्य वर्तेत त्रैलोक्ये रक्ष्यतां गतः॥ ९८ ॥
येनेश्वरः पथा याति स्पष्टेन कुटिलेन वा।
महाजनानुगो नित्यं जनस्तेनैव गच्छति॥ ९९ ॥
तापसस्य मया योऽयं कृतः कान्तापराभवः।
स चिन्त्यमानस्तत्त्वेन दोषो यदि गुणोऽत्र कः॥ १०० ॥
किं विरक्तस्य संभोगैरश्रमस्याश्रमेण किम्।
पूर्वापरविरुद्धोऽयमाचारस्तस्य दुर्मतेः॥ १०१ ॥
क्व पांसुशय्या विपिने जरन्मृगगणाश्रये।
क्व नूपुरवती कान्ता शिञ्जानमणिनूपुरा॥ १०२ ॥

१. 'भ्रातर्भी' स्यात्. २. 'त्रैलोक्यालक्ष्यतां' ख.

क्व वृद्धसंनिधि वनं संभोगार्हं क्व यौवनम् ।
क्व युद्धयात्रा सुरथा क्व च पङ्गुमनोरथाः ॥ १०३ ॥
क्व शौर्यं क्व जटाबन्धः क्व शस्त्रं क्व च वल्कलम् ।
सर्वथा कुटिलाचारो विपरीतः स तापसः ॥ १०४ ॥
कथमर्हति तां रामः स्त्रीरत्नं जनकात्मजाम् ।
त्रैलोक्यजयिनो यस्यां मद्विधा बद्धकौतुकाः ॥ १०५ ॥
खरमुख्या हतास्तेन यन्मर्त्येनापि राक्षसाः ।
दैवादन्यत्र कस्यैषा शक्तिः स्वेच्छाविलासिनी ॥ १०६ ॥
कथं केलिकपेर्लङ्कादहने सा गतिर्भवेत् ।
यदि न स्यात्परं चित्रक्रीडाद्भुतनिधिर्विधिः ॥ १०७ ॥
यस्येयं विश्वनिर्माणवैचित्र्यप्रभविष्णुता ।
शक्तिं कस्तस्य दैवस्य पौरुषेणातिवर्तते ॥ १०८ ॥
शुद्धं यदि बलादीनां खड्गादीनां यदि श्रियः ।
शक्त्यपेक्षो यदि जयो मम चिन्तास्पदं नु किम् ॥ १०९ ॥
इति क्रोधं नियम्यैव भाषमाणे दशानने ।
ऊचे विभीषणो राजन्सीतैव त्यज्यतामिति ॥ ११० ॥
ततः कोपोष्मसंजातस्वेदसंसिक्तमाननम् ।
संप्रमृज्यांशुकान्तेन[1] व्याजहारेन्द्रजिद्वचः ॥ १११ ॥
दूरादेव प्रणामार्हाः पण्डिता गुरवो द्विजाः ।
तद्दोषे ह्यतिसंगत्या दृष्टे श्रद्धा[2] विनश्यति ॥ ११२ ॥
स्वभाषितपरिच्छेदविवक्षावसरोचिताः ।
व्यवहारविचारेषु बाह्याः पण्डितबुद्धयः ॥ ११३ ॥
धीमान्सर्वज्ञ इत्येष प्राज्ञोऽस्माकं[3] विभीषणः ।
कुलवैलक्ष्यजननी लक्षितास्य न भीरुता ॥ ११४ ॥
अहो नु रथ्यावन्दीव राममेव प्रशंसति ।
यदयं नैव जानीमः केनास्योपहृता धृतिः ॥ ११५ ॥

१. 'परिमृज्यांशु' शा०. २. 'कीर्तिं' शा०. ३. 'पूज्यो' शा०.

का नाम कृपणे तस्मिन्यस्य चिन्ता कुतापसे ।
सुरासुररणोत्साहविजयो विस्मृतः स किम् ॥ ११६ ॥
नीचोत्कर्षकथादुःखं सहते नोन्नतं मनः ।
येनेयं विक्रमश्लाघा क्रियते स्वयमात्मनः ॥ ११७ ॥
अद्यापि लोचनपथे धत्ते पिष्टः क्षितौ मया ।
द्वेषोष्मणा रजोभिश्च तुल्यं कलुषतां हरिः ॥ ११८ ॥
ऐरावणरदाकृष्टिच्छद्मना प्रसभं मया ।
मूलमुन्मूलितं मन्ये सुरराजयशस्तरोः ॥ ११९ ॥
समरे लोकपालानां विद्रुतानां भयान्मम ।
नाद्यापि पदवी लब्धा वधूभिर्वनवर्त्मसु ॥ १२० ॥
तस्य मे तापसकथा मिथ्याशौर्यमयी पुरः ।
क्रियमाणा कथं नाम नो प्रयात्युपहास्यताम् ॥ १२१ ॥
इति शक्रजितो वाक्यं श्रुत्वोवाच विभीषणः ।
बिभ्राणः कोपरजनीचन्द्रिकां हसितच्छटाम् ॥ १२२ ॥
अद्याप्यपक्वबुद्धिस्त्वं बालकः पेशलाशयः ।
बलाबलं विजानीषे न परस्य न चात्मनः ॥ १२३ ॥
पुत्ररूपो ध्रुवं शत्रुस्त्वं पितुर्दुर्नयोचितः ।
यदस्यातिप्रमत्तस्य राघवात्क्षयमिच्छसि ॥ १२४ ॥
ब्रह्मशापोपमास्तीक्ष्णाः शराः शिखरिभेदनाः ।
सह्यन्ते येन रामस्य जनो जातो न जातु सः ॥ १२५ ॥
सीता समर्प्यतां तस्मै रत्नैः सह सुरोचितैः ।
कृच्छ्रे त्यक्त्वापि सर्वस्वं रक्षेच्चात्मानमात्मवित् ॥ १२६ ॥
हन्ता मारीचमुख्यानां वीरः सुग्रीवराज्यदः ।
रामः कामं नरेन्द्रोऽस्तु कानने वास्तु तापसः ॥ १२७ ॥
कर्मणामेष संकल्पः काकुत्स्थो यद्वनेचरः ।
दाता त्रैलोक्यराज्यानां भस्मशायी महेश्वरः ॥ १२८ ॥

असत्क्षयाय स परं निविष्टो जलधेस्तटे ।
सर्वैः स्वयमितो गत्वा सर्वस्वेन प्रसाद्यताम् ॥ १२९ ॥
तेन क्लेशनिमित्तेन वित्तेन निष्कलेन किम् ।
यत्कुलस्यात्मनो वापि रक्षार्थे नोपयुज्यते ॥ १३० ॥
न भुक्तेषु न मुक्तेषु वृद्धानां विनयेष्विव ।
धनादानेषु लुब्धानां निधनावधिरादरः ॥ १३१ ॥
धनेन रक्ष्यतामात्मा स पुनर्धनभाजनम् ।
न त्वात्मनि गते वित्तं पुरुषाननुगच्छति ॥ १३२ ॥
श्रुत्वैतत्कलुषं भ्रातुर्वचः कोपारुणेक्षणः ।
श्वसन्बभूव पौलस्त्यः कम्पव्यालोलकुण्डलः ॥ १३३ ॥
गम्भीरं कोपमालोक्य शीलज्ञास्तस्य मन्त्रिणः ।
चकम्पिरे चिरं धीरा भूकम्पादिव भूधराः ॥ १३४ ॥
सोऽवदत्पाणिना पाणिं निष्पिष्य स्वेदसंप्लुतः ।
दीप्तरत्नाङ्गदालोकैर्निर्धर्ष्याग्निं सृजन्निव ॥ १३५ ॥
प्रियायैवाप्रियेणोक्तं श्रुत्वा कोपोत्कटं वचः ।
विरक्तस्य स्मितेनापि जायेते कोपसाध्वसे ॥ १३६ ॥
पापदुष्टेन मनसा भाषसे प्रतिभान्वितम् ।
हितमप्यप्रमाणं तन्मम पथ्यमिवाशुचि ॥ १३७ ॥
रागद्वेषविकल्पेषु प्रमाणं सर्वथा मनः ।
रतौ दन्तक्षतैः प्रीतिस्तैरेव कलहे व्यथा ॥ १३८ ॥
अहो बत वयं सर्वे वञ्चिताः सरलाशयाः ।
येषां विभीषणे मिथ्या गुणसंभावनाभवत् ॥ १३९ ॥
दम्भादिग्धगुणस्यास्य किं पाण्डित्येन किं धिया ।
अभिमानमयं यस्य धैर्यं नास्त्येव जीवितम् ॥ १४० ॥
पूर्वापकारिणा संधिं शत्रुणा यः समीहते ।
मन्त्रे वा विक्रमे वापि स किमायास्यते पशुः ॥ १४१ ॥

अपनीतायुधो रामः शरणं यदि मा व्रजेत् ।
तदेतदुक्तं युक्तं स्याद्विनयः कस्य न प्रियः ॥ १४२ ॥
शत्रुलेशप्रणाशं मे प्रमाणं सुभटाः परे ।
भीरुस्वभावः कार्येऽस्मिन्बहिरास्तां विभीषणः ॥ १४३ ॥
रामे यद्यस्य रमते बुद्धिर्विबुधमानिनः ।
तत्तमेव प्रयात्वेष विरक्तः केन सह्यते ॥ १४४ ॥
इति ब्रुवाणे सावेगं क्रोधान्धे दशकंधरे ।
ससंरम्भेष्वमात्येषु पुनरूचे विभीषणः ॥ १४५ ॥
वल्लभं सर्वजन्तूनां जीवितं यस्य न प्रियम् ।
उन्मार्गगामिनस्तस्य हितवादी कथं प्रियः ॥ १४६ ॥
अधर्मं स्वविनाशाय यः समाचरति स्वयम् ।
किमात्मशत्रुणा तेन प्रीतेन कुपितेन वा ॥ १४७ ॥
किं चित्रं यदि धर्मस्थे रामे मे रमते मतिः ।
आनन्दाय न कस्येन्दुः सुधानिष्पन्दसुन्दरः ॥ १४८ ॥
प्रमादी प्रार्थ्यमानोऽपि पथ्यं गृह्णाति नैव यः ।
सत्यं तस्य विनाशेन नृत्यन्ति स्वजना अपि ॥ १४९ ॥
स मन्त्रो मन्त्रिभिर्यत्र व्यसनाद्वार्यते नृपः ।
शिष्टचित्तग्रहायैव प्रमत्तस्यानुभाषणम् ॥ १५० ॥
स्वभ्रपातोद्यतो राजा मन्त्रिणोऽनुमतप्रदाः ।
सेयं विनाशसामग्री दैवेन घटिता परम् ॥ १५१ ॥
श्रुत्वैतत्कोपसंतप्तः समुत्थाय दशाननः ।
साम्राज्यमिव पादेन जघानाशु विभीषणम् ॥ १५२ ॥
स पपात हतस्तेन तेजस्वी कनकासनात् ।
अस्ताचलादिव रविः शर्वर्यन्तरितोदयः ॥ १५३ ॥
तमभ्यधावदाकृष्य खड्गं व्यालोलकुण्डलः ।
रावणश्चक्रचापाङ्कस्तडिदिरिङ्ग इवाम्बुदः ॥ १५४ ॥

स निरुद्धः प्रहस्तेन बाहुभ्यां प्रियवादिना।
निजमासनमासाद्य निःश्वसन्पुनरभ्यधात्॥ १५५॥
तूर्णं निष्कास्यतामेष निलयान्निरपत्रपः।
क्लैब्याद्भयाद्वा यस्येयं जाता शत्रुस्तवे मतिः॥ १५६॥
परपक्षप्रियो वक्तुं नार्हत्येष पुरो मम।
न तथा दुःसहः शत्रुर्यथा शत्रुसमाश्रितः॥ १५७॥
ज्ञातिभ्यो भयमुत्पन्नं वह्निर्वेणुवनादिव।
प्रभावद्वेषिणो नित्यं ज्ञातयो गूढशत्रवः॥ १५८॥
ज्ञातयो ज्ञातसंचाराश्छिद्रेषु व्यसनैषिणः।
न सहन्ते गुणोद्विग्नास्तुल्या कुलजनोन्नतिम्॥ १५९॥
न दानेन न मानेन नोपकारैर्न संस्तवैः।
ज्ञातयः परितुष्यन्ति क्षयसंदर्शनादृते॥ १६०॥
शिक्षाहस्तिसमाकृष्टैः श्रूयन्ते हस्तिभिः पुरा।
श्लोका पद्मवने गीताः कूटपाशवशंगतैः॥ १६१॥
विषशस्त्राग्निसर्पेभ्यो न भयं विद्यते नृणाम्।
सुप्ताभिघातप्रतिमं घोरं ज्ञातिकृतं भयम्॥ १६२॥
स्वार्थप्रधानविद्वेषाद्गूढमायाप्रहारिणः।
नेच्छन्ति ज्ञातयो वृद्धिं स्वजनस्य क्षयोत्सुकाः॥ १६३॥
दुर्जनात्पातकमिव स्त्रीचित्तादिव चापलम्।
अहिवक्त्रादिव भयं नापैति ज्ञातितो भयम्॥ १६४॥
तस्मात्क्षिप्रं प्रयात्वेव यत्रास्य रमते मतिः।
प्रिया प्रियत्वं लोकस्य चक्षुषः केन वार्यते॥ १६५॥
इत्युक्ते दशकण्ठेन संरम्भलुलिताङ्गदम्।
प्रहस्तो हस्तमुद्यम्य भ्रान्तभ्रूयुगलोऽभ्यधात्॥ १६६॥
क्रुद्धस्ते रावणो राजा दिशो गच्छ विभीषण।
न ह्यतुष्टे दशग्रीवे भुज्यन्ते भोगसंपदः॥ १६७॥

१. 'निष्काल्यता' शा०. २. 'विषया' शा०. ३. 'समाश्रयः' शा०.

सोऽपि वैश्रवणः श्रीमाननेनाज्ञाव्यतिक्रमात् ।
भ्रूभङ्गनष्टविभवो भ्राता ज्येष्ठो विवासितः ॥ १६८ ॥
उक्त्वेति हस्तेनाकृष्य प्रहस्तो रावणानुजम् ।
उवाच गच्छ गच्छेति क्रोधाध्मातः पुनः पुनः ॥ १६९ ॥
ततो हरिप्रभृतिभिश्चतुर्भिः सचिवैः[1] सह ।
विभीषणो गदापाणिर्विवेशाकाशमाशुगः ॥ १७० ॥

इति विभीषणनिष्काशनम् ॥ २ ॥

स दृष्ट्वा मातरं तूर्णं प्रणिपत्याभिवाद्य च ।
निवेद्यास्य यथावृत्तं प्रययौ व्योमवर्त्मना ॥ १७१ ॥
तस्य कुण्डलकेयूरमौलिरत्नांशुभिर्दिशः ।
ययुर्नृत्यन्मयूराणां वनानां तुल्यरूपताम् ॥ १७२ ॥
व्रजन्तं तेजसां राशिं चलत्पीतांशुकाञ्चलम् ।
तं मेरुमिव संध्याभ्रमालितं ददृशुः सुराः ॥ १७३ ॥
रामाभिमुखमायान्तं तं सुग्रीवपुरोगमाः ।
शङ्किताः प्लवगा वीक्ष्य युद्धायैव समुद्ययुः ॥ १७४ ॥
संरब्धान्वानरान्वीरान्दृष्ट्वा धीमान्विभीषणः ।
समुद्रस्योत्तरे पार्श्वे तस्थौ खेक्षणनिश्चलः ॥ १७५ ॥
दूरात्स्वनेन महता घनघोषानुकारिणा ।
सुग्रीवं दर्शनोद्ग्रीवं सानुगं स समभ्यधात् ॥ १७६ ॥
भो भोः प्लवङ्गमाः सर्वे राक्षसोऽहं विभीषणः ।
रावणस्यानुजो वीरं द्रष्टुमिच्छामि राघवम् ॥ १७७ ॥
त्यज्यतां जानकी भ्रातर्मयेत्युक्तो दशाननः ।
हितं वचो न जग्राह मुमूर्षुरिव भेषजम् ॥ १७८ ॥
तैः[2] रावणादिभिः सर्वैः कोपादतिविमानितः ।
गुणानुरागाद्यातोऽहं शरणं रघुनन्दनम् ॥ १७९ ॥

१. 'मन्त्रिभिः' शा०. २. 'तेनासनविनाशेन' शा०.

संत्यक्तपापं स्वजनं सदाचारजनप्रियम् ।
निवेदयत रामाय मामकिल्बिषमागतम् ॥ १८० ॥
इति तस्य वचः श्रुत्वा सुग्रीवोऽभ्येत्य राघवम् ।
राक्षसाचारचकितस्तदुक्तं सर्वमभ्यधात् ॥ १८१ ॥
ज्ञात्वा रामः समायातं सानुगं रावणानुजम् ।
विचिन्त्य निश्चलः क्षिप्रं प्रोवाच कपिकुञ्जरान् ॥ १८२ ॥
यूयं प्रमाणं कार्येऽस्मिन्धीधना भुजशालिनः ।
विभीषणस्यागमने यदुक्तं तद्विचिन्त्यताम् ॥ १८३ ॥
इत्युक्ता रघुनाथेन केचिदूचुः प्लवंगमाः ।
पापः शत्रुप्रयुक्तोऽयं सर्वथा वधमर्हति ॥ १८४ ॥
उवाच त्यक्त्वायं कश्चिद्यदि भ्रातरमागतः ।
तत्परेषां कथं नाम क्रूरः स्निग्धो भविष्यति ॥ १८५ ॥
जात्यैव स्वजने प्रीतिर्जन्तोरव्यभिचारिणी ।
न जातु जम्बुकीपुत्रः स्तनं पिबति गोः क्वचित् ॥ १८६ ॥
ततो जगाद हनुमान्रामं विरचिताञ्जलिः ।
मर्मवेदी परस्यायं न तु त्याज्यो विभीषणः ॥ १८७ ॥
विरक्तस्य कुवृत्तस्य रावणस्य प्रमादिनः ।
कोशं दुर्गं बलं राष्ट्रं वक्ष्यत्येव न संशयः ॥ १८८ ॥
दुर्वृत्तं स्वजनं त्यक्त्वा यदि साधूनयं श्रितः ।
तदस्य गुणलुब्धस्य न ह्यविश्वासकारणम् ॥ १८९ ॥
स्वभावानुगुणा प्रीतिर्दूरस्थेऽप्यंशुमालिनि ।
समीपस्थेऽपि सलिले न संश्लेषोऽम्बुजन्मनाम् ॥ १९० ॥
इति वायुसुतेनोक्ते निशम्योवाच राघवः ।
सदोषः सगुणो वास्तु[1] न मे त्याज्यो विभीषणः ॥ १९१ ॥
अनुरक्तो विरक्तो वा मामुद्दिश्यायमागतः ।
वन्ध्यं मनोरथं तस्य न कर्तुमहमुत्सहे ॥ १९२ ॥

१. 'प्यस्तु' शा०.

परित्यजति निर्लज्जः प्राप्तं यः शरणार्थिनम् ।
मानं धर्मं श्रियं कीर्तिं सर्वत्र स परित्यजेत् ॥ १९३ ॥
श्रूयते हि कपोतेन लुब्धकः शरणागतः ।
भार्यानिषूदकोऽभ्येत्य स्वमांसेन निमन्त्रितः ॥ १९४ ॥
भीरुः प्राणान्परित्यज्य रक्षणीयो ह्यरक्षितः ।
हत्वास्य सुकृतं याति कण्डुरित्यभ्यधान्मुनिः ॥ १९५ ॥
मयास्य दत्तमभयं तूर्णमायातु राक्षसः ।
कृताञ्जलिषु भीतेषु पेशला रघवो वयम् ॥ १९६ ॥
इति रामस्य वचसा सुग्रीवः सानुगो नभः ।
समुत्पत्यानिनायाशु परिष्वज्य विभीषणम् ॥ १९७ ॥
ततः स रामपादाब्जश्लिष्टमौलिमणिर्बभौ ।
कण्ठे स्वच्छनखच्छायाच्छलेनालिङ्गितः श्रिया ॥ १९८ ॥
त्वामहं शरणं यातः पौलस्त्येनावमानितः ।
इति ब्रुवाणं तं रामः प्रोवाच प्रणयोचितम् ॥ १९९ ॥
विभीषण सुहृन्मे त्वं प्रेमविस्रम्भभाजनम् ।
मनो मे दर्शनादेव त्वयि सत्यं प्रसीदति ॥ २०० ॥
लङ्का त्वया परित्यक्ता समित्रधनबान्धवा ।
मदर्थे तत्प्रियांशस्य फलं मे गृह्यतां सखे ॥ २०१ ॥
इत्युक्त्वा लक्ष्मणानीतैः तूर्णं रत्नाकराम्बुभिः ।
सोऽभिषिच्यैव विदधे लङ्काधीशं विभीषणम् ॥ २०२ ॥
तेन रामप्रसादेन गुरुणा नतकन्धरः ।
सोऽचिन्तयच्चिरं धीमान्बहुशस्तत्प्रतिक्रियाम् ॥ २०३ ॥
भ्रातृशत्रुं स सुग्रीवं दृष्ट्वा सप्रतिभोऽभवत् ।
तत्तु लज्जानतः क्षिप्रं लक्ष्मणं भ्रातृवत्सलम् ॥ २०४ ॥
इति विभीषणपरिग्रहः ॥ ३ ॥

तमुवाचाथ हनुमानस्य तावन्महोदधेः ।
उपायं ब्रूहि तरणे सत्यं धुर्योऽसि धीमताम् ॥ २०५ ॥

सोऽब्रवीद्वानरं रामः शरणं यातु सागरम् ।
पितामहेन रामस्य सगरेणैष निर्मितः ॥ २०६ ॥
उक्ते विभीषणेनेति वीरौ सुग्रीवलक्ष्मणौ ।
उपपन्नतरं वाक्यं तत्तस्य प्रशशंसतुः ॥ २०७ ॥
ततस्तीरे निराहारः कुशानास्तीर्य राघवः ।
तपस्तिस्रः क्षपाश्चक्रे दर्शनाय महोदधेः ॥ २०८ ॥
त्रिरात्रोपोषिते रामे निर्विकारे च सागरे ।
बभूव चिन्ताकुलिता निःस्पन्दा हरिवाहिनी ॥ २०९ ॥
ततो निःश्वस्य संतप्तः कोपसंरक्तलोचनः ।
उवाच रामः सौमित्रिं नेत्रे विक्षिप्य पत्रिषु ॥ २१० ॥
पश्य लक्ष्मण दृप्तस्य जलराशेरसाधुताम् ।
न नयेन न च प्रीत्या यो नीच इव तुष्यति ॥ २११ ॥
प्रणयेनोग्रतामेति काठिन्यं याति सेवया ।
न स कश्चिदुपायोऽस्ति गृह्यते येन दुर्जनः ॥ २१२ ॥
प्रयुक्ता नूनमास्थाने प्रणयप्रशमक्षमाः ।
प्रयान्त्यगुणतामेव मानम्लानिकराः परम् ॥ २१३ ॥
आत्मप्रशंसामुखरनिकृतं क्रूरकर्मणम्(?) ।
भयाङ्कुशविधेयोऽयं जनः सत्कुरुते जनम् ॥ २१४ ॥
विजयः कीर्तिरैश्वर्यं सत्यं साम्ना न लभ्यते ।
तीक्ष्णानुवर्ती लोकोऽयं पौरुषेणैव भुज्यते ॥ २१५ ॥
क्व प्रीतिर्गुणसंसक्तसाधुसारङ्गवागुरा ।
क्रूरता क्व च दुर्वृत्तदुष्टाश्वोग्रकशाहतिः ॥ २१६ ॥
पारुष्यवश्यः प्रणयश्चेह सर्वात्मना जनः ।
नयं भयं न जानीते क्षमामक्षमतामपि ॥ २१७ ॥
शरासनं महाघोरं चापमानय लक्ष्मण ।
करोम्येनं विपर्यस्तमर्यादं यादसां निधिम् ॥ २१८ ॥

मद्बाणवह्निसंतापक्वाथ्यमानोऽद्य सागरः।
वडवाग्निशिखाकारं शरणं यातु शीतलम् ॥ २१९ ॥
शरैर्निकृत्तनिःशेषसत्त्वरक्ताकुलोऽम्बुधिः।
धत्तां नदीवधूमध्ये जुगुप्सायतनं वपुः ॥ २२० ॥
इत्युक्त्वा धनुरादाय विशिखं च शिखिप्रभम्।
गम्भीरक्षोभसंरम्भभ्रान्तं स विदधेऽम्बुधिम् ॥ २२१ ॥
बभुः ससर्पमकरैर्व्याप्तः शिखरिसंनिभैः।
शरोद्धूतैर्विवलिताः कल्लोलैरखिला दिशः ॥ २२२ ॥
परिवृत्तेऽम्बुधौ लोलजलाश्वपुरुपद्विपे।
शरत्रस्ताः समुत्तस्थुर्दैत्याः पातालवासिनः ॥ २२३ ॥
शङ्खरश्मिनखैर्दीप्तैः रत्नताम्रतलैर्मुहुः।
कल्लोलाञ्जलिभिश्चक्रे रामयाच्ञामिवोदधिः ॥ २२४ ॥
शरनिर्घोषसावेगसलिलावर्तशूत्कृतैः।
मन्युदुःखाकुलः क्षिप्रं निःश्वासैरेव वारिधिः ॥ २२५ ॥
जलस्फारस्वनैरुद्यद्वीचिबाहुर्महोदधिः।
देव संहर कोपाग्निमित्युवाचेव राघवम् ॥ २२६ ॥
दिक्षु ध्वान्तनिरुद्धासु संरुद्धे भुवनत्रये।
सूर्यचन्द्रप्रधानानि तिर्यग्ज्योतींपि खे ययुः ॥ २२७ ॥
इति समुद्रक्षोभणम् ॥ ४ ॥

ततो विधूय सहसा वीचिचक्रं महोदधिः।
कृताञ्जलिः समुत्तस्थौ स्रग्वी रुचिरकुण्डलः ॥ २२८ ॥
रत्नैर्विभूपितश्चन्द्रलक्ष्मीकौस्तुभसोदरैः।
वस्त्रैश्च पारिजातस्य पाटलैरिव पल्लवैः ॥ २२९ ॥
मन्दाकिनीपुरोगाभिर्नदीभिश्चामरानिलैः।
सोत्कण्ठं च सलज्जं च नर्तितोष्णीषपल्लवः ॥ २३० ॥

१. 'क्षुभिते' ग्रा०.

देहकान्तिवितानेन वैडूर्यविमलत्विषा ।
विदधान इवासक्तं सर्वं जलमयं जगत् ॥ २३१ ॥
चन्द्रकान्तशलाकेन मुक्ताप्रारम्भशोभिना ।
फेनौघेनोद्धृतेनेव स्वच्छश्छत्रेण सच्छविः ॥ २३२ ॥
सप्तास्यैर्दीप्तरत्नाङ्कैर्व्यक्तस्वस्तिकलाञ्छनैः ।
सेवितस्तु महाभागैर्भोगिभिर्बद्धमण्डलैः ॥ २३३ ॥
स्फुरत्पीयूषकल्लोलमालाधवलवर्चसा ।
श्रीविहारेण हारेण साट्टहास इवोरसि ॥ २३४ ॥
सोऽब्रवीत्सितदन्तांशुपुष्पिताधरपल्लवः ।
समस्तमौक्तिकच्छायामन्तस्थां दर्शयन्निव ॥ २३५ ॥
भोः काकुत्स्थ न मिथ्यैव विक्रियां गन्तुमर्हसि ।
महाभूतैः सह वयं न मर्यादातिवर्तिनः ॥ २३६ ॥
न कामान्न च संरम्भान्न भयान्न च गौरवात् ।
मर्यादामुत्सहे त्यक्तुं शाश्वते वर्त्मनि स्थितः ॥ २३७ ॥
त्वत्तस्तेजस्विनोऽप्यन्ये जलस्थलपथार्थिनः ।
कथमेवंविधैः क्षोभैर्न मे कुर्याः पराभवम् ॥ २३८ ॥
अभीष्टं ते करोम्येष सगरान्वयमानभृत् ।
अचिन्त्यमद्भुतं लोके सागरे स्थलदर्शनम् ॥ २३९ ॥
बद्धं सेतुं द्रुमैः शैलैः स्तम्भिते सलिले मया ।
तरन्तु वानराः क्षिप्रं नास्त्येषां मत्कृतं भयम् ॥ २४० ॥
उत्तरे कृमिकूलाख्यो देशः पुण्यतरो मम ।
आभीरैर्दस्युभिर्घोरैरावृतः पापकर्मभिः ॥ २४१ ॥
मदर्थमुद्यतो बाणस्तेषु प्रक्षिप्यतामयम् ।
इत्यम्बुधिगिरा रामश्चिक्षेप ज्वलितं शरम् ॥ २४२ ॥
स देशस्तेन निर्दग्धो मरुकान्तारतां ययौ ।
निर्व्यालो राघववरात्क्षीरौषधिफलाकुलः ॥ २४३ ॥

---

१. 'कर्तुं' शा०.

ततो जलनिधिः प्रीत्या काकुत्स्थमवदत्पुनः ।
राजा दशरथो नाम ममाभूद्दयितः सुहृत् ॥ २४४ ॥
पुरा देवासुरे युद्धे स चाहं च समागतौ ।
एकीभावमिवापन्नौ सुरसाहाय्यकर्मणि ॥ २४५ ॥
स निर्जितामररिपुर्वरं लेभे सुरेश्वरात् ।
कुलचूडामणेर्यस्य त्वज्जन्म प्रथमं फलम् ॥ २४६ ॥
अयोध्यायां गृहे तस्य मासमध्युषितः सुखम् ।
सौहार्दप्रीतिसर्वस्वैरुपचारैरकृत्रिमैः ॥ २४७ ॥
सोऽहं तव पितुर्मित्रं तत्स्नेहे निष्प्रतिक्रियः ।
मन्ये कृतघ्नमात्मानं स्पृष्टं पापशतैरपि ॥ २४८ ॥
अद्याहमनृणो भूत्वा तत्पुत्रोपकृतौ स्थितः ।
भजे प्रीतिसुखोच्छ्वासविश्रान्तिं चिरसंचिताम् ॥ २४९ ॥
एष वानरवीरोऽत्र विश्वकर्मसुतो नलः ।
सेतुं बध्नातु गम्भीरे स्तम्भितेऽम्भसि संभृतम् ॥ २५० ॥
इत्युक्तो वारिनिधिना नलः काकुत्स्थशासनात् ।
सह प्लवंगमगणैरुद्ययौ सेतुकर्मणि ॥ २५१ ॥

इति समुद्रदर्शनम् ॥ ५ ॥

ततः प्रहृष्टाः कपयः सालतालकुलाचलात् ।
उन्मूल्योन्मूल्य जलधौ चिक्षेप क्षुभितेऽम्भसि ॥ २५२ ॥
सलिले पात्यमानानां गिरीणां वानरर्षभैः ।
उदभूत्प्रलयावर्तसूचकः क्षोभविभ्रमः ॥ २५३ ॥
मज्जतां भूभृतां सत्त्वकलिले सलिले मुहुः ।
असूच्यन्त गजाबन्धा भ्रान्तैरुपरि बुद्बुदैः ॥ २५४ ॥
तस्मिन्नत्यद्भुते तत्र प्रारब्धे सेतुकर्मणि ।
देवाः ससिद्धगन्धर्वा द्रष्टुं व्योम्नि समाययुः ॥ २५५ ॥

---

१. 'सुरवरो वरं' शा०.

अहो बत प्रभावोऽयं राघवस्यातिपौरुषः[1] ।
केन दृष्टं कदा नाम महाब्धौ सेतुबन्धनम् ॥ २५६ ॥
अहो नु पौरुषेणायं रामेणाश्चर्यकारिणा ।
सेतुः सेतुरिवाबद्धो दैवालङ्घनकर्मणि ॥ २५७ ॥
अयं दिगन्तरव्यापी सेतुर्जलधिपारगः ।
यशसा सह रामस्य कल्पस्थायी भविष्यति ॥ २५८ ॥
अहो प्रतापनिधिना रामेणाश्चर्यकारिणा ।
अलङ्घ्यशासनेनायं नदीनाथः स्थिरीकृतः[2] ॥ २५९ ॥
एष मज्जत्ययं मग्नः स्थितोऽयं न विकम्पते ।
सेतुबन्धे बभूवेति सुराणां व्योम्नि निःस्वनः ॥ २६० ॥
चतुर्दशसु बद्धेषु योजनेषु प्लवंगमैः ।
आश्चर्यदर्शनात्तस्थ इव सूर्योऽस्तमाययौ ॥ २६१ ॥
सा कदा दृश्यते लङ्का सेतुः संपूर्यते कदा ।
कपीनामिति कृच्छ्रेण सोत्कण्ठानां ययौ निशा ॥ २६२ ॥
क्रमेणैवं दिनैः षड्भिर्भूधरैर्वानराहृतैः ।
बबन्ध निश्चलं सेतुं विश्वकर्मसुतो नलः ॥ २६३ ॥
मलयाग्रात्प्रवृत्तं तं लङ्कामूलमुपागतम् ।
दशयोजनविस्तीर्णं शतयोजनमायतम् ॥ २६४ ॥
सेतुं निबद्धमालोक्य सुग्रीवो हर्षनिर्भरः ।
सज्जीकृतबलाम्भोधिः काकुत्स्थाय न्यवेदयत् ॥ २६५ ॥
अथ सुग्रीवसहितः सलक्ष्मणविभीषणः ।
अग्रे प्लवगसैन्यानां धन्वी रामः स्वयं ययौ ॥ २६६ ॥
ततः कोटिसहस्राणां वानराणां तरस्विनाम् ।
प्रययुः सेतुना तेन शङ्कुपद्मयुतानि च ॥ २६७ ॥
असूचीविवरे तस्मिन्व्रजति प्लवगार्णवे ।
अलब्धमार्गाः पयसा नभसापि[3] च ते ययुः ॥ २६८ ॥

१. 'मानुषः' शा०. २. 'स्थलीकृतः' शा०. ३. 'नभसा च परे' शा०.

संघैरविवरं तेषां तीर्णानां तरतामपि ।
अवसानपरिच्छेदैर्नालक्ष्यत परिक्षयः ॥ २६९ ॥

इति सेतुबन्धः ॥ ६ ॥

परं पारं समुद्रस्य संप्राप्ते रघुनन्दने ।
आरुरोह परां कोटिं प्रमोदस्त्रिदिवौकसाम् ॥ २७० ॥
ततः स्वयं समभ्येत्य प्रहृष्टः सरितां पतिः ।
उवाच राघवं प्रीत्या सुधां वर्षन्निवांशुभिः ॥ २७१ ॥
न राम मुनिवेशोऽयं जयारम्भे तवोचितः ।
युद्धमर्हन्ति राजार्हैर्भूषणैर्भूषिता नृपाः ॥ २७२ ॥
अपास्यैव जटाबन्धं परित्यज्य च वल्कलम् ।
गृहाण हेमकवचं दिव्यान्याभरणानि च ॥ २७३ ॥
इत्युक्त्वा सागरस्तस्य दिव्यं भूपतिभूषणम् ।
बबन्ध रघुनाथस्य भास्वरं लक्ष्मणस्य च ॥ २७४ ॥
आमुक्तकवचः श्रीमान्सदीप्ताङ्गदकुण्डलः ।
केयूररुचिरो नूनं रत्नशैल इवाबभौ ॥ २७५ ॥
सरत्नकवचो विश्वं बिभ्राणः प्रतिबिम्बितम् ।
विष्णोर्जगन्निवासस्य तुल्यरूप इवाभवत् ॥ २७६ ॥
ततः समुद्रवचसा स प्रविश्य जलान्तरम् ।
प्रणम्य वरुणं देवं तेनाशीर्भिर्विवर्धितः ॥ २७७ ॥
तमामन्त्र्य मुहूर्तेन पुनरभ्येत्य राघवः ।
सागरे स्वपदं याते बभूव समरोत्सुकः ॥ २७८ ॥
क्षणात्त्रिकूटकटकदिक्तटेषु च वानरैः ।
मीलितेषु दृशं रामः पौलस्त्यनगरे ददौ ॥ २७९ ॥

इति भूषणप्रदानम् ॥ ७ ॥

लङ्काशैलनिविष्टेषु परेषु पृथुपौरुषाः ।
उदतस्थुर्महामात्या दशग्रीवं सभास्थितम् ॥ २८० ॥

१. 'हारकेयूररुचिरो रत्न' शा०.

तानब्रवीत्स विज्ञाय बद्धं सेतुं महार्णवे।
आश्चर्यामर्षसंरम्भलज्जासंजातविक्रियः॥ २८१॥
अहो न सुखसंसक्तैरवलिप्तैः प्रमादिभिः।
भवद्भिर्मन्त्रिभिः शत्रुर्वर्धमानोऽप्युपेक्षितः॥ २८२॥
बद्धः सेतुर्महाम्भोधौ पारं प्राप्ताश्च शत्रवः।
अनुप्तचारैर्युष्माभिर्दोषोऽयं न विचिन्तितः॥ २८३॥
अप्रवृद्धेषु दोषेषु चिकित्सा पूर्वमेव यत्।
राज्याब्धिकर्णधाराणां मन्त्रिणां मन्त्रितैव सा॥ २८४॥
व्यसनोपहता यूयं यदि कार्यपराङ्मुखाः।
मन्त्रविक्रमयोरेकस्तदहं स्वयमास्थितः॥ २८५॥
इत्युक्ते राक्षसेन्द्रेण लज्जिते मन्त्रिमण्डले।
उवाच शृणुतामीषामिन्द्रजिद्विजयोर्जितः॥ २८६॥
तात संभावना केयं मिथ्यैवानुचिते जने।
भवद्भुजानां को नाम बिभर्ति प्रतिमल्लताम्॥ २८७॥
विवासितसुरेन्द्रस्य का चिन्ता मानुषे तव।
भीरवो भयदाः कस्य वानरा वनचारिणः॥ २८८॥
इत्युक्ते मेघनादेन प्रहस्तप्रमुखास्ततः।
आविद्धायुधसंभारास्तदेवोचुः पुनः पुनः॥ २८९॥
अथातिकायो मेधावी पुनः प्रोवाच रावणम्।
राजन्राज्ञां स्वधर्मेण वर्तनं व्यसनौषधम्॥ २९०॥
प्रजानां यत्परित्राणं दस्यूनां यत्प्रमार्जनम्।
स राज्ञां परमो मन्त्रः शेषः स्वैरकथारसः॥ २९१॥
परार्थे परदारेषु न येषां धीः प्रवर्तते।
तेषां पवित्रयशसां कलत्रं सर्वसंपदः॥ २९२॥
जात्या रामो न नः शत्रुर्न चासौ भूम्यनन्तरः।
सीतापहारकोपोऽस्य तत्प्रदानेन शाम्यति॥ २९३॥

---

१. 'नुविरज्यते' क०. २. 'संबाधा' शा०. ३. 'शत्रु' शा०.

त्रैलोक्यरक्षाभूतानां कुलश्लाघाभिमानिनाम् ।
परदारापहरणं कथं युक्तं भवादृशाम् ॥ २९४ ॥
रामाय त्यज्यतां सीता म्लानमुत्सृज्यतां यशः ।
वञ्चना क्रियतां तूर्णं कालस्याकालपातिनः ॥ २९५ ॥
इत्युक्तमतिकायेन हितं श्रुत्वा दशाननः ।
तमनादृत्य दर्पान्धः प्रोवाच शुकसारणौ ॥ २९६ ॥
प्रच्छन्नाभ्यामितो गत्वा भवद्भ्यां हरिवाहिनी ।
दृश्यतां युवयोरेव तत्संख्याने प्रगल्भता ॥ २९७ ॥
इति भर्त्रा समादिष्टौ तौ कृत्वा वानराकृतिम् ।
जग्मतुर्लघुसंचारौ यत्रास्ते रघुनन्दनः ॥ २९८ ॥
अपारे वानराम्भोधौ तौ चिरं गूढचारिणौ ।
नाग्रं न मध्यमन्तं वा प्रापतुर्यत्नमास्थितौ ॥ २९९ ॥
जगत्कपिमयं सर्वमेकीभूतमिवानिशम् ।
दृष्ट्वा शिखरिशृङ्गस्थौ तौ निःस्यन्दौ बभूवतुः ॥ ३०० ॥
ततो विभीषणश्छन्नं चरन्तौ शुकसारणौ ।
परिज्ञाय महामायौ राघवाय न्यवेदयत् ॥ ३०१ ॥
विभीषणगिरा तूर्णं गृहीतौ तौ प्लवंगमैः ।
न्यस्तौ रामस्य पुरतः क्षणं नो किंचिदूचतुः ॥ ३०२ ॥
तौ निर्वर्ण्य चिरं रामः स्मितधौताधरद्युतिः ।
उवाच दृश्यतां सेना विस्रब्धं त्यज्यतां भयम् ॥ ३०३ ॥
अयमस्म्येष सौमित्रिः श्रीमानेष विभीषणः ।
सुग्रीवाधिष्ठितं चैतद्वानराणां महद्बलम् ॥ ३०४ ॥
अपर्याप्ता हरिचमूः पौलस्त्याय निवेद्यताम् ।
क्षयाय रक्षसां सेयमक्षया निपतिष्यति ॥ ३०५ ॥
इति दत्ताभयौ तेन प्रगल्भौ क्षणदाचरौ ।
कृताञ्जलिपुटौ राममूचतुः सस्मिताननौ ॥ ३०६ ॥

दृष्टाः सुबहवोऽस्माभिर्देवासुरबलार्णवाः ।
एताः प्लवगवाहिन्यः कौतुकाय न नः परम् ॥ ३०७ ॥
प्रभविष्णुः प्रभावोऽयं किंत्वद्भुततरस्तव ।
स्थलीकृतं जलं येन भ्रूक्षेपेण महोदधेः ॥ ३०८ ॥
पवनः[1] प्लवणो यस्यां सेयं पौलस्त्यपालिता ।
मही कपिभिराक्रान्ता किमतः परमद्भुतम् ॥ ३०९ ॥
विधेरेवाद्भुतनिधेस्त्रैलोक्याश्चर्यकारिणी ।
अचिन्त्यविभवा शक्तिर्दृष्टा तव किमुच्यते ॥ ३१० ॥
इत्युक्त्वा तौ प्रययतुर्विमुक्तौ भयसंकटात् ।
विसृष्टौ सत्त्वशीलेन रामेण क्षणदाचरौ ॥ ३११ ॥
तौ समेत्य दशग्रीवं प्रणिपत्य हितैषिणौ ।
यथादिष्टं निवेद्यास्मै न विश्रान्तिमवापतुः ॥ ३१२ ॥
अपारस्य बलाम्भोधेरप्रवेशस्य दर्शनम् ।
विभीषणेन ग्रहणं मोक्षणं राघवेण च ॥ ३१३ ॥
सुग्रीवस्य प्रभावं च गाम्भीर्यं लक्ष्मणस्य च ।
विक्रमं वानराणां च सोच्छ्वासं तावभाषताम् ॥ ३१४ ॥
ततः सूर्यपथो[2]त्सेधसौधारूढं दशाननम् ।
द्रष्टुं समुद्यतं सेनामूचतुः शुकसारणौ ॥ ३१५ ॥
एष वानरवीराणां[3] श्रीमानग्रे स्थितो नलः ।
विश्वकर्मसुतो यस्य नादेनाकम्पते जगत् ॥ ३१६ ॥
पद्मकिंजल्कगौरोऽयं वीरो मेरुरिवापरः ।
वृतः पद्मसहस्रेण शूरः शङ्कुशतेन च ॥ ३१७ ॥
जृम्भायुतमुखो लङ्कां पिबन्निव निरीक्षते ।
दीप्ताङ्गदो गदास्फारकेसरो वालिनन्दनः ॥ ३१८ ॥
एष प्रजापतेः सूनुर्जाम्बवान्पृथुविक्रमः ।
गुरुभार्गवयोर्बुद्धौ[4] सहते तुल्यतां न यः ॥ ३१९ ॥

१. 'पवनाः पल्लवो' ख. २. 'सूर्योत्पथो' शा०. ३. 'सेनानां' शा०. ४. 'बुद्ध्या' शा०.

वरुणस्यैष पुत्रश्च हेमकूटो मदोत्कटः ।
पयसामिव सैन्यानां संख्या यस्य न विद्यते ॥ ३२० ॥
एष धर्मसुतो वीरः सुषेणः कपियूथपः ।
सोमपुत्रो दधिमुखो नीलश्च दहनात्मजः ॥ ३२१ ॥
यमस्य पुत्राः पञ्चैते पितुस्तुल्यपराक्रमाः ।
गजो गवाक्षो गवयः शरभो गन्धमादनः ॥ ३२२ ॥
एष स्फटिकशैलाभः कुमुदो नाम यूथपः ।
वेगवान्विनतो रम्भः क्रथनः पनसो हरः ॥ ३२३ ॥
एष सूर्यसुतः श्रीमान्सुग्रीवो वानरेश्वरः ।
यस्येयं महती सेना दृष्टिदोलाविलासिनी ॥ ३२४ ॥
एषोऽक्षहन्ता हनुमानुमापतिवरोर्जितम् ।
भवन्तमपि यश्चक्रे प्रौढलङ्काग्नितापितम् ॥ ३२५ ॥
एतौ च मैन्दद्विविदौ कुमारावश्विनीसुतौ ।
याभ्यां ब्रह्मवरात्पीतमाकण्ठममृतं दिवि ॥ ३२६ ॥
एष सत्त्वोदधिः श्रीमान्देवधुर्यो धनुष्मताम् ।
लङ्कामालोकयन्नास्ते रामः कमललोचनः ॥ ३२७ ॥
अस्य पार्श्वे स्थितः शौर्यगाम्भीर्यौदार्यलक्षणः ।
लक्ष्मणः कार्मुकासज्जज्यामार्जनकृतक्षणः ॥ ३२८ ॥
एष त्वदनुजो रामप्रणामानतशेखरः ।
प्रासादालोकनेनास्य बहुमानोन्नताशयः ॥ ३२९ ॥
कोटीशतसहस्राणां सहस्रं शङ्ख उच्यते ।
शतं शङ्खसहस्राणां वृन्दं संख्याविदो जगुः ॥ ३३० ॥
तेषां शतसहस्रं तु पद्ममित्यभिधीयते ।
तेषां शतसहस्रं तु महापद्मं विदुर्बुधाः ॥ ३३१ ॥
कपिसैन्ये महापद्मसंख्या नैवात्र विद्यते ।
चुलुकैः परिसंख्यातुं शक्यं जलनिधेर्जलम् ॥ ३३२ ॥

दृशा सूर्यस्य वा तेजो न त्वेतद्विपुलं बलम्।
प्रभो प्रसीद प्रणयाद्भृत्यानां भृत्यवत्सल।
संधिस्तवास्तु रामेण दीयतामस्य मैथिली॥ ३३३॥
इति श्रुत्वा तयोर्वाक्यं रावणः क्रोधमूर्च्छितः।
तौ निर्भर्त्स्य बलज्ञाने चारानन्यानवासृजत्॥ ३३४॥
विभीषणपरिज्ञाते रामेण परिरक्षिते।
चारचक्रे पुरः प्राप्ते त्रस्ते वन्ध्यपरिश्रमे॥ ३३५॥
निविष्टे सानुजे रामे सुवेलस्य गिरेस्तटे।
लङ्काद्वारेषु रुद्धेषु वानरानीकनायकैः॥ ३३६॥
विद्युज्जिह्वं समानाय्य सचिवं राक्षसेश्वरः।
संमन्त्र्य सुचिरं तेन तूर्णं सीतान्तिकं ययौ॥ ३३७॥
इति चारप्रवेशः॥ ८॥
सतीमधोमुखीं प्राप्य वेपमानां भयाकुलाम्।
बालां मृगीमिव व्याघ्रः प्रोवाच चकितेक्षणाम्॥ ३३८॥
सीते यस्योपरि कृतस्त्वया साधुपरिश्रमः।
स स्वयं पतितः पङ्कः प्लवशील इवावटे॥ ३३९॥
छिन्नग्रीवः स सुग्रीवः सोऽङ्गदश्चूर्णिताङ्गदः।
हतश्च स विनिष्पिष्टहनुश्च हनुमान्भुवि॥ ३४०॥
त्यज रामगतां प्रीतिं विच्छिन्नालम्बनां स्वयम्।
भजस्व भोगविभवं रम्भोरु भवने मम॥ ३४१॥
इत्युक्त्वा तां दशग्रीवः संकेताद्बहिरास्थिताम्।
आनिनाय महाकायं विद्युज्जिह्वं सुसंज्ञया॥ ३४२॥
स प्रविश्याज्ञया भर्तुः प्रणतः सशरासनम्।
मायारामशिरस्तुल्यं चिक्षेप रुचिरं पुरः॥ ३४३॥
तद्दृष्ट्वा जानकी घोरं वैरस्यं जीवितासहम्।
तस्थौ कृतोपकारेव क्षणं मोहेन निश्चला॥ ३४४॥

१. 'वैशसं' शा०.

अत्रान्तरे समुद्भ्रान्तः प्रविश्याकुललोचनः ।
चलाध्यक्षोऽथ स द्वास्थः संज्ञयास्मै न्यवेदयत् ॥ ३४५ ॥

इति मायाशिरोदर्शनम् ॥ ९ ॥

ततः प्रयाते पौलस्त्ये संज्ञामासाद्य जानकी ।
शुशोच साश्रुनयना प्राणत्यागकृतक्षणा ॥ ३४६ ॥
आर्यपुत्र कथं राम संकल्पानल्पपल्लवा ।
आशालतेयं निर्लूना फलकाले मम त्वया ॥ ३४७ ॥
गन्तुमभ्यर्थितस्याद्य जीवितस्यायमञ्जलिः ।
येन व्यवहितं पत्युर्न पश्यामि मुखाम्बुजम् ॥ ३४८ ॥
उत्तीर्णाब्धिं समासाद्य लङ्कां राक्षससंकुलाम् ।
ईप्सितं न त्वया प्राप्तं मम भाग्यविपर्ययात् ॥ ३४९ ॥
आरुह्य मेरुशिखरं पतिताहमधोमुखी ।
प्राप्तोऽपि निकटं यस्याः प्रयातस्तव दर्शनम् ॥ ३५० ॥
इयतीं भूमिमभ्येत्य कृत्वा कर्म सुदुष्करम् ।
असंदर्श्य मुखाम्भोजं कथं नाथ गतोऽसि मे ॥ ३५१ ॥
प्रिय क्षणं प्रतीक्षस्व प्रियां भार्यामनागसम् ।
परित्यज्य न गच्छन्ति सत्यशीला भवद्विधाः ॥ ३५२ ॥
इति प्रलापिनीं बालां निमग्नां शोकसागरे ।
निराशां दर्शने पत्युर्बद्धाशां जीवितक्षये ॥ ३५३ ॥
उवाच सरमा नाम राक्षसी प्रीतिवत्सला ।
तद्दुःखानलसं[1]प्राप्ततीव्रसंतापवेदना ॥ ३५४ ॥
अयि मुग्धे न जानासि दशग्रीवस्य वक्रताम् ।
मायाविलसितैस्तैस्तैर्दुःखं ते विदधाति यः ॥ ३५५ ॥
अपि भर्तुः प्रभावज्ञा कथं मिथ्या विमूर्छसि ।
स्वभावसुलभा सत्यं स्त्रीणामत्यन्तभीरुता ॥ ३५६ ॥

१. 'संक्रान्त' शा०.

को नाम राघवं हन्तुमात्तचापं प्रगल्भते।
प्रभावं यस्य वक्तीव सेतुसीमन्तितोऽम्बुधिः॥ ३५७॥
समाश्वसिहि नास्त्येव रामस्य परतो भयम्।
मायाशिरस्तु पापेन विद्युज्जिह्वेन निर्मितम्॥ ३५८॥
एष रामबलाम्भोधिनिर्घोषः श्रूयते महान्।
पिनष्टि भुवनव्यापी धृतिं यः सर्वरक्षसाम्॥ ३५९॥
स्वजनप्रार्थितोऽप्येष जनन्या च दशाननः।
नायाति स्पष्टतां वक्रः प्रत्यासन्नपरिक्षयः॥ ३६०॥
कुरङ्गशृङ्गकुटिला सहसैव दुरात्मनाम्।
दैवस्येव गतिः केन सरलीक्रियते मतिः॥ ३६१॥
कलुषस्यैव वृद्ध्यैव नीचमार्गानुसारिणः।
वार्यते केन कौटिल्यं खलस्य सलिलस्य च॥ ३६२॥
दुर्जनस्य श्वपुच्छस्य व्यालस्योष्ट्रगलस्य च।
न मन्त्रैर्नौषधैर्वापि ऋजुता जातु जायते॥ ३६३॥
विनष्टः सर्वथा पापः पौलस्त्यो विश्वकण्टकः।
धर्मारामस्य रामस्य सत्यं हस्तगतो जयः॥ ३६४॥
इति श्रुत्वैव सहसा सिक्तेवामृतवृष्टिभिः।
भयं शोकं च तत्याज जानकी लब्धजीविता॥ ३६५॥

इति सरमावाक्यम्॥ १०॥

ततः सज्जीकृतबलं सभासीनं दशाननम्।
वृद्धामात्यः समभ्येत्य माल्यवानभ्यभाषत॥ ३६६॥
विधेयः साधुवृत्तानां विदुषां हितवादिनाम्।
न याति विनयं भ्रंशवाच्यतां वसुधाधिप॥ ३६७॥
देशकालोचितौ यस्य सततं संधिविग्रहौ।
भ्रूक्षेपमात्रानुगताः पार्श्वस्थास्तस्य संपदः॥ ३६८॥

---

१. 'वा वेत्ति' शा०.

कुर्यान्न्यूनबलः संधिं ज्यायान्कुर्वीत विग्रहम् ।
तुल्यक्षयभयान्नित्यमुपेक्षितसमः समम् ॥ ३६९ ॥
न मह्यं रोचते युद्धं रामेण बलशालिना ।
सीताप्रदानमात्रेण तेन संधिस्तवोचितः ॥ ३७० ॥
जयस्यायतनं धर्मः पापं वर्त्म क्षयस्य च ।
धर्मपक्षे स्थिता देवा रामस्य विजयैषिणः ॥ ३७१ ॥
अधर्मप्रभवाण्येव निमित्तानि गृहेषु नः ।
सीताहेतोः प्रदृश्यन्ते येषामग्रफलं क्षयः ॥ ३७२ ॥
कृष्णा स्त्री पाण्डुरैर्दन्तैर्हसन्ती लोहितांशुका ।
रथ्यासु संचरति यत्तत्क्षयस्यैव लक्षणम् ॥ ३७३ ॥
यद्बलिं भुञ्जते प्रेता जायन्ते गोषु यत्खराः ।
नकुलेष्वाखवो यस्य तद्विनाशस्य लक्षणम् ॥ ३७४ ॥
दुर्जयो राघवः सत्यं पापपकाश्च राक्षसाः ।
अवतारप्रकारोऽसौ विष्णोर्दैत्यकुलच्छिदः ॥ ३७५ ॥
इति माल्यवतो वाक्यं श्रुत्वा क्रोधानलाकुलः ।
उवाच मन्त्रिणां मध्ये ससंरम्भो दशाननः ॥ ३७६ ॥
दृष्टापरविमर्दस्य स्वर्गविध्वंससाक्षिणः ।
वज्रोल्लेखविलुप्तस्य कुतस्ते भयमागतम् ॥ ३७७ ॥
अवश्यलुप्तसत्त्वानां वृद्धानां शिथिलात्मनाम् ।
समर्पितस्तव मया सत्यं स्थविरगौरवात् ॥ ३७८ ॥
हीनोऽपि नावमन्तव्यो बलिभिः शत्रुरित्यसौ ।
चिन्तितस्तापसस्तस्माद्भयसंभावनैव का ॥ ३७९ ॥
इति ब्रुवाणे साक्षेपं कुपिते राक्षसेश्वरे ।
बभूव माल्यवान्मौनी निःशब्दे मन्त्रिमण्डले ॥ ३८० ॥

इति माल्यवद्वाक्यम् ॥ ११ ॥

लज्जिते स्वगृहं याते माल्यवत्यानतानने ।
संमन्त्र्य रावणः क्षिप्रं दुर्गरक्षाविधिं व्यधात् ॥ ३८१ ॥

स प्रहस्तं समादिश्य पूर्वद्वाराभिगुप्तये।
निधाय दक्षिणद्वारे महापार्श्वमहोदरौ॥ ३८२॥
स्वयमिन्द्रजितं वीरं पुत्रं विन्यस्य पश्चिमे।
आदिदेशोत्तरद्वारे सानुगौ शुकसारणौ॥ ३८३॥
विभीषणगिरा ज्ञात्वा लङ्कागुप्तिं परैः कृताम्।
रामोऽपि द्वारसंरोधविधानं विदधे स्वयम्॥ ३८४॥
पूर्वद्वारं तदादेशान्नीलो जग्राह यूथपः।
अङ्गदो दक्षिणं वीरः पश्चिमं पवनात्मजः॥ ३८५॥
स्वयं सलक्ष्मणो रामः परिपीड्य तथोत्तरम्।
दिदेश मध्यमानीके ससुग्रीवं विभीषणम्॥ ३८६॥

इति सैन्यप्रविभागः॥ १२॥

अथोदतिष्ठद्गम्भीरः प्रलयाम्भोधरध्वनिः।
निर्घोषः कपिसैन्यानां [1]रक्षसां क्षयलक्षणः॥ ३८७॥
तेन शब्देन संभ्रान्तभुवनक्षयकारिणा।
लङ्का चकम्पे साध्वीव विध्वंसातङ्कशङ्किता॥ ३८८॥
अथाहूयाङ्गदं रामो विभीषणमते स्थितः।
उवाच गच्छ मद्वाक्याद्दूतं ब्रूहि दशाननम्॥ ३८९॥
न धनेषु न भोगेषु न मित्रेषु न बन्धुषु।
न प्राणेषु तव प्रीतिः सर्वं यत्त्यक्तुमर्हसि॥ ३९०॥
त्वया हेममृगव्याजाद्वञ्चिता यद्वने वयम्।
कौशलं तव तत्रैव न रणे बाहुतोरणे॥ ३९१॥
भिक्षुरूपस्य ते शून्या न तपोवनभूरियम्।
इमास्ताः कार्मुकक्रूरहुंकारमुखराजयः॥ ३९२॥
जीविताशां त्यज व्याजहृतां वा जनकात्मजाम्।
वधो मोक्षश्च ते पाप भुजे वाक्ये च मे स्थितौ॥ ३९३॥

---

१. 'रक्षःसंशय' पा०.

एतत्कपिपतेः सैन्यमते वयमिदं यतः ।
क्रियतामग्निपतनं यदि खिन्नोऽसि जीविते ॥ ३९४ ॥
इति शासनमादाय रामस्य शिरसाङ्गदः ।
उत्पत्य प्रययौ व्योम्ना पक्षवानिव पर्वतः ॥ ३९५ ॥
अथासाद्य दशग्रीवं सचिवैः परिवारितम् ।
रामसंदेशमावेद्य जगाद पुनरङ्गदः ॥ ३९६ ॥
अनल्पमिदमैश्वर्यं कण्ठच्छेदपणार्जितम् ।
उन्मत्त इव सर्वस्वं कथ त्यजसि राक्षस ॥ ३९७ ॥
यदि त्वमेकः क्षीणायुस्तत्क्षिपात्मानमम्बुधौ ।
किं कृतं पुत्रपौत्रैस्ते येषां निधनमिच्छसि ॥ ३९८ ॥
खरास्ते मृत्युनखराः खरप्राणापहारिणः ।
शराः शरासनोष्णांशुकरा राम करैर्धृताः ॥ ३९९ ॥
इति श्रुत्वैव कोपाग्निज्वालाविभ्रमभङ्गुरैः ।
भ्रूभङ्गैरभ्यधात्पिङ्गैर्वधं दशमुखः कपेः ॥ ४०० ॥
ततो गृहीतः सहसा राक्षसैर्गिरिविग्रहैः ।
जग्राह गगनं वेगादङ्गदः शत्रुभङ्गदः ॥ ४०१ ॥
स तान्विधूयातिजवाद्भुजभग्नानतापयत् ।
दूरप्रपातसंमोहनष्टसंज्ञामहीतले ॥ ४०२ ॥
निपात्य चरणाग्रेण राजप्रासादमुन्नतम् ।
प्रययौ वालितनयः काकुत्स्थो यस्य सानुगः ॥ ४०३ ॥

इत्यङ्गदवाक्यम् ॥ १३ ॥

अथ प्राकारमारुह्य दृष्ट्वा लङ्कां प्लवंगमैः ।
निरुद्धां रावणो योद्धुमादिदेश निशाचरान् ॥ ४०४ ॥
निर्गतेष्वथ रक्षःसु भीत्येवादर्शनं ययुः ।
व्रजद्गजघटाघण्टाटङ्कारबधिरा दिशः ॥ ४०५ ॥

---

१. 'धनुः' शा०.

कोटीशतसहस्राणि वानराणां तरस्विनाम्।
प्राकाराजाल[1]शृङ्गाणि समारुह्य समन्ततः ॥ ४०६ ॥
[2]स्थविरे घोरकल्पान्तघनघोपघनस्वनैः।
नादैर्भुवनसंघट्टसंकटास्फोटकारिभिः ॥ ४०७ ॥
जयत्यविजितः श्रीमान्सानुजो जानकीपतिः।
देवः सुग्रीवसाम्राज्यप्रार्थनाकल्पपादपः ॥ ४०८ ॥
राजा जयति सुग्रीवः शुभ्रा विभ्राजते गुणैः।
रामकीर्तिः पताकेव यस्य श्रीर्विश्वविश्रुता ॥ ४०९ ॥
इति गम्भीरनिर्घोपैर्गर्जन्तः कपियूथपाः।
प्राकारपरिखाजा[3]लविनाशाय समुद्ययुः ॥ ४१० ॥

इति समुद्रपर्व ॥ १४ ॥

अथाहन्यत सैन्येषु क्षुभिताम्भोधिनिःस्वनः।
रजनीचरराजस्य समरारम्भदुन्दुभिः ॥ ४११ ॥
ततः काञ्चनसंनाहैर्वाजिभिः स्यन्दनैर्द्विपैः।
रक्षसां दीप्तशस्त्रैश्च विबभुः पिङ्गला दिशः ॥ ४१२ ॥
बभूव संप्रहारार्हः कपिराक्षससैन्ययोः।
समागमः सागरयोः प्रलयोद्धूतयोरिव ॥ ४१३ ॥
पुरः प्रवृत्ते समरे घोपघट्टितदिक्तटे।
शिलाशस्त्रास्त्रनिर्घोपैर्ज्वालाकुलमभून्नभः ॥ ४१४ ॥
खड्गाभिघातसंघट्टघोरश्चटचटो रवः।
तदभूद्भुवनव्यापी वेणूनां स्फुटतामिव ॥ ४१५ ॥
अश्रूयत ततः स्फूर्जद्वज्रनिष्पेपसोदरः।
राममुष्टिसमाकृष्टधीरस्य धनुपो ध्वनिः ॥ ४१६ ॥
रामचापच्युताश्चेरुर्वीराणां धृतिहारिणः।
संग्रामलक्ष्मीविक्षिप्तकटाक्षचपलाः शराः ॥ ४१७ ॥

1. 'शल' शा०. 2. 'ऊचिरे' शा०. 3. 'शाल' शा०.

प्रतापदहनज्वालारणदुर्दिनविद्युतः ।
ताः शरश्रेणयश्चक्रुः कालजृम्भाविजृम्भितम् ॥ ४१८ ॥
आजघानोरसि क्रोधादिन्द्रजिद्दयाङ्गदम् ।
रथं मनोरथमिव प्राञ्ममाथाङ्गदस्य च ॥ ४१९ ॥
वानरौ रम्भविनतौ सालतालशिलायुधौ ।
अतिकायस्य चक्राते संरोधं शरवर्षिणः ॥ ४२० ॥
महोदरशरैर्विद्धः सुषेणः शिलया रथम् ।
साश्वसूतध्वजं तस्य जघान घनगर्जितः ॥ ४२१ ॥
जाम्ववान्खरपुत्रस्य मकराक्षस्य रक्षसः ।
वृक्षं चिक्षेप तं चासौ चिच्छेद निशितैः शरैः ॥ ४२२ ॥
सायकैः परितप्तोऽथ जाम्ववान्मुष्टिभिः क्षणात् ।
स्फारं जघानास्य रथं वृद्धोऽपि तरुणोद्यमः ॥ ४२३ ॥
वृक्षायुधः शतवलिर्विद्युज्जिह्वं समाद्रवत् ।
कुम्भकर्[1]स्यात्मजं कुम्भं नीलो जग्राह यूथपः ॥ ४२४ ॥
देवान्तकेन युयुधे गवाक्षः पृथगृक्षधृक् ।
ऋषभः सारजेनाथ त्रिशिराः शरभेण च ॥ ४२५ ॥
नरान्तकेन पनसः कुमुदेनाप्यकम्पनः ।
धूम्राक्षेणोग्रशस्त्रेण केसरी हनुमत्पिता ॥ ४२६ ॥
महापार्श्वेण वलिना तरस्वी गन्धमादनः ।
शुकेन वेगदर्शी च पतनेन नलस्तथा ॥ ४२७ ॥
मेघमाली हनुमता मित्रघ्नेन विभीषणः ।
प्रसघेन च सुग्रीवो विरूपाक्षेण लक्ष्मणः ॥ ४२८ ॥
मिथस्तेषां प्रहरतां घोरे समरकर्मणि ।
वपूंषि ययुरभ्यासात्सहस्राकारतामिव ॥ ४२९ ॥
अग्निकेतुर्वलोदग्रः सुमन्त्रो[2] रश्मिकेतनः ।
यज्ञकोपश्च काकुत्स्थमदृश्यं चक्रिरे शरैः ॥ ४३० ॥

१. 'कर्णा' शा०. २. 'सघ्नो' शा०.

तेषां शिरांसि चिच्छेद रामः सपदि पत्रिभिः ।
यैरभूत्पातितैर्मृत्योः पादन्यासोपलावली ॥ ४३१ ॥
मैन्दोऽपि मुष्टिघातेन वज्रमुष्टिमपातयत् ।
द्विविदो निष्पपाताथ शैलाभमशनिप्रभम् ॥ ४३२ ॥
जघान नीलः शैलेन निकुम्भं शरवर्षिणम् ।
इति तेषामभूद्द्वन्द्वं[1] सक्तानां युद्धमुद्धतम् ॥ ४३३ ॥

इति द्वन्द्वयुद्धम् ॥ १५ ॥

ततः शस्त्रशिलासारत्रासादिव दिवाकरः ।
करावृतमुखः प्रायादस्तमस्ताद्रिमस्तकात् ॥ ४३४ ॥
कालदेहाः समागत्य ततस्तिमिरराक्षसाः ।
निःशेषमापपुः संध्यारागमोहितमम्बरे ॥ ४३५ ॥
सप्तभूते क्षणे तस्मिन्ययुर्निःशेषतां दिशः ।
तमोभिर्घोरसंघट्टैर्वेतालैरिव घट्टिताः ॥ ४३६ ॥
सुग्रीवाज्ञासमायातैर्भिन्नाञ्जनसमप्रभैः ।
ऋक्षयूथैरिव व्याप्तं तमोभिरभवन्नभः ॥ ४३७ ॥
रक्षःकायैर्गजैः खड्गैस्तमो वान्तमिवाभवत् ।
उष्णीषैश्चामरैश्छत्रैः क्वचिद्ग्रस्तमिवाभवत् ॥ ४३८ ॥
वाजिव्रजाः खुररवैः स्यन्दनाश्चक्रनिःस्वनैः ।
घण्टाशब्देन जगतः सूचिताः समरे ययुः ॥ ४३९ ॥
वभौ तमसि रामस्य हेमपुङ्खशरावली ।
लीना कनकलेखेव नीले व्योमकषाश्मनि ॥ ४४० ॥
सा कालरात्रिर्विस्पष्टताराविकटदन्तुरा ।
तमोभिर्मुक्तकेशीव भूतानां भयदाभवत् ॥ ४४१ ॥
बभूव समरोद्भूतधूलिनीहारसंवृता ।
रक्षःशस्त्रास्त्रभीतेव नेत्रोन्मीलिततारका ॥ ४४२ ॥

---

1. 'द्वे' ग्रा०.

राक्षसोऽहं प्लवङ्गोऽहमिह तिष्ठ स्थिरो भव ।
इत्यजृम्भन्त दन्तांशुजटिलाः सुभटोक्तयः ॥ ४४३ ॥
तिष्ठ स्थितोऽहं युध्यस्व निहतोऽसि त्वमाहतः ।
इतिशब्दैः प्रवीराणां क्षतावेवोद्गतं तमः ॥ ४४४ ॥
रक्षोभिर्भाष्यमाणानां कपीनां तैश्च रक्षसाम् ।
बभूवाकर्षनिष्कर्षहर्षसंवर्षनिःस्वनः ॥ ४४५ ॥
रक्षःशिरोभिः काकुत्स्थशरोत्कृत्तैरभून्मही ।
पक्वैरिव फलैर्व्याप्ता तमस्तालवनच्युतैः ॥ ४४६ ॥
चुकूज रघुनाथस्य यत्र यत्रोद्यतं धनुः ।
अराक्षसा क्षणेनैव तत्र तत्राभवत्क्षितिः ॥ ४४७ ॥
ते शुद्धपक्षाः काकुत्स्थ[1]स्नेहनाराचसंचयाः ।
स्मितस्मेरा [2]इव दिशो जहुस्तिमिरकञ्चुकान् ॥ ४४८ ॥
यशःसौगन्ध्यलुब्धास्ते वीरवक्त्राब्जपातिनः ।
विचेलुः समरोद्याने कामं रामशिलीमुखाः ॥ ४४९ ॥
वर्तमाने रणे तस्मिन्संहारे कपिरक्षसाम् ।
अवर्तमाने तिमिरे दिक्षु संघट्टितास्विव ॥ ४५० ॥
अङ्गदेनेन्द्रजित्क्षिप्रं हताश्वो हतसारथिः ।
वीरैरनुचरैः सार्धं धीमानन्तरधीयत ॥ ४५१ ॥
रक्तोष्णीषा[3]म्बरः स्रग्वी यागभूमिं प्रविश्य सः ।
आयसस्रुक्स्रुवो न्यस्तविभीतकसमित्कुशः ॥ ४५२ ॥
प्रवृद्धं वह्निमादाय सर्वायुधकृतस्तरः ।
छागस्य जीवतः कण्ठात्कृष्णस्यादाय शोणितम् ॥ ४५३ ॥
जुहाव विधिवन्मन्त्रैः प्रयतः सिद्धये युधि ।
अथोदतिष्ठत्कनकस्यन्दनं पावकप्रभः ॥ ४५४ ॥
प्रदक्षिणशिखाद्वह्नेर्हेमरागो धृतध्वजः ।
तमारुह्योग्रनिर्घोषमन्त[4]र्धानं गतः क्षणात् ॥ ४५५ ॥

१. 'स्पष्ट' शा०. २. 'हि ककुभां जहुः' शा०. ३. 'सुर' शा०. ४. 'त्तवाण' शा०.

इन्द्रजित्समरे भ्रायात्तमोभिस्तरुणैर्वृतः ।
स रामलक्ष्मणौ स्फारशरजालवृताम्बरौ ॥ ४५६ ॥
अदृश्यौ व्योमगश्चक्रे घोराभिः शरवृष्टिभिः ।
रामसौमित्रिविशिखास्तमन्तर्हितमम्बरे ॥ ४५७ ॥
अप्राप्यानुगताः पेतुः खलमेवागता इव ।
प्रच्छन्नं चरतस्तस्य घोरमायाविधायिनः ।
शस्त्रवृष्टिं शरैर्घोरां चिच्छेद रघुनन्दनः ॥ ४५८ ॥
पीता इव दिशः सर्वा निगीर्णमिव चाम्बरम् ।
क्षिप्तानि भुवनानीव तेनामन्यन्त वानराः ॥ ४५९ ॥
वेगावपातिनस्तस्य शरैरशनिदारुणैः ।
दारितावपि निष्कम्पौ राघवौ युधि तस्थतुः ॥ ४६० ॥
तौ भूरिरुधिरासारसंसिक्ताखिलविग्रहौ ।
उत्फुल्लकिंशुकाशोकसंकाशौ वर्धतः क्षणम् ॥ ४६१ ॥
अप्राप्ये विपुले शत्रौ विलक्षे शरसंचये ।
उवाच रामं सौमित्रिः कोपान्नाग इव श्वसन् ॥ ४६२ ॥
अनुजानीहि मामार्य ब्रह्मास्त्रेण निशाचरम् ।
निर्दहाम्यफलोद्योगलज्जां युधि कथं सहे ॥ ४६३ ॥
मण्डलीकृतचापस्य लक्ष्मणस्येषुवर्षिणः ।
श्रुत्वैतद्वचनं धीरः प्रत्यभाषत राघवः ॥ ४६४ ॥
ब्रह्मास्त्रेण कथं नाम जगत्सर्वं सराक्षसम् ।
दग्धुमिच्छसि संरम्भादेकस्येन्द्रजितः कृते ॥ ४६५ ॥
भ्रातः क्षणं प्रतीक्षस्व लक्ष्यतामेष यातु नः ।
सारतां ज्ञास्यसि ततः शराणां शैलभेदिनाम् ॥ ४६६ ॥
विभूतिरिव दृप्तानां चपलानामिवोन्नतिः ।
मायाबलानामचिरं भवति प्रभविष्णुता ॥ ४६७ ॥
मायाव्यवहितस्यास्य गूढं गगनचारिणः ।

---

१. 'वर्धतुः' शा०.

सावेगाः प्लवगाः शत्रोर्गतिं ज्ञातुं न पुंगवाः ॥ ४६८ ॥
इत्युक्त्वा रघुनाथेन निर्दिष्टाः कपियूथपाः ।
दिशासु विविशुर्व्योम सज्जाः शत्रजितः क्षये ॥ ४६९ ॥
नीला नीलात्मजगजास्ते मैन्दद्विविदाङ्गदाः ।
शरभर्षभसंपातिहराश्चेरुर्नभस्तले ॥ ४७० ॥
तेषां गरुडवेगानां गतिं गगनवासिनाम् ।
शरैरवारयद्धोरैरिन्द्रजिद्विजयोर्जितः ॥ ४७१ ॥
अदृश्येनाशनिस्पर्शैर्विशिखैर्भृशमाहताः ।
ते तेन तमसि स्फीते निपेतुः पर्वता इव ॥ ४७२ ॥
ततः स्फारशरासारैर्निःसूत्रान्तरपातितैः ।
चकार राघवौ वज्रशिखाप्रेताविवेन्द्रजित् ॥ ४७३ ॥
भुजङ्गवदनैर्व्याप्तौ ज्वालामालोल्बनैः शरैः ।
विरुद्धचापव्यापारौ दुर्लक्ष्यौ तौ बभूवतुः ॥ ४७४ ॥
कल्पान्तवाताभिहतौ तौ च कल्पद्रुमाविव ।
तौ चन्द्रे दुर्निमित्ताय च्युते सूर्य इवाम्बरात् ॥ ४७५ ॥
तदूर्ध्वं साट्टहासेन नादेनाघट्टयन्दिशः ।
जगाम गगनव्यापी विश्राव्य स्वयमिन्द्रजित् ॥ ४७६ ॥

इति रात्रियुद्धे इन्द्रजिज्जयः ॥ १६ ॥

विष्णुशक्रोपमौ दृष्ट्वा पतितौ रामलक्ष्मणौ ।
सुग्रीवमुख्यास्तं देशमाययुः सविभीषणाः ॥ ४७७ ॥
ते राघवासक्तदृशः सुग्रीवहनुमन्मुखाः ।
विद्धा इवापीतविषैः सर्वमर्मसु सायकैः ॥ ४७८ ॥
मनोरथरथभ्रष्टाः श्वभ्रे निपतिता इव ।
भग्नाभिमानविभवा मेरुशृङ्गादिव च्युताः ॥ ४७९ ॥
भिन्ने प्रवाहने मग्ना वणिजा जलधाविव ।
दस्युभिर्म्लेच्छदेशेषु विक्रीताः श्रोत्रिया इव ॥ ४८० ॥

नीचयाच्ञावमानेन संतप्ता इव साधवः ।
दुःखसंत्रासदैत्यानां लज्जिताः प्रययुर्वशम् ।
हस्तन्यस्तललाटाग्रं सुग्रीवं साश्रुलोचनम् ॥ ४८१ ॥
दुःखक्रोधानलाक्रान्तमभाषत विभीषणः ।
युद्धान्येवंविधान्येव विजये नास्ति निश्चयः ॥ ४८२ ॥
चला सिद्धिर्विधौ वक्रे पौरुषे सफलं क्वचित् ।
त्यज्यतामेष संतापः शूरः शोच्यो न राघवः ॥ ४८३ ॥
अवश्यं जन्मवीराणां वधाय विजयाय वा ।
अच्छन्नं समरच्छिन्नैरचलं वीचिचञ्चलैः ॥ ४८४ ॥
अनल्पमल्पैरसुभिर्लभन्ते सुभटा यशः ।
मा कृथा मोहसुलभं शोकं शत्रुपराभवे ॥ ४८५ ॥
अभिमानधनानां हि भुजायत्ता प्रतिक्रिया ।
सखे क्षणं प्रतीक्षस्व मोहं त्यक्ष्यति राघवः ॥ ४८६ ॥
नास्ति मृत्युभयं सत्यं सत्यधर्मानुयायिनाम् ।
न मोहः कृच्छ्रकालेषु व्यसनव्याधिभेषजम् ॥ ४८७ ॥
धैर्यादीनानि कार्याणि सर्वथा धैर्यशालिनाम् ।
त्वयि प्रतापतिग्मांशो मोहमेघनिमीलिते ॥ ४८८ ॥
नौरिवाकर्णधारेयं भज्यते हरिवाहिनी ।
इत्युक्त्वा सलिलेनास्य प्रमृज्य नयने स्वयम् ।
आश्वासं विदधे वीरः प्लवगानां विभीषणः ॥ ४८९ ॥
शयितौ वीरशयने राघवौ हनुमन्मुखाः ।
तृणाञ्चनेऽपि चकिता ररक्षुर्यत्नमास्थिताः ॥ ४९० ॥
गिरा शक्रजितोर्ज्ञात्वा निहतौ रामलक्ष्मणौ ।
रावणस्तं परिष्वज्य विदधे नगरोत्सवम् ॥ ४९१ ॥
पुष्पकं सममारोप्य राक्षसीभिस्तु रक्षिताम् ।
सीतामदर्शयत्तस्यै शरतल्पगतं पतिम् ॥ ४९२ ॥

सा तं दृष्ट्वैव सहसा मोहेन महता हता ।
संज्ञामासाद्य शनकैर्विललापाश्रुगद्गदम् ॥ ४९३ ॥
अहो नु पुण्यहीनाया ललाटे मम संकटे ।
त्वत्समागमपीयूषप्राप्तिर्न लिखिता पुनः ॥ ४९४ ॥
दाक्षिण्यं तत्क ते नाथ क सा प्रीतिरकृत्रिमा ।
यद्धि मामसुरावाप्तां दृष्ट्वा नैवाभिभाषसे ॥ ४९५ ॥
कोऽयं कठोरपर्यन्तः कठिनो मन्युविप्लवः ।
चक्षुषा प्रेमदिग्धेन कथं मां न निरीक्षसे ॥ ४९६ ॥
प्रयच्छ मे प्रतिवचः पश्य प्रणयिनीं दृशा ।
प्रसादाल्लालितः पूर्वं नावज्ञां सहते जनः ॥ ४९७ ॥
अपि ते हृदयं कच्चिदध्यास्ते न पराङ्गना ।
अपि नाम न ते स्नेहः प्रवासान्मयि विस्मृतः ॥ ४९८ ॥
अहोऽसि तव धैर्याब्धे निहिताशेषरक्षसा ।
अहो उल्लङ्घिताम्भोधेर्गोष्पदं पतनं तव ॥ ४९९ ॥
सुचिरायासतप्ताया नेदानीं दर्शनं तव ।
जीवितत्यागमात्रेण परलोके समागमः ॥ ५०० ॥
पाणिपादतलाशक्तै रेखाकमलमण्डलैः ।
वैधव्यं सूचितमिदं कथं मे शुभलक्षणैः ॥ ५०१ ॥
ये भर्तृशस्तां मामाहुः कन्यालक्षणकोविदाः ।
ते दैवज्ञाः कथं नाम जाता वितथवादिनः ॥ ५०२ ॥
नीलाः केशाः समाः सूक्ष्माः परिच्छिन्ने भ्रुवौ च मे ।
शङ्खो नेत्रे वरौ पादौ गुल्फौ च न शिरोन्नतौ ॥ ५०३ ॥
दन्ताः प्रगुणरामाश्च तनुवृत्तशिखा नखाः ।
स्तनौ सुसंहतौ पीनौ सुवृत्तौ मग्नचूचुकौ ॥ ५०४ ॥
गम्भीरो नाभिदेशश्च कान्तिः स्निग्धा च मे मृदुः ।
ममेदं येन वैधव्यं न तत्पश्यामि लक्षणम् ॥ ५०५ ॥

चित्रं शत्रुकुलस्यायं हन्ता युधि निपातितः ।
अधुना पौरुषस्येव सिद्धिर्दैवेन मुद्रिता ॥ ५०६ ॥
परदेशे प्रियां त्यक्त्वा गन्तुं नार्हसि राघव ।
मनोवृत्तिरिवाहं ते सर्वत्र सहचारिणी ॥ ५०७ ॥
इति प्रलापिनीं सीतां धर्मज्ञा प्रियवादिनी ।
उवाच त्रिजटा स्वैरं तत्सतीव्रतवत्सला ॥ ५०८ ॥
अलं मिथ्याविषादेन पुत्रि जीवति ते पतिः ।
मुखवर्णेन पश्यामि रामस्य शुभमग्रतः ॥ ५०९ ॥
अनष्टधैर्याः प्लवगा रामं रक्षन्ति यद्भुवि ।
यत्सैन्यानि न दीर्णानि तदेव शुभलक्षणम् ॥ ५१० ॥
न भाग्यहीना वैदेहि त्वं सत्त्वोचितलक्षणा ।
भग्नभाग्यो जनः सत्यं पुष्पकेन न धार्यते ।
पुष्पकेन हृता तूर्णमशोकवनिकां ययौ ॥ ५११ ॥

इति रामदर्शनम् ॥ १७ ॥

ततः संज्ञां समासाद्य कृच्छ्रेणोन्मीललोचने ।
वज्राङ्गधाशविवशैः प्लवगैः परिवारितः ॥ ५१२ ॥
विलोक्य लक्ष्मणं दीनं शयानं रुधिरोक्षितम् ।
वाष्पव्यासमुखो रामः क्षामस्वरमभाषत ॥ ५१३ ॥
हा सुखभ्रष्टसौमित्रे मदर्थे त्यक्तजीवित ।
भूमिमालिङ्ग्य सुप्तोऽसि कथं मम पराङ्मुखः ॥ ५१४ ॥
सर्वत्र सुहृदः सन्ति सन्ति संबन्धबान्धवाः ।
अभिन्नजन्मदेहस्य दुर्लभः स सहोदरः ॥ ५१५ ॥
मन्त्री बन्धुः सुतः शिष्यः सुहृद्योधः पथानुगः ।
लक्ष्मणेन समो भ्राता भाग्यहीनैर्न लभ्यते ॥ ५१६ ॥
भग्नाभिमानसर्वस्वः कथं जीवितुमुत्सहे ।
छिन्नोऽयं यस्य सौमित्रिर्दक्षिणो दक्षिणो भुजः ॥ ५१७ ॥

---

१. 'मः' शा०.

भ्रातः सीतावियोगेऽपि नोक्तोऽसि परुषं मया ।
समन्युरिव मां कस्मान्न कस्मान्नाभिभाषसे ॥ ५१८ ॥
क्वासौ मदाज्ञाप्रणयी मयि सेवारसस्तव ।
सुखसुप्तो यदद्यापि निर्भयो न विबध्यसे ॥ ५१९ ॥
इति प्रलापमुखरे लक्ष्मणक्षिप्तचक्षुषि ।
राघवे शरनिःस्पन्दे प्लवगास्तत्यजुर्धृतिम् ॥ ५२० ॥
विद्रुते सागरस्फारे हरिसैन्ये सहस्रधा ।
धूम्रं यूथपमाहूय सुग्रीवः स्वयमभ्यधात् ॥ ५२१ ॥
एते दृष्ट्वा समायातुं गदापाणिं विभीषणम् ।
इन्द्रजिद्भयसंभ्रान्ता विद्रुताः सर्ववानराः ॥ ५२२ ॥
भटानां भयभग्नानां धिग्जीवितमजीवितम् ।
रणे मृत्युर्वने मृत्युर्गृहे मृत्युश्च देहिनाम् ॥ ५२३ ॥
इत्यादिष्टः कपीन्द्रेण धूम्रो वानरयूथपः ।
विपुलं भुजमुद्यम्य जगाम प्लवगर्षभान् ॥ ५२४ ॥
रामशासनसर्वस्वः श्रीमानेष विभीषणः ।
नेन्द्रजिद्व्याजयुद्धाप्तमिथ्याविजयगर्वितः ॥ ५२५ ॥
उत्सृज्य भीरुमुसलं भयं भुजबलोर्जिताः ।
जयाय रघुनाथस्य क्रियतां सैन्यसंग्रहः ॥ ५२६ ॥
इति धूम्रस्य वचसा परावृत्ते बलार्णवे ।
रामं निश्चेष्टमालोक्य विललाप विभीषणः ॥ ५२७ ॥
तृणीकृतदशास्यस्य प्रभुमाश्रित्य यन्मम ।
अभिमानोन्नतिरभूत्सोऽयं शेते शराहतः ॥ ५२८ ॥
प्रसादविशदा लोकाः स्मितपूर्वाभिभाषिणः ।
भाग्यहीनैर्न लभ्यन्ते प्रभवो मानदाः सदा ॥ ५२९ ॥
अहो बत नृशंसेन रक्षसा कूटयोधिना ।
निघ्नता राघवौ वीरौ निहतोऽहं निराश्रयः ॥ ५३० ॥

श्वेतं गजं चतुर्दन्तं चामरच्छत्रलाञ्छनम्।
अहो मुहूर्तमालोक्य पतितोऽहमधोमुखः॥ ५३१॥
दुराचारो गजस्त्यक्तः काकुत्स्थोऽप्याश्रितः कृती।
कृतं कृत्यं मया साधु विधिसिद्धिषु कः प्रभुः॥ ५३२॥
अहो वेश्येव निःस्नेहा वक्रा दुर्जनधीरिव।
सर्वथा खलमैत्रीव दुरन्ता वेधसो गतिः॥ ५३३॥
नमः सुघटितारम्भविनाशप्रभविष्णवे।
विधेये पौरुषोत्कर्षस्पर्शमात्रासहिष्णवे॥ ५३४॥
इति शोकाकुलः शोचन्साश्रुनेत्रो विभीषणः।
पस्पर्श सलिलार्द्रेण पाणिना राघवो मुहुः॥ ५३५॥
तं जगादाथ सुग्रीवः सखे दुःखसमुद्भवः।
त्यज्यतामेष वैक्लव्यसंकल्पे स्त्रीजनोचितः॥ ५३६॥
तव स्वच्छनखच्छायारचितौष्णीषविभ्रमः।
अभिषेकोत्सवं मौलौ रामपाणिर्विधास्यति॥ ५३७॥
सानुजं राममादाय सुषेणेन सहाङ्गदः।
किष्किन्धां यातु सन्नद्धः सह सर्वैः प्लवङ्गमैः॥ ५३८॥
अहमेको हनुमता सह लङ्कामराक्षसाम्।
कृत्वा सीतां समादाय पश्चादेष्यामि राघवौ॥ ५३९॥
सौहार्दस्य प्रसादस्य प्रणयस्य प्रियस्य च।
राज्यदानस्य चानृण्यं गच्छाम्यद्य न संशयः॥ ५४०॥
अस्य स्फीतयशःस्वच्छच्छत्रस्य व्यजनस्य च।
हरिचन्दनकर्पूरपरिरम्भस्य भूयसः॥ ५४१॥
मणिकङ्कणकेयूरमौलिहारभरस्य च।
अनङ्गमङ्गलासङ्गललनालिङ्गनस्य च॥ ५४२॥
माल्यांशुकप्रकारस्य संभोगस्य गरीयसः।
इमौ मे सदृशं बाहू सुहृत्कार्यं करिष्यतः॥ ५४३॥

राममानप्रसादस्य शक्या तस्य प्रतिक्रिया।
त्यक्तैः पुनः पुनर्जातैर्न शरीरशतैरपि ॥ ५४४ ॥
यदि देवासुरैः सार्धं योत्स्यते मां दशाननः।
तथापि तस्य कुपिते मयि नास्त्येव जीवितम् ॥ ५४५ ॥
इत्युक्ते वानरेन्द्रेण सुषेणः कपियूथपः।
उवाच धृतिमालम्ब्य चिन्तयन्दुःखभेषजम् ॥ ५४६ ॥
देवासुररणे पूर्वमसुरैर्निहताः सुराः।
मन्त्रौषधिगणैः प्रापुर्जीवितं गुरुणार्पितैः ॥ ५४७ ॥
क्षीरोदधौ पर्वतयोरन्तरे द्रोणचन्द्रयोः।
ताः सन्त्यौषधयो यत्र बभूवामृतमन्थनम् ॥ ५४८ ॥
श्वच्छवीकरणी दिव्या विशल्या जीवनी तथा।
संधिनी चेति तास्तूर्णं हरन्तु हनुमन्मुखाः ॥ ५४९ ॥
सुषेणेनेत्यभिहते चिन्तास्तब्धे बलार्णवे।
अवतीर्याम्बराद्दिव्यद्युतिरभ्याययौ मुनिः ॥ ५५० ॥

इति सुग्रीववाक्यम् ॥ १८ ॥

स समासाद्य काकुत्स्थं भगवान्नारदः स्वयम्।
स्वैरं जगाद जनता हिताय सततं यतः ॥ ५५१ ॥
रामरामाविरामस्त्वं युद्धे त्रिदशविद्विषाम्।
देवो नारायणः श्रीमान्परमात्मा सनातनः ॥ ५५२ ॥
भगवन्भुवनारम्भव्यापारेषु प्रजासृजः।
त्वदनुप्राणिता शक्तिः संहारेषु हरस्य च ॥ ५५३ ॥
हिरण्याख्यवधे व्यस्ता वराहेण वराहवे।
त्वया वसुंधरोद्धारधीरेण धरणीधराः ॥ ५५४ ॥
त्वया दैत्या द्विपेन्द्रस्य लीलाकेसरिणा नखैः।
यशांसि मौक्तिकानीव लुण्ठितानि सहासुभिः ॥ ५५५ ॥
त्रैलोक्याक्रान्तिविभवः प्रययौ बलिसंयमे।
ब्रह्माण्डमण्डपे दण्डपादस्थे मानदण्डताम् ॥ ५५६ ॥

ज्वालाजालजटालस्ते परशुर्भार्गवाकृतेः ।
जजृम्भे क्षत्रियवने दीर्घदावाग्निलीलया ॥ ५५७ ॥
सर्वदेवमयात्मा त्वं सर्वयज्ञमयः प्रभुः ।
सर्वदेवमयाकारः पुरुषः सर्वलोककृत् ॥ ५५८ ॥
वैकुण्ठस्त्वमकुण्ठश्रीः पद्मनाभो नभःप्रभः ।
केशवः केशिहर्ता च शेषशायी नरेश्वरः ॥ ५५९ ॥
स्मरस्व सचिवं देव गरुडं गरुडध्वज ।
भुजङ्गपञ्जरं घोरं स क्षिप्रं क्षपयिष्यति ॥ ५६० ॥
इत्युक्त्वा नारदे याते तदैवोवाच मारुतिः ।
देवः काकुत्स्थमभ्येत्य कर्णान्तं स्वार्थसिद्धये ॥ ५६१ ॥

इति नारदवाक्यम् ॥ १९ ॥

ततः सस्मार गरुडं राघवौ विगतज्वरः ।
स चाययौ ध्यातमात्रः पक्षाक्षेपधुताम्बुधिः ॥ ५६२ ॥
पाणिना कृतसंस्पर्शः सानुजस्तेन राघवः ।
निःशल्यो निर्व्रणश्चासीन्मुक्तपाशः शशिप्रभः ॥ ५६३ ॥
स सूर्यकिरणाकीर्णसुवर्णगिरिसंनिभः ।
स्वस्थं काकुत्स्थमामन्त्र्य विवेश विशदं नभः ॥ ५६४ ॥
अथोत्थिते पृथुबले रघुनाथे सलक्ष्मणे ।
बभूव सर्वभूतानां निर्विघ्ना हर्षनिर्वृतिः ॥ ५६५ ॥
ततः प्लवगसैन्यानां नादः प्रमदसंभवः ।
उद्भूतभुवनाभ्रान्तिगम्भीरारम्भविभ्रमः ॥ ५६६ ॥
तेन शब्देन महता संभ्रान्ताः[1] क्षणदाचराः ।
ददृशुस्तूर्णमभ्येत्य स्वस्थौ दशरथात्मजौ ॥ ५६७ ॥
ते गत्वा विस्मयभयभ्रान्ता भग्नमनोरथाः ।
तदप्रियमसंभाव्यं रावणाय न्यवेदयन् ॥ ५६८ ॥

इति विशल्यकरणम् ॥ २० ॥

---

१. 'समन्ताः' ग्रा०.

सानुजं राघवं ज्ञात्वा पौलस्त्यः प्राप्तजीवितम् ।
विवर्णवदनः क्षिप्रं नोचे किंचिदवाङ्मुखः ॥ ५६९ ॥
कार्यं विचार्य संदेहदोलामारूढमात्मनः ।
स धैर्यस्तम्भितोद्वेगः क्रोधाद्धूमाक्षमभ्यधात् ॥ ५७० ॥
अदृष्टसंमुखारातेर्ममाप्यल्पतरो रिपुः ।
उपेक्षित इव व्याधिः प्रयातः कृच्छ्रसाध्यताम् ॥ ५७१ ॥
सेयं पराभवग्लानिरयशोधूलिधूसरा ।[1]
त्वद्यशःसितवस्त्रेण मयाद्य परिमृज्यते ॥ ५७२ ॥
रामलक्ष्मणसुग्रीवविभीषणवधाय ते ।
न्यस्तोऽयं तु जयो भारसुरसंहारकारिणः ॥ ५७३ ॥
इति माल्यमिवादाय शिरसा शासनं प्रभोः ।
रथी राक्षससैन्येन धूम्राक्षः सह निर्ययौ ॥ ५७४ ॥
राक्षसैर्मन्त्रिमित्रैश्च भीषणैः परिवारितः ।[2]
धूम्राक्षो विदधे गच्छन्धूलिधूम्रा दिशो दश ॥ ५७५ ॥
तस्योपरिकृतच्छाये गृध्रचक्रे प्रसर्पति ।
क्षिप्रं प्राप सितच्छत्रं सव्यापारदरिद्रताम् ॥ ५७६ ॥
दुष्प्रहारो बभूवाथ रणे स भटदारणे ।
हरिसैन्येन महता रक्षसां पृथुवक्षसाम् ॥ ५७७ ॥
एहि राक्षस युध्यस्व तिष्ठ कातर वानर ।
इत्यभूद्भीषणः शब्दो विपुलस्तुमुले युधि ॥ ५७८ ॥
धूम्राक्षशरनिर्भिन्नैः प्लवगैर्गिरिविग्रहैः ।
निपतद्भिरभूद्भूमिर्दोलाकेलिविलासिनी ॥ ५७९ ॥
वानरप्रवराः प्रौढभुजोत्सृष्टैर्महाद्रुमैः ।
विपुलाभिः शिलाभिश्च चक्रिरे रक्षसां क्षयम् ॥ ५८० ॥
विदारितेषु सैन्येषु धूम्राक्षेण तरस्विना ।
तमभ्यधावत्तेजस्वी गृहीत्वा मारुतिः शिलाम् ॥ ५८१ ॥

१. 'म्ला' शा०. २. 'दुर्निमित्तै' शा०.

क्षिप्तां तेन शिलां वीक्ष्य क्षिप्रकारी निशाचरः।
गुर्वीं गदां समादाय रथाद्भूमिमवातरत्॥ ५८२॥
साश्वसूतध्वजस्तस्य निष्पिष्टः शिलया रथः।
सहसा प्रलयं यायान्मूढस्येव मनोरथः॥ ५८३॥
स भग्नस्यन्दनः कोपात्क्षपिताशेपराक्षसम्।
वक्षस्यताडयद्वेगाद्गदया मारुतात्मजम्॥ ५८४॥
तस्योत्तमाङ्गे चिक्षेप गिरिशृङ्गं प्लवङ्गमः।
[1]तेन निष्पिष्टसर्वाङ्गः स पपात रणाङ्गणे॥ ५८५॥
धूम्राक्षे निहिते घोरे त्रस्ताः सर्वे निशाचराः।
हनुमद्विक्रमं गत्वा पौलस्त्याय न्यवेदयन्॥ ५८६॥

इति धूम्राक्षवधः॥ २१॥

जितनाके हते तस्मिन्रावणः सैन्यनायकम्।
विससर्जोर्जितं शत्रुहृत्कम्पनमकम्पनम्॥ ५८७॥
रथिनो व्रजतस्तस्य रणा[2]ग्रं भर्तुराज्ञया।
दीर्घप्रवासे प्रययु[3]र्मन्त्रिमित्राणि दूरताम्॥ ५८८॥
ततो बभूव [4]संमर्दः कपीनां वीर्यशालिनाम्।
राक्षसैरक्षयबलैरकम्पनपुरःसरैः॥ ५८९॥
गजवाजिरथोद्भूतधूलिप्रावरणा दिशः।
नादृश्यन्त महामेघसंघातैरिव मीलिताः॥ ५९०॥
रणाङ्गणोद्धतरजस्तोमस्रस्तनभस्तले।
युद्धे लोको निरालोकः शस्त्रशब्दैरबुध्यत॥ ५९१॥
ततः सुभटशैलाग्रनिर्यद्रुधिरनिर्झरैः।
व्याप्ते महीतले शान्तिं मूलच्छिन्नं ययौ रजः॥ ५९२॥
अकम्पन[5]संनामानि वानराणां रणेषिणाम्।
चक्रुराच्छादनानीव शरीराणि परस्परम्॥ ५९३॥

---

१. 'चे' शा०. २. 'ग्रां' शा०. ३. 'दुर्निमित्तानि दूततां' शा०. ४. 'सस्पन्दः' शा०. ५. 'शरासानि' शा०.

महापादपमुत्सृज्य तं समभ्याद्रवद्रुषा ।
विशालवक्षा हनुमान्सानुमानिव पर्वतः ॥ ५९४ ॥
तस्य तं गगनावर्तभ्रान्तिनिर्घोषभीषणम् ।
विशिखैरशनिस्पर्शैर्वृक्षं चिच्छेद राक्षसः ॥ ५९५ ॥
तद्बाणविद्धः सोऽप्यन्तशैलशृङ्गः समाययौ ।
रुधिरोद्गारिभिर्गात्रैर्धातुस्रावीव भूधरः ॥ ५९६ ॥
वज्रवेगैर्गिरिशिरश्चिच्छेदाकम्पनः शरैः ।
शिखाविखण्डनोद्भूतज्वालावलयपिङ्गलैः ॥ ५९७ ॥
अथापरं समासाद्य पादपं तत्पदानुगान् ।
जघान हनुमान्वेगाद्विद्धः शत्रुपतत्त्रिभिः ॥ ५९८ ॥
अकम्पनशरोत्कृत्ते तस्मिन्नपि महाद्रुमे ।
विपुलं सालमुन्मूल्य तं जघानानिलात्मजः ॥ ५९९ ॥
द्रुमाभिघाताभिहतः कम्पमानोऽप्यकम्पनः ।
तेनैव सह वृक्षेण क्षिप्रं शकलतां ययौ ॥ ६०० ॥

इत्यकम्पनवधः ॥ २२ ॥

त्रैलोक्याकम्पनं श्रुत्वा युद्धे हतमकम्पनम् ।
कम्पमानवपुःकोपात्तूष्णीमासीद्दशाननः ॥ ६०१ ॥
स प्रहस्तं समादिश्य समरे सैन्यनायकम् ।
अमन्यताहितत्रातं यातं नामावशेषताम् ॥ ६०२ ॥
प्रहस्तोऽप्यप्रशस्तेषु निमित्तेषु विनिर्ययौ ।
[1]वाणसंमान[2]माराणां कर्तुमानृण्यमुद्यतः ॥ ६०३ ॥
स द्विपेन्द्रघटाबन्धैः पिहिताखिलदिङ्मुखैः ।
लेभे प्रलयकालस्य मेघघोरस्य तुल्यताम् ॥ ६०४ ॥
कृष्णाः कनकसंनाहा बभुस्तस्य रथे हयाः ।
अच्छिन्नविद्युद्विद्योत इव व्योम्नि बलाहकाः ॥ ६०५ ॥

१. 'स्वामि' शा०. २. 'भा' शा०.

ततः प्रहस्तसैन्येन पूरिते समरे पुनः ।
बभूव कृच्छ्रसंचारा वानराणामनीकिनी ॥ ६०६ ॥
एष रक्षःपतेर्बाहुः प्रत्यक्ष इव दक्षिणः ।
प्रहस्तो निर्गतो योद्धुमित्यभूज्जननिःस्वनः ॥ ६०७ ॥
ततः समरसंघट्टनिर्घोषः कपिरक्षसाम् ।
रामरावणयोरर्थे परित्यक्तात्मनामभूत् ॥ ६०८ ॥
हरिसेना विशालेषु रक्षःखड्गेषु विम्बिता ।
लेभे रामप्रभावेण सहस्रगुणितामिव ॥ ६०९ ॥
व्रजतां रक्षसां सेना कदर्यश्रीरिवाययौ ।
संकोचं मन्त्रचिन्तासु शास्त्रहीनस्य धीरिव ॥ ६१० ॥
प्रहस्तहस्तकृष्टस्य निर्ह्रादी धनुषो ध्वनिः ।
प्रययौ प्रलयारम्भे मेघनिर्घोषघोरताम् ॥ ६११ ॥
सायकास्तद्भुजोत्सृष्टा यत्र यत्र बलाम्बुधौ ।
निपेतुस्तत्र तत्राभून्मुहूर्तावर्तविभ्रमः ॥ ६१२ ॥
सा कपिस्वामिसंनाहवर्मणां वज्रसारता ।
यच्छस्त्रास्त्रनिपातेऽपि शूराणां नाभवद्व्यथा ॥ ६१३ ॥
वानराद्रिद्रुमाघातभग्नाङ्गा अपि राक्षसाः ।
अभिमानाङ्कुशाक्रान्तास्ते न बभूवुः पराङ्मुखाः ॥ ६१४ ॥
प्लवङ्गभिन्नैर्मातङ्गैरुत्कृत्ताङ्गैस्तुरङ्गमैः ।
पतितैर्भूरभूद्व्याप्ता भटैश्चोच्छिन्नकंकटैः ॥ ६१५ ॥
क्षिप्रं कबन्धरुद्धास्वरथरथ्यासु सर्वतः ।
निःसंचारेषु सैन्येषु निरुच्छ्वासोऽभवज्जनः ॥ ६१६ ॥
समुन्नदः कुम्भहनुर्महानादस्तरंधमः ।
एते प्रहस्तसचिवाश्चक्रिरे राक्षसाः क्षयम् ॥ ६१७ ॥
द्विविधः शैलशृङ्गेण निष्पिपेष तरंधमम् ।
महाद्रुमाभिघातेन दुन्दुभश्च समुन्नदम् ॥ ६१८ ॥

महानादं जघानाथ शिलया युधि जाम्बवान् ।
तरुणस्तरुणाचारश्चक्रे कुम्भहनूं व्यसुम् ॥ ६१९ ॥
हतेषु तेषु वीरेषु प्रहस्तो हस्तिदुर्मदः ।
निबिडालोडनक्रीडां शत्रुसैन्यह्रदे व्यधात् ॥ ६२० ॥
तस्मिन्गजगणैर्बाणाधारोद्धरणदुर्दिनैः ।
ससर्प शोणितनदी शरीरतरुहारिणी ॥ ६२१ ॥
प्रहस्तप्रहतां दृष्ट्वा वानराणामनीकिनीम् ।
तमभ्यधावद्वेगेन नीलः सेनासुनायकः ॥ ६२२ ॥
तयोः सन्नद्धयोर्युद्धे त्रैलोक्यत्रासकारिणि ।
क्षणं प्रेक्षकतां प्रापुः प्रेक्षिकाः कपिराक्षसाः ॥ ६२३ ॥
नीलेनाभिहतः कोपात्पृथुः स्कन्देन शालिना ।
प्रहस्तः शरजालेन निनाय तमदृश्यताम् ॥ ६२४ ॥
तं शरासारमत्युग्रं नीलो मीलितलोचनः ।
जग्राहाभिनवं वर्षधर्मान्त इव कुञ्जरः ॥ ६२५ ॥
ततस्तरुप्रहारेण प्रहस्तस्य मनोजवान् ।
जघान नीलसंनाहान्नीलः क्षिप्रं तुरङ्गमान् ॥ ६२६ ॥
हताश्वः सोऽभिपत्याशु मुसलेन प्लवङ्गमम् ।
निजघान ललाटाग्रे तं वृक्षेणस चोरसि ॥ ६२७ ॥
उद्भ्रान्तमुसलं रक्षः साक्षात्कालमिवोद्यतम् ।
नीलः शिलां समुत्क्षिप्य चक्रे स्फुरितमस्तकम् ॥ ६२८ ॥
भग्नोत्तमाङ्गे सावेगं प्रहस्ते पतिते युधि ।
रक्षसां नाभवत्कश्चिद्भङ्गसंस्तम्भनं विभुः ॥ ६२९ ॥

इति प्रहस्तवधः ॥ २३ ॥

सेनानाथे हते तस्मिन्रणयज्ञे हुतात्मनि ।
समं समस्तसामन्तैर्निर्ययौ रावणः स्वयम् ॥ ६३० ॥
ततः प्रलयसंरम्भभैरवाम्भोधरध्वनिः ।
रुराव रावणस्याग्रे प्रथमारम्भदुन्दुभिः ॥ ६३१ ॥

अभूद्ध्वजचयैर्व्योम्नि सैन्याकारैश्च दिक्षु च ।
अभूद्भटभुजस्तम्भस्तम्भिता मरुतां गतिः ॥ ६३२ ॥
प्रधानाधिष्ठितैः सैन्यैः पूर्यमाणा दिशो दश ।
दृष्ट्वा पप्रच्छ काकुत्स्थः स्थितमग्रे विभीषणम् ॥ ६३३ ॥
बलैर्महीध्रविपुलैर्ध्वजपिञ्जरिताम्बरैः ।
योद्धुमभ्येति संनद्धः कोऽस्माकं सुभटः पुरः ॥ ६३४ ॥
प्रणयादिति रामेण पृष्टः प्रह्वो विभीषणः ।
उवाच निर्दिशन्दूरादङ्गुल्या सैन्यनायकान् ॥ ६३५ ॥
अग्रे यः सर्वसैन्यानां रथे सूर्य इवोदितः ।
एष स्वर्गौकसां भोगवियोगगुरुरिन्द्रजित् ॥ ६३६ ॥
अस्य कुण्डलकेयूरभासुरस्य किरीटिनः ।
प्रताप इव भात्येष ध्वजः कनकनिर्मितः ॥ ६३७ ॥
यस्यैतत्कूजति धनुः पर्जन्योर्जितगर्जितम् ।
एषोऽतिकायः प्रवरो रथिनां दृश्यते पुरः ॥ ६३८ ॥
यश्चात्र हेमसंनाहं रथमारुह्य वल्गति ।
एष देवान्तको नाम सत्यनामा निशाचरः ॥ ६३९ ॥
एष मत्तद्विपशिरः शृङ्गाग्रे त्रिशिरास्ततः ।
एष रक्षःपतेः सूनुर्मकराक्षः क्षपाचरः ॥ ६४० ॥
एते कुम्भनिकुम्भोग्रमहोदरसुमालिनः ।
सदा संग्रामयज्ञेषु त्रिदशक्षयदीक्षिताः ॥ ६४१ ॥
अशेषभुवनध्वंसे प्रचण्डप्रलयानलाः ।
एते ते रावणामात्याः स्वर्गोल्लुण्ठनदस्यवः ॥ ६४२ ॥
सेनाग्रे परिसर्पन्ति ये पङ्क्त्यां राक्षसप्रभोः ।
त एते विबुधध्वंससाक्षिणः क्षणदाचराः ॥ ६४३ ॥
यः सहस्रशलाकेव च्छत्रेण स्वच्छकान्तिना ।
नीलः शैल इवाभाति शुभ्राभ्रवलयोज्वलः ॥ ६४४ ॥

एष विश्वजयोदग्रः पुलस्त्यो राक्षसैर्वृतः ।
प्रभूतभूतसंघातैरिव देवः पिनाकभृत् ॥ ६४५ ॥
स एष सप्तभुवनाक्रान्तिस्वच्छन्दशासनः ।
जानकीदुःखकोपाग्निर्दग्धशक्तिर्दशाननः ॥ ६४६ ॥
तस्यैतच्चन्द्रधवलं कैलासोल्लासजं यशः ।
त्वद्भ्रूभङ्गेन जलदश्यामलेन निमीलितम् ॥ ६४७ ॥
एतद्विभीषणेनोक्तं निशम्य रघुनन्दनः ।
दिवं विलोक्य पौलस्त्यमुवाचोत्फुल्ललोचनः ॥ ६४८ ॥
अहो प्रभावगम्भीराश्चक्षुर्वाणीमनोमुषः ।
रक्षःपतिभुजस्तम्भाः सावष्टम्भा विभूतयः ॥ ६४९ ॥
इयं दूरे कुबेरस्य दुर्लभैव शतक्रतोः ।
अस्य श्लाघ्यतमा श्रीः स्याद्धर्मेणाच्छुरिता यदि ॥ ६५० ॥
अहो नु विपरीतेषु विधिरत्यधिकादरः ।
यः करोत्यायतां लक्ष्मीमयशः स्पर्शदूषिताम् ॥ ६५१ ॥
प्रायेणासहसामान्यनिर्देषोत्कर्षसंपदाम् ।
स्वकृतेष्वपि कौटिल्यं गुणद्विष्टस्य वेधसः ॥ ६५२ ॥
प्रक्षीणसंचयश्चन्द्रः सापायाः सुखसंपदः ।
क्रियते क्रियते कर्तुर्निर्विचारस्य वाच्यता ॥ ६५३ ॥
इति निर्वर्णयन्रामः प्रशशंस दशाननम् ।
सादराः सापराधेऽपि गुणलुब्धा हि साधवः ॥ ६५४ ॥
ततः समुदभूद्विश्वप्रलयारम्भभीषणः ।
पौलस्त्योश्चण्डदोर्दण्डकृष्टको दण्डनिःस्वनः ॥ ६५५ ॥
कैलासोल्लासनसहैः प्राप्तः पौलस्त्यबाहुभिः ।
भित्वाहतिशरीराणि पातालं विविशुः शराः ॥ ६५६ ॥
हन्यमानेषु सैन्येषु रावणेन प्रमाथिना ।
तमभ्यधावद्वेगेन सुग्रीवः पर्वतायुधः ॥ ६५७ ॥

---

१. 'चामरः' शा०.

सुग्रीवदोर्युगाक्षिप्तं सपक्षमिव तं गिरिम् ।
चिक्षेप विशिखैर्वज्रशिखैर्दशमुखः क्षणात् ॥ ६५८ ॥
शैले शकलतां याते मृत्युदंष्ट्राकरं शरम् ।
चिक्षेप राक्षसपतिः सुग्रीवायोग्रविक्रमः ॥ ६५९ ॥
स सर्प इव शूत्कारी भित्त्वा प्लवगमाशुगः ।
वलक्षपक्षनिवहः प्रविवेश रसातलम् ॥ ६६० ॥
शराभिघातव्यथिते पतिते वानरेश्वरे ।
योद्धुमभ्याययुः सर्वे क्रूराः प्लवगपुंगवाः ॥ ६६१ ॥
सालतालशिलावृष्टिं तैः क्षिप्तामक्षयां क्षणात् ।
क्षिप्रकारी दशग्रीवः छित्त्वा चिक्षेप सायकान् ॥ ६६२ ॥
वज्रवेगैः शरैः क्षिप्तास्तैर्मैन्दद्विविदादयः ।
क्षितौ निपेतुः सावेगाश्छिन्नमूला इव द्रुमाः ॥ ६६३ ॥
भग्नेषु कपिसैन्येषु सौमित्रिः शत्रुदारणः ।
रामशासनमादाय दशकण्ठं समाद्रवत् ॥ ६६४ ॥
कोपादापतिते तस्मिन्वीरे धुर्ये धनुष्मताम् ।
हनुमानग्रतो गत्वा लङ्केश्वरमयोधयत् ॥ ६६५ ॥
तमब्रवीद्दशग्रीवः कपे दर्शय पौरुषम् ।
विहीनविक्रमं हन्तुं प्रवर्तन्ते न मद्भुजाः ॥ ६६६ ॥
इत्युक्ते राक्षसेन्द्रेण जगाद पवनात्मजः ।
किमक्षस्य वधे दृष्टं न त्वया मम पौरुषम् ॥ ६६७ ॥
निष्पिष्टराक्षसभटो मुष्टिरेष ममोद्यतः ।
करोत्यद्य शरीरं ते क्षिप्रं प्रोषितजीवितम् ॥ ६६८ ॥
इति ब्रुवाणं प्लवगं रथोपश्लिष्टमभ्यधात् ।
दशास्यो दशभिर्हासैः शुभ्रीकृत्य दिशो दश ॥ ६६९ ॥
कपे प्रहर निःशङ्कं निहितस्य ततो मया ।
तव प्रागल्भ्यजा कीर्तिश्चिरमेषा विजृम्भताम् ॥ ६७० ॥

इत्युक्तः पृथुवेगेन तलेनोरसि मारुतिम्।
जघान रावणो येन स मुहूर्तमकम्पत॥ ६७१॥
सहसैव समाश्वस्तो हनुमान्प्रौढविक्रमः।
तलेन वज्रसारेण रक्षःपतिमताडयत्॥ ६७२॥
तलेनाभिहतस्तेन लोलबाहुर्दशाननः।
चचाल व्याकुलतनुर्दशशृङ्ग इवाचलः॥ ६७३॥
सोऽवदत्साधु ते वीर्यं कपे योग्योऽसि मे रिपुः।
मे[1] सारणः प्रहारेण येनाहमसि कम्पितः॥ ६७४॥
सावलेपं वचः शत्रोः श्रुत्वैतत्पवनात्मजः।
जगाद स्वभुजे चक्षुः सासूयं प्रतिपादयन्॥ ६७५॥
धिग्बलं मम पौलस्त्य लोकलज्जाकरं परम्।
यन्न यातोऽसि मन्मुष्टिनिष्पिष्टश्लक्ष्णचूर्णताम्॥ ६७६॥
इति ब्रुवाणस्यात्युग्रक्रोधान्निर्धूतविश्रु[2]तम्।
वेगादपातयन्मुष्टिं कपेर्वक्षसि राक्षसः॥ ६७७॥
गाढप्रहारसंजातमूर्छा विपुलमानसे।
हनूमति दशग्रीवः सावे[3]गं नीलमाद्रवत्॥ ६७८॥
मारुतिर्लब्धसंज्ञोऽथ सक्तं नीलेन रावणम्।
द्वन्द्वयुद्धविधौ धर्मं स्मरं नैनं समाद्रवत्॥ ६७९॥
ततः शरभरासारैर्विद्धः पावकसंभवः।
क्रोधात्प्रज्वलितो नीलः पौलस्त्यायासृजद्गिरिम्॥ ६८०॥
तं बाणैर्नवभिश्छित्वा गिरिं वृक्षांश्च रावणः।
नीलं शरशतैश्चक्रे मेघच्छन्नमिवाचलम्॥ ६८१॥
ततो नीलः समाश्रित्य मायामद्भुतविक्रमः।
विश्वात्मानमिवात्मानं सर्वत्र समदर्शयत्॥ ६८२॥
ध्वजे धनुषि बाणान्ते किरीटाग्रे च पावकिम्।
दुर्लभं राक्षसपतेर्वीक्ष्य कोपाकुलोऽभवत्॥ ६८३॥

---

१. 'खे' शा०. २. 'ग्रहः' शा०. ३. 'गो' शा०.

महास्त्रमभिमन्त्र्याशु घोरमाग्नेयमाशुगम्।
रक्षश्चिक्षेप नीलाय सप्तलोकक्षयक्षमम् ॥ ६८४ ॥
वक्षस्यभिहतो नीलस्तेनास्त्रेणोग्रतेजसा।
विसंज्ञः प्राप तद्भूमौ पित्रा रक्षितजीवितः ॥ ६८५ ॥
ततः सौमित्रिरभ्येत्य कर्णान्ताकृष्टकार्मुकः।
उवाच रावणं धीरः पादचारी रथस्थितम् ॥ ६८६ ॥
अभ्येहि राक्षसपते युध्यस्व समरे मया।
अभङ्गविक्रमं जेतुं न त्वामर्हन्ति वानराः ॥ ६८७ ॥
इति वादिनमक्षोभ्यं क्षुब्धचेता दशाननः।
अभ्यधाल्लक्ष्मणं कोपकम्पव्याकुलमण्डलः ॥ ६८८ ॥
दिष्ट्या मे तापसपशो दृशोर्यातोऽसि गोचरम्।
त्वत्संदर्शनपर्यन्तं सत्यं जीवितमद्य मे ॥ ६८९ ॥
मूकस्येवाभिवादेच्छा पङ्गोरिव जवोद्धतिः।
अन्धस्येवादरश्चित्ते श्रद्धा मेऽस्त्येव ते युधि ॥ ६९० ॥
योद्धुमिच्छसि दर्पान्ध केवलं बालचापलात्।
एतैः कैलाशसंघट्टस्पष्टाङ्कविकटैर्भुजैः ॥ ६९१ ॥
इत्युक्ते राक्षसेन्द्रेण लक्ष्मणः पुनरब्रवीत्।
निःसाराणां भवन्त्येव सत्यं वाचि प्रगल्भता ॥ ६९२ ॥
इत्युक्त्वा लक्ष्मणक्षिप्तान्रामः सेन्द्रेण सायकान्।
चिच्छेद विशिखैस्तीक्ष्णैस्तत्संकल्पानिवायतान् ॥ ६९३ ॥
ततः सौमित्रिपौलस्त्यपत्रिजालैरवान्तरैः।
अदभ्राभ्रैरिव भ्रान्तमेकच्छत्रमभून्नभः ॥ ६९४ ॥
सायकेनाथ सौमित्रिं ललाटे रावणोऽभिनत्।
ब्रह्मदत्तेन सोल्लेखं कर्मणेवाविनाशिना ॥ ६९५ ॥
कृच्छ्रेण शरनिर्भेदव्यथां संस्तम्भ्य लक्ष्मणः।
कृन्तचापं रिपुं चक्रे विशि[1]खाघातमूर्छितम् ॥ ६९६ ॥

---

१. 'शाल' शा०.

संज्ञां प्राप्य दशग्रीवः शक्तिं कालानलोल्बणाम् ।
ससर्ज लक्ष्मणायोग्रां मूर्तां शक्तिमिवात्मनः ॥ ६९७ ॥
ज्वालाजटिलयातस्य शक्त्याभिहतवक्षसः ।
मुहूर्तं वैष्णवो भागः स्वयं स्मृतिपदं ययौ ॥ ६९८ ॥
विश्वेश्वरांशदत्तेन सबलेनाभिपूरितः ।
अभ्येत्य लङ्काधिपतिं जघानोरसि मुष्टिना ॥ ६९९ ॥
मुष्टिप्रहाराभिहतस्तूर्णमाघूर्णितेक्षणः ।
जानुभ्यामवनिं गत्वा निपपात दशाननः ॥ ७०० ॥
च्युते निजाभिमानेन सह त्रिदशविद्विषि ।
सुरसिद्धर्षिसंघानां बभूवानन्दनिःस्वनः ॥ ७०१ ॥
ततः समीरणसुतो दोर्भ्यामालिङ्ग्य लक्ष्मणम् ।
निनाय रावणाभ्यासं मूर्तं जयमिवोर्जितम् ॥ ७०२ ॥
सापि रक्षःपतेः शक्तिर्जीवशक्तिरिव स्वयम् ।
अभ्याययौ कृच्छ्रगतं पतिं कुलवधूरिव ॥ ७०३ ॥
पुनः समुद्यते योद्धुं लब्धप्राणे दशानने ।
तद्बाणाशनिसंपातैर्बभूव प्लवगक्षयः ॥ ७०४ ॥
ततो मारुतिमारुह्य देवस्तार्क्ष्यमिवाच्युतः ।
अभ्याद्रवद्दशग्रीवं चापं विस्फार्य राघवः ॥ ७०५ ॥
स जहार द्विषां धैर्यं सीतादुःखाब्धिसेतुना ।
हेतुना विश्वरक्षासु राक्षसक्षयकेतुना ॥ ७०६ ॥
समुद्दलितपापेन प्रतापेनेव रूपिणा[1] ।
चापेन शत्रुशापेन क्षिपन्सायकसंचयान् ॥ ७०७ ॥
तं योद्धुमागतं दृष्ट्वा दर्पविक्रमविस्मितः ।
रजनीचरराजोऽभूद्ध्रस्तसीतामनोरथः ॥ ७०८ ॥
ततः पौलस्त्यविशिखैर्विद्धं दृष्ट्वानिलात्मजम् ।
त्रोंकारमुखरां[2] मौर्वीं चकर्ष रघुनन्दनः ॥ ७०९ ॥

---

१. 'रूप' शा०. २. 'ग्रों' शा०.

पेतुः पौलस्त्यगात्रेषु तीक्ष्णा रामशिलीमुखाः ।
मिथः शौर्यश्रियं द्रष्टुं सुचिरावद्धकौतुकाः ।
संकल्पा इव चेरुस्ते रामरावणयोः शराः ॥ ७१० ॥
ततो रामशरोत्कृत्तकेतुर्जेतुर्दिवौकसाम् ।
पपात संपदां शृङ्गं शार्वोवर इवोन्नतः ॥ ७११ ॥
चक्रुर्नेमिसमुल्लेखखण्डिताखण्डभूतलम् ।
रावणस्योन्ममाथाथ रथं दशरथात्मजः ॥ ७१२ ॥
शरेण निशिताग्रेण पौलस्त्यस्तेन ताडितः ।
कम्पमानतनुश्चक्रे लोलकुण्डलताण्डवम् ॥ ७१३ ॥
छिन्नं रामार्धचन्द्रेण किरीटं तस्य भूतले ।
ऐश्वर्यमिव रत्नाढ्यं पतितं ददृशुः सुराः ॥ ७१४ ॥
च्युतचापं हतगतिं तमुवाचाथ राघवः ।
गच्छ श्रान्तोऽसि समरे सकृत्संरक्षितो मया ॥ ७१५ ॥
आलुलोके तदाकर्ण्य त्रैलोक्यजयगर्वितः ।
क्षणं निजदुराचार मारनम्रामिव क्षितिम् ॥ ७१६ ॥
युधिप्रष्टप्रतिष्ठस्य पृष्ठं यस्य सुरासुरैः ।
न दृष्टं स ययौ स्पष्टं भ्रष्टमानो दशाननः ॥ ७१७ ॥
निर्जितो न तु तत्याज जानकीसंगमस्पृहाम् ।
असुभिः सह निर्बन्धो दुर्वृत्तानां निवर्तते ॥ ७१८ ॥
अहो दुर्नयशस्त्राय कियती तीक्ष्णसारता ।
यत्प्रभावं छिनत्त्याशु वज्रोल्लेखैरखण्डितम् ॥ ७१९ ॥
पतिं साध्वीव विगुणं मातेवानुचितं सुतम् ।
द्वेष्यं वेश्येव दातारं दर्पं नोज्झति मूढता ॥ ७२० ॥

इति रावणभङ्गः ॥ २४ ॥

ततो विवेश पौलस्त्यः स्फारं कनकमन्दिरम् ।
कन्दरं सुरशैलस्य सिंहाक्रान्त इव द्विपः ॥ ७२१ ॥

उपविश्य श्वसन्रत्नप्रदीप्ते काञ्चनासने ।
उवाच सुचिरं ध्यात्वा राक्षसान्राक्षसेश्वरः ॥ ७२२ ॥
अहो ममातितीव्राणि तेजांसि च तपांसि च ।
व्यर्थीभूतानि देवस्य शासनात्पौरुषद्विषः ॥ ७२३ ॥
परिनिष्ठितसारेषु प्रभावेषु गुणेषु च ।
पतिता स्वेच्छया धातुः शक्तिर्वैफल्यकारिणी ॥ ७२४ ॥
शक्तिसाध्यानि कार्याणि स्वाधीनाः पौरुषश्रियः ।
अचिन्त्या फलकाले तु सोन्मादस्य विधेर्मतिः ॥ ७२५ ॥
विपन्ने पौरुषोद्योगे क्रियते कस्य वाच्यता ।
एवंविधैव प्रायेण वस्तुशक्तिरनिश्चिता ॥ ७२६ ॥
सततानुभवाभ्यासाल्लोके विस्मृतविस्मयाः ।
जयन्त्यद्भुतवीर्यस्य कुटिलाः केलयो विधेः ॥ ७२७ ॥
दधीच्यस्थ्युद्भवाश्छिन्नाः कुलिशेन कुलाचलाः ।
कैलासतुल्यकल्लोलः पीतश्च मुनिनाम्बुधिः ॥ ७२८ ॥
मर्त्येभ्यो भयमेतन्मे सत्यमूचे प्रजापतिः ।
अयं स नन्दिनिर्दिष्टः कष्टं कपिपराभवः ॥ ७२९ ॥
सालाट्टालप्रतोलीषु द्वारगोपुरवर्त्मसु ।
अधुना क्रियतां रक्षा रक्षोभिर्बलवत्तरैः ॥ ७३० ॥
ब्रह्मशापाभिभूतोऽसौ कुम्भकर्णः प्रबोध्यताम् ।
जयाशा मे सदा यस्मिन्ननुजे स्वभुजे यथा ॥ ७३१ ॥
स ममास्मिन्यदि भ्राता व्यसने नोपयुज्यते ।
तत्तेन स्फारसारेण भूमिभारेण किं वृथा ॥ ७३२ ॥
इति राक्षसराजेन समादिष्टाः क्षपाचराः ।
कुम्भकर्णप्रबोधाय विविशुस्तन्निकेतनम् ॥ ७३३ ॥
ददृशुस्तं प्रविश्योरुरत्नकुट्टिमसंश्रये ।
महार्हशयने सुप्तं कुम्भकर्णं गिरिप्रभम् ॥ ७३४ ॥

तस्य नासा गुहागर्भनिर्गतैः श्वासमारुतैः ।
गतागतमभूत्क्षिप्रं तृणानामिव रक्षसाम् ॥ ७३५ ॥
स शीतचन्दनैर्माल्यैः कीर्णो न बुबुधे यदा ।
तैस्तदा शङ्खभेरीणां सहस्रैश्चक्रिरे स्वनम् ॥ ७३६ ॥
ततो रक्षःसहस्राणि रथकुञ्जरवाजिभिः ।
तस्य विन्ध्यातटे स्फारे चिरं वक्षसि विभ्रमुः ॥ ७३७ ॥
स तैः समाहतोऽप्युग्रगदामुद्गरतोमरैः ।
गाढनिद्रां न तत्याज दुस्ततामिव दुर्जनः ॥ ७३८ ॥
ततस्त्रिदशगन्धर्वसिद्धविद्याधराङ्गनाः ।
विविशुस्तत्प्रबोधाय गीतवाद्यरवाकुलाः ॥ ७३९ ॥
तासां पीनस्तनस्पर्शैर्दिव्यचन्दनसौरभैः ।
मधुरैः काकलीगीतैः कुम्भकर्णो व्यबुध्यत ॥ ७४० ॥
सर्वथा भ्रूसमुल्लासविलासाञ्चितचक्षुषाम् ।
प्रगल्भता पुरंध्रीणामसाध्येष्वपि वस्तुषु ॥ ७४१ ॥
एताः पीयूषहासिन्यः कान्ता कुमुदकोमलाः ।
सर्वेन्द्रियशिलाभेदकठिना वज्रसूचयः ॥ ७४२ ॥
नेत्रे ततः समुन्मील्य पातालविपुलाननः ।
वज्राञ्चितभुजस्तम्भः कुम्भकर्णो व्यजृम्भत ॥ ७४३ ॥
स स्नात्वा हस्तिमहिषैर्मनुष्यैश्च कृताशनः ।
पीत्वा कुम्भसहस्राणि रुधिरस्यासवस्य च ॥ ७४४ ॥
सीतानिकारजं श्रुत्वा घोरं भ्रातुः पराभवम् ।
उत्थाय निश्वसन्कोपात्प्रययौ द्रष्टुमग्रजम् ॥ ७४५ ॥
तस्य मेरुशरीरस्य लग्नमर्कपथे शिरः ।
दृष्ट्वा बहिः स्थिताः सर्वे वानरा दुद्रुवुर्भयात् ॥ ७४६ ॥

इति कुम्भकर्णप्रबोधः ॥ २५ ॥

किरीटिनं महाकायं दृष्ट्वा रामः क्षपाचरम् ।

पप्रच्छ भयभंग्नेषु प्लवगेषु विभीषणम् ॥ ७४७ ॥
किमेतदद्भुततरं लङ्कायां भूतमुत्थितम्।
ब्रह्माण्डमण्डपे यातं मानस्तम्भाभिरामताम् ॥ ७४८ ॥
अयं शरीरवात्सल्ये चिराद्विन्ध्यः समुद्गतः।
कर्णकोणे करोत्येष येस्याङ्कः कुण्डलभ्रमम् ॥ ७४९ ॥
विस्मयादिति रामेण पृष्टः प्रेम्णा विभीषणः।
उवाच कुम्भकर्णोऽयं भ्रात्रा कृच्छ्रविबोधितः ॥ ७५० ॥
एष निर्जितजम्भारिर्जगत्क्षयकृतक्षणः।
ब्रह्मणैवं कृतस्वप्नो दीर्घनिद्रां प्रवेशितः ॥ ७५१ ॥
अनेन तरसा कृष्टो दन्त ऐरावणाननात्।
वासवः समरे वीरः प्रहारैर्जर्जरीकृतः ॥ ७५२ ॥
उद्यन्तां कपयस्तूर्णं तीव्रत्रासनिवृत्तये।
मन्त्र एष कृतो घोरो मायया राक्षसैरिति ॥ ७५३ ॥
विभीषणस्येतिधिया सैन्याब्धौ निर्भये कृते।
विवेश रावणं द्रष्टुं कुम्भकर्णो मदोत्कटः ॥ ७५४ ॥
स प्रणम्य दशग्रीवं चरणालीनशेखरः।
प्रबोधकारणं तेन प्रणयेन दशाननः।
पृष्टो बभाषे निश्वासैः पूर्वमुक्तमनक्षरम् ॥ ७५५ ॥
अहो मे दयितो भ्राता दिग्जये प्रथमो भुजः।
सुखसुप्तो न जानीषे नवं वैरिपराभवम् ॥ ७५६ ॥
सीतावियोगग्रस्तेन मनुष्येण पदातिना।
असत्प्रभावगम्भीरो नदीनाथः स्थलीकृतः ॥ ७५७ ॥
क एवं नाम जानीते लोकपालपुरःसरैः।
ममापि नगरी लङ्का यत्प्रयत्नेन रक्ष्यते ॥ ७५८ ॥
अस्यावमानपङ्कस्य कलङ्कस्य मलश्रियः।
शुद्धिस्त्वं निहतारातिवधूबाष्पाम्बुनिर्झरैः ॥ ७५९ ॥

---

१. 'रुग्णेषु' शा०. २. 'यस्यार्कः' इति स्यात्. ३. 'णैक' शा०.

इत्युक्ते राक्षसेन्द्रेण कुम्भकर्णोऽभ्यभाषत ।
हसन्विवृत्तवक्त्रेन्दुर्गुहागम्भीरनिस्वनः ॥ ७६० ॥
अहो वत न ते कश्चिद्विपश्चिन्मन्त्रिमण्डले ।
बभूव घोरव्यसनबाधव्याधिचिकित्सकः ॥ ७६१ ॥
सत्यं सीतापहारस्य परिहारस्य संपदाम् ।
पतनं पादपस्येव प्रत्यासन्नमिदं फलम् ॥ ७६२ ॥
राजन्किमेतत्सचिवैः प्रथमं न विचारितम् ।
जायते वा विपन्नेऽर्थे सा पूर्वं श्रेयसे मतिः ॥ ७६३ ॥
देशकालविरुद्धेषु कालेषु निद्रिता मतिः ।
आहुतिर्मन्त्रहीनेव न फलाय प्रकल्पते ॥ ७६४ ॥
छन्दानुवर्तिनः पापाहुर्नयेष्वनुवादिनः ।
मन्त्रिणः शत्रवो राज्ञामज्ञानसुहृदः परम् ॥ ७६५ ॥
मूर्खैरहो सहामात्यैः पशुभिः प्रोषितैरिव ।
आत्मक्षयोद्यतमतिर्भ्राता मम न रक्षितः ॥ ७६६ ॥
एकस्मिन्विवृते रन्ध्रे प्रविशत्येव पार्थिवम् ।
हंसश्रेणीव क्रौञ्चाद्रिं घोरानर्थपरम्परा ॥ ७६७ ॥
अपसारितरक्तस्य पट्टबन्धो महीपतेः ।
रोगस्येव विभिन्नस्य लाघवायैव केवलम् ॥ ७६८ ॥
शक्तः कृतोद्यमः शत्रुः स्वेनैवार्थेन तुष्यति ।
यदि तत्किमयं रामो भवद्भिः समुपेक्षितः ॥ ७६९ ॥
न कर्णाभ्यर्णमायातं न च लोचनगोचरम् ।
कदाचित्कस्यचिन्नाम महाब्धौ सेतुबन्धनम् ॥ ७७० ॥
कथं सेतुर्यशः सेतुर्मर्त्येनाब्धौ विवर्त्यते ।
प्रसारितः स कालेन दीर्घो बाहुः क्षयप्रदः ॥ ७७१ ॥
श्रुत्वैतत्कुम्भकर्णस्य वचनं पथ्यमप्रियम् ।
तमूचे रावणः कोपाद्भ्रुकुटीकुटिलाननः ॥ ७७२ ॥

वीरव्रतपरिभ्रष्टं श्रुतं तव मया वचः ।
आयासितोऽसि मिथ्यैव भजस्व शयनं पुनः ॥ ७७३ ॥
कथं वृद्ध इवाचार्यः पुनरुक्तानुशासनैः ।
श्रुतिशूलैः करोषि त्वं व्यथां शुक्तैरिवौषधैः ॥ ७७४ ॥
निर्दया किमतिक्रान्ते यत्कृतं साध्वसाधु वा ।
प्रतिक्रिया हि दोषस्य वर्तमानस्य चिन्त्यते ॥ ७७५ ॥
विचारावसरस्तावद्यावन्न स्फुरितं शरैः ।
रक्तक्षीबेषु खड्गेषु मन्त्रचिन्तासु कः प्रभुः ॥ ७७६ ॥
श्रीरक्षणक्षमस्यायमुपदेशस्य न क्षणः ।
रजन्यां नेत्रसर्वस्वं दिवा दीपो निरर्थकः ॥ ७७७ ॥
प्रमादाद्योऽयमस्माभिः सुमार्गो विषमीकृतः ।
त्वत्प्रभावसमीभूतः स भवत्वद्भुतोदयः ॥ ७७८ ॥
इति प्रौढप्रकोपस्य भ्रातुराकर्ण्य शासनम् ।
कुम्भकर्णोऽभ्यधात्क्षिप्रं वैलक्ष्यविनताननः ॥ ७७९ ॥
आर्य संत्यज्यतामेष शत्रुचिन्ताकृतो ज्वरः ।
त्वद्भ्रूभङ्ग इवात्युग्रः सज्जोऽहं विश्वसंक्षये ॥ ७८० ॥
अवश्यं तु हितं वाच्यं यदुक्तोऽसि मया प्रभो ।
त्रिजगत्क्षयदीक्षासु वयमभ्यधिकादराः ॥ ७८१ ॥
अधुना मद्भुजस्तम्भन्यस्तशत्रुपरिक्षयः ।
कान्ताप्रसादनव्यग्रश्चिरं विचर निर्वृतः ॥ ७८२ ॥
अवानरमसुग्रीवमलक्ष्मणमराघवम् ।
अद्य लोकं करोम्येष त्वच्छासनपरो रणे ॥ ७८३ ॥
एक एवाद्य गत्वाहमितो निजभुजायुधः ।
क्षपयामि परानीकं सर्वे तिष्ठन्तु राक्षसाः ॥ ७८४ ॥
सोत्सेकं कुम्भकर्णस्य वचः श्रुत्वा महोदरः ।
उवाच रावणाग्रेऽपि प्रगल्भः कार्यगौरवात् ॥ ७८५ ॥

कथं बाल इवाकाले निःसहायोऽपि चापलात्।
जेतुमिच्छसि काकुत्स्थं हन्तारं त्रिदशद्विषाम् ॥ ७८६ ॥
न ते शौर्यास्पदं गर्वादसंभाव्यं वदन्ति ये।
उद्योगकारिणी सत्यमत्युक्तिः फलवर्जिता ॥ ७८७ ॥
सर्वैः क्षपाचरगणैः सह गच्छ रणाङ्गणम्।
कुलानुरूपं युध्यस्व विजयस्तु विधेर्वशे ॥ ७८८ ॥
हतं तु राघवं मिथ्या विश्राव्य जनकात्मजाम्।
निराशां स्ववशां देवः करोतु दशकंधरः ॥ ७८९ ॥
मायायुद्धादयुद्धं वा वरं शंसास्पदं द्विषाम्।
बद्धा हि निधनं मूर्ध्नि युद्धेष्वाधीयते मतिः ॥ ७९० ॥
वाक्यं महोदरस्यैतदाकर्ण्य क्षितिपानुजः।
बभ्रुभ्रूभङ्गदीप्तार्चिर्ददाहेव दिशो दश ॥ ७९१ ॥
स ज्वालाकपिशं शूलं समादाय समुद्ययौ।
कल्पान्ते सर्वभूतानामभावायेव भैरवः ॥ ७९२ ॥
रत्नांशुमण्डितं मूर्ध्नि बबन्ध मुकुटं स्वयम्।
तस्य लङ्कापतिः प्रीत्या दीप्तं स्वमिव शासनम् ॥ ७९३ ॥
आमुक्तकंकटस्यास्य हारं स्फारसितद्युतिम्।
चचारोरसि पौलस्त्यकालाद्रेरिव निर्झरम् ॥ ७९४ ॥
स प्रणम्य दशग्रीवं रथमारुह्य भासुरम्।
युक्तं खरसहस्रेण च्छत्रप्रच्छादिताम्बरम् ॥ ७९५ ॥
वृतो राक्षससैन्येन प्रययौ योद्धुमुद्यतः।
धनुःशतपरीणाहषड्व्यामशतविस्तृतः ॥ ७९६ ॥
तस्य प्रसर्पतो भूमिर्जङ्गमस्येव भूभृतः।
चकम्पे भृशमायस्ता चिरं सगिरिकानना ॥ ७९७ ॥
स दृष्ट्वा वानरानीकं ननाद मदनिर्भरः।
भयमाविरभूद्येन भूतानां महतामपि ॥ ७९८ ॥

शिरसा पूरिताकाशमुरसा वृतदिक्तटम् ।
तं दृष्ट्वा वानराः सर्वे संत्रस्ता दुद्रुवुर्दिशः ॥ ७९९ ॥
भग्नेषु हरिसैन्येषु कुम्भकर्णभयाकुलान् ।
अभ्यधादङ्गदो मानी नादेन हरियूथपान् ॥ ८०० ॥
अलं भयेन नः शूरा महाकायो निशाचरः ।
किं करोत्यधिकं मृत्युरेक एव शरीरिणाम् ॥ ८०१ ॥
सर्वथा क्षयिणः प्राणास्तृणं येषां यशोर्थिनाम् ।
न तेषां प्रभवत्युग्रं विच्छिन्नालम्बनं भयम् ॥ ८०२ ॥
वयं सुसंहताः सर्वे स्थूलाकारं निशाचरम् ।
शक्ताः प्रापयितुं युद्धे धूर्ता इव वशे स्थितम् ॥ ८०३ ॥
इत्यङ्गदवरा वीराः परावृत्ताः प्लवङ्गमाः ।
अभ्ययुः कुम्भकर्णं ते सालतालाचलायुधाः ॥ ८०४ ॥
सावेगं वज्रसारेषु प्लवंगमभुजोज्झिताः ।
गुरवो गिरयस्तस्य गात्रेषु कणशो ययुः ॥ ८०५ ॥
चिक्षेप द्विविदस्तस्मै पर्वतं स्फारकन्धरम् ।
अप्राप्य कुम्भकर्णं यो निष्पिपेष निशाचरान् ॥ ८०६ ॥
ततः पद्भ्यां महाकायः प्लवगान्गिरिगौरवः ।
निष्पिष्य रक्ततटिनीमसृजद्रावणानुजः ॥ ८०७ ॥
प्रवृत्ते घोरनिर्घोषे समरे हरिरक्षसाम् ।
न बभूव क्षणं कश्चिन्मनागपि पराङ्मुखः ॥ ८०८ ॥
प्रभुसंमानभारस्य प्राणैरानृण्यकाङ्क्षिणाम् ।
ब्रह्मलोकाभिकामानामभूत्तेषां मिथः क्षयः ॥ ८०९ ॥
अथ प्लवगसैन्यानि मन्थाचल इवाकुलः ।
ममन्थ पृथुनिर्घोषः कुम्भकर्णो भयंकरः ॥ ८१० ॥
प्रहारोद्यतहस्तस्य तस्य रूपं प्लवंगमाः ।
कालस्येवोल्बणं दृष्ट्वा त्रस्ताः सर्वे ययुर्दिशः ॥ ८११ ॥

तेषु भग्नेषु सहसा परिवृत्याङ्गदोऽवदत् ।
कोऽयं नः[1] संभ्रमाविद्धः संत्रासः स्त्रीजनोचितः ॥ ८१२ ॥
अहो नु जीवितस्यास्य क्षणसंक्षयिणः कृते ।
भग्नैर्भवद्भिर्विक्रीतं स्वहस्तेनाक्षयं यशः ॥ ८१३ ॥
क्रियतामचलं चेतः साध्वसं विनिवार्यताम् ।
कीर्त्यर्थमायुः शूराणां तपोऽर्थं च द्विजन्मनाम् ॥ ८१४ ॥
नेयं पुण्यविहीनानां पतत्यङ्गेषु संगरे ।
मोक्षारोहणसोपानपङ्क्तिः खड्गपरम्परा ॥ ८१५ ॥
रामस्यार्थे भवद्भिर्यत्सुग्रीवस्योक्तमग्रतः ।
तत्सद्यः क्रियतां सत्यं सत्यं वित्तं हि मानिनाम् ॥ ८१६ ॥
ते जयन्ति जगत्पूज्याः साधवो धर्मबान्धवाः ।
येषां वसति वक्त्राब्जे मानः सत्यं सरस्वती ॥ ८१७ ॥
शूराणां व्रतमेतावद्यद्युद्धे न पराङ्मुखाः ।
किं तु द्यूत इवैतौ द्वौ भाग्यायत्तौ जयाजयौ ॥ ८१८ ॥
इत्यङ्गदस्य वचसा परावृत्ते बलार्णवे ।
पुनर्बभूव तुमुलं युद्धं प्लवगरक्षसाम् ॥ ८१९ ॥
गवाक्षजाम्म(म्ब)वन्नीलकुमुदद्विविधा(दा)ङ्गदाः ।
मैन्दचन्दनमुख्याश्च कुम्भकर्णं समाद्रवन् ॥ ८२० ॥
तैस्तुल्यं ससृजुस्तस्मै सालतालकुलाचलान् ।
पपात कुम्भकर्णस्य यैः समुन्मथितो रथः ॥ ८२१ ॥
विरथः शूलमुद्यम्य स चकार कपिक्षयम् ।
भुजसंघट्टविश्लिष्टनिष्पिष्टाशेषवानरः ॥ ८२२ ॥
ततस्तस्मै समभ्येत्य हनुमान्प्राहिणोद्गिरिम् ।
कुम्भकर्णोग्रशूलाग्रभिन्नाद्रिः स पपात च ॥ ८२३ ॥
निशिताग्रेण शूलेन वायुसूनुस्तनान्तरे ।
आहतः कुम्भकर्णेन ननादासृग्वमन्मुखात् ॥ ८२४ ॥

---

१. 'वः' शा०.

व्यथिते मारुतसुते विद्रुते वानरार्णवे ।
शैलं नीलश्च चिक्षेप विक्षिप्तपृथुपादपम् ॥ ८२५ ॥
स कुम्भकर्णमुष्ट्यग्रताडितो धरणीधरः ।
निपपात नवैश्वर्यमदोद्धत इवाधमः ॥ ८२६ ॥
शरभर्षभमुख्यान्स पाणिभ्यां प्रक्षिपन्मुखे ।
निगीर्यालग्नदन्ताग्रस्तृप्तिं न प्राप राक्षसः ॥ ८२७ ॥
भक्ष्यमाणेषु सैन्येषु सदैन्येषु महत्स्वपि ।
राघवं शरणं जग्मुर्भयार्ताः कपियूथपाः ॥ ८२८ ॥
ततः क्रोधोद्धतगतिः कुम्भकर्णं महाभुजः ।
जघानाभ्येत्य सुग्रीवश्चैत्यवृक्षेण वक्षसि ॥ ८२९ ॥
स तेनाभिहतः क्रोधाद्विहस्य विकटाननः ।
सुग्रीवायासृजद्घोरं शूलं शूलकरं द्विषाम् ॥ ८३० ॥
शूलं सहस्त्रैर्भाराणां निर्मितं वह्निपिङ्गलम् ।
पाणिभ्यां जानुसंध्यग्रे बभञ्ज प्लवगेश्वरः ॥ ८३१ ॥
शूलभङ्गात्प्रकुपितः कुम्भकर्णो ज्वलन्निव ।
गिरिशृङ्गेण महता निजघान हरीश्वरम् ॥ ८३२ ॥
तं शैलवेगाभिहतं मूर्छितं पतितं भुवि ।
आदाय प्रययौ लङ्कां प्रहृष्टो रावणानुजः ॥ ८३३ ॥
तं प्रयान्तं समालोक्य स्तूयमानं निशाचरैः ।
दुःखावमानक्रोधान्तः[1] प्रदध्यौ पवनात्मजः ॥ ८३४ ॥
अहो गृहीतः सुग्रीवो विसंज्ञः शत्रुणा रणे ।
धिगस्मान्सचिवानस्य मिथ्याबलभुजोर्जितान् ॥ ८३५ ॥
एष मुष्टिप्रहारेण हत्वाहं क्षणदाचरम् ।
करोमि गुरुसंमानगुरुभारावरोपणम् ॥ ८३६ ॥
अथवा लब्धसंज्ञोऽथ करोत्येष भुजोर्जितम् ।
मोक्षितोऽहं परेणेति लज्जां न सहते ध्रुवम् ॥ ८३७ ॥

१. 'धातः' क-ख.

तस्मान्नास्योत्सहे कर्तुं यशः शीतांशुमेघताम्।
करोमि तावत्सैन्यानां भग्नानां विनिवर्तनम्॥ ८३८॥
इति चिन्ताकुले दोलालोलचित्ते हनूमति।
सुग्रीवः शनकैः संज्ञां सुप्तोत्थित इवाप्तवान्॥ ८३९॥
स विधूय वपुर्वेगादुत्पत्योदग्रविक्रमः।
चकर्त कुम्भकर्णस्य कुपितः कर्णनासिके॥ ८४०॥
स कृत्तनासाश्रवणः स्रवद्रुधिरनिर्झरः।
भृशं विदारितः पार्श्वे निष्पिपेष क्षितौ कपिम्॥ ८४१॥
स निष्पिष्टो बलवता राक्षसेन कपीश्वरः।
खमुत्पत्य ययौ तूर्णं यत्र रामः सलक्ष्मणः॥ ८४२॥
ततः पुनः समभ्येत्य कुम्भकर्णो रणाङ्गणे।
चकार कदनं घोरं वानराणां तरस्विनाम्॥ ८४३॥
वसारुधिरसिक्ताङ्गो मत्तः कोपेन चाकुलः।
वानरैः सह चिक्षेप स वक्त्रे राक्षसानपि॥ ८४४॥
तं दृष्ट्वा त्यक्तमर्यादं स्वपरग्रामघस्मरम्।
त्रस्तानि सर्वभूतानि कालोऽयमिति मेनिरे॥ ८४५॥
भक्ष्यमाणेषु सर्वेषु तेन स्वेषु परेषु च।
तद्वक्त्रश्वभ्रविभ्रष्टा ससर्प रुधिरापगा॥ ८४६॥
ववृधे विपुलोत्सेधं तस्याधिकतरं वपुः।
यत्नेनाराध्यमानस्य दौर्जन्यमिव दुर्मतेः॥ ८४७॥
प्रभग्नेषु प्लवङ्गेषु क्षपितेषु च रक्षसा।
अभ्याद्रवत्तमाकृष्य चापं रामः सलक्ष्मणः॥ ८४८॥
तं शोणिताक्तसर्वाङ्गं प्रदीप्तमुकुटाङ्गदम्।
वर्जितं कपिरक्षोभिर्जगाद रघुनन्दनः॥ ८४९॥
अहो वतासि मोहेन महता क्षणदाचर।
स्वान्परांश्च न जानीषे प्राप्तैश्वर्य इवाधमः॥ ८५०॥

---

१. 'गन्तुं' ख०.

एषोऽहं पापवृत्तानां संहारैककृतक्षणः ।
करोमि त्वां दशास्यस्य यमवर्त्मपुरःसरम् ॥ ८५१ ॥
इति रामवचः शृण्वन्सौमित्रिशरदारितः ।
पुष्करावर्तनिर्घोषं प्रहस्योवाच राक्षसः ॥ ८५२ ॥
नाहं विराधमारीचकवन्धखरवालिभिः ।
तुल्यः कथं न जानीषे मां निर्जितसुरासुरम् ॥ ८५३ ॥
काकुत्स्थ कुम्भकर्णोऽहं शक्रादीनां भयंकरः ।
लोकपालवसादिग्धं पश्य मे घोरमुद्गरम् ॥ ८५४ ॥
इति तस्य ब्रुवाणस्य शरीरं रामसायकाः ।
विविशुः कृतरन्ध्रस्य क्रौञ्चाद्रेरिव सारसाः ॥ ८५५ ॥
ते रामकार्मुकोत्सृष्टाः खरप्राणहराः शराः ।
न व्यथा कुम्भकर्णस्य चक्रुः पुष्पमया इव ॥ ८५६ ॥
सुरसंहारसचिवं स समुद्यम्य मुद्गरम् ।
राममभ्याद्रवद्धोरं दिक्षु कुर्वन्भुजभ्रमम् ॥ ८५७ ॥
ततः ससर्ज काकुत्स्थो रौद्रमस्त्रं धृताखिलः ।
विद्धस्य वक्त्रान्निश्चेरुरर्चिषो येन राक्षसः ॥ ८५८ ॥
हृदि निर्मग्नबाणस्य मुद्गरो गिरिगौरवः ।
स पपात करात्तस्य प्राच्यो जय इवोर्जितः ॥ ८५९ ॥
ततो भुजायुधः क्रोधान्नष्टसंज्ञ इवाकुलः ।
घोरं चकार संहारं स पुनः कपिरक्षसाम् ॥ ८६० ॥
पुनर्मुद्गरमादाय सोऽभ्यधावत्प्लवंगमान् ।
पादव्यस्तक्षितिः कुर्वन्नवकाशमिवाम्बुधेः ॥ ८६१ ॥
तं ज्ञात्वा घोरगम्भीरक्षयव्यापारधीरितम् ।
उवाच लक्ष्मणश्चिन्तासंतप्तः कपियूथपान् ॥ ८६२ ॥
अथ सर्वे समारुह्य शरीरं भूधराकृतेः ।
कुर्वन्तु गात्रसंमर्दं भवन्तो गुरुविक्रमाः ॥ ८६३ ॥

१. 'विरुद्ध' शा०.

लक्ष्मणेनेत्यभिहिते गवाक्षकुमुदाङ्गदाः ।
जाम्बवद्गजनीलाद्यास्ते समारुरुहुर्जवात् ॥ ८६४ ॥
तानारूढान्प्रयत्नेन नवबद्ध इव द्विपः ।
विधूय गात्रं बलवान्दिक्षु चिक्षेप राक्षसः ॥ ८६५ ॥
ततः प्रभञ्जनास्त्रेण रामस्तस्य समुद्धरम् ।
भुजं चिक्षेप सावेगपातनिष्पिष्टवानरम् ॥ ८६६ ॥
कृत्तवामभुजः सोऽथ वृक्षमुद्यम्य राक्षसः ।
क्रुद्धोऽभ्यधावत्काकुत्स्थं नादेनाघट्टयन्दिशः ॥ ८६७ ॥
भुजं ससालं तमपि स्फाराजगरभीषणम् ।
ऐन्द्रेणास्त्रेण चिच्छेद रामस्तस्याद्रिगौरवम् ॥ ८६८ ॥
महता पतता तेन दोष्णा निष्पिष्टविग्रहाः ।
प्रलयं प्रययुर्गाढं संश्लिष्टाः कपिराक्षसाः ॥ ८६९ ॥
ततश्छिन्नभुजस्यास्य रक्तनिर्झरवर्षिणः ।
चरणावर्धचन्द्राभ्यां चिच्छेद रघुनन्दनः ॥ ८७० ॥
स कृत्तबाहुचरणः पातालविकृताननः ।
राममभ्याद्रवद्घोरः सूर्यं राहुरिवाकुलः ॥ ८७१ ॥
हेमपुङ्खैर्मुखं तस्य शरैः शिखरिदारणैः ।
अपूरयन्मुहूर्तेन राघवो लाघवोर्जितः ॥ ८७२ ॥
शक्रदत्तं शरं चास्मै चिक्षेपाशु क्षयंकरम् ।
यस्तस्य विपुलं वक्षो भित्त्वा भूतलमाविशत् ॥ ८७३ ॥
ततः प्रचण्डमार्तण्डमण्डलाग्राज्यतेजसः ।
रामः शिरः शरेणास्य चिक्षेप शिखरोपमम् ॥ ८७४ ॥
तस्मिन्निपतिते वेगात्स्फारे शिरसि रक्षसः ।
पेतुश्चूर्णीकृता लङ्काप्राकाराट्टालमेखलाः ॥ ८७५ ॥
काये निपतिते तस्य पिष्टे प्लवगमण्डले ।
दिक्षु सूर्यप्रकाशानामवकाशश्चिरादभूत् ॥ ८७६ ॥

उत्पाताभिहते लोके लोलसागरमेखला ।
लङ्का चकम्प सातङ्का संत्रस्तेव वराङ्गना ॥ ८७७ ॥
पातिते कण्टके तस्मिन्मुनीनां सदिवौकसाम् ।
हतो हत इति प्रौढः प्रादुरासीज्जनस्वनः ॥ ८७८ ॥
इती कुम्भकर्णवधः ॥ २६ ॥
भ्रातरं निहतं दृष्ट्वा भग्नमानो दशाननः ।
पपात शोकसंतापमूर्च्छितः काञ्चनासनात् ॥ ८७९ ॥
तं दृष्ट्वा पतितं भूमौ देवान्तकनरान्तकौ ।
त्रिशिराश्चातिकायश्च रुरुदुस्तत्सुताः शुचा ॥ ८८० ॥
महोदरमहापार्श्वौ कुम्भकर्णानुजौ नृपम् ।
दृष्ट्वा निश्चेष्टसर्वाङ्गं शोकतप्तौ बभूवतुः ॥ ८८१ ॥
कृच्छ्रेण संज्ञमासाद्य शोकशङ्कुशरैर्वृतः ।
पौलस्त्यः प्रसरद्बाष्पः प्रललापाकुलाशयः ॥ ८८२ ॥
हा कुम्भकर्ण त्रैलोक्यजययात्रापुरःसर ।
सुरेन्द्रसेनासरसीविलोडनमहागज ॥ ८८३ ॥
किं जीवितेन विच्छिन्नजयाशालम्बनस्य मे ।
कुम्भकर्णश्च्युतो यस्य दक्षिणः सहजो भुजः ॥ ८८४ ॥
अहो वत मया मोहात्सुखसुप्तो विबोधितः ।
अपुनर्दर्शनायैव शेते कृतभुजाननः ॥ ८८५ ॥
किं कृतं विप्रियं भ्रातस्तव प्रणयिनो मया ।
अस्मिन्व्यसनकाले मां यत्परित्यज्य गच्छसि ॥ ८८६ ॥
हेलानिर्जितजम्भारिः कथं भुवनभञ्जदः ।
हतोऽसि युधि मर्त्येन जम्बुकेनेव कुञ्जरः ॥ ८८७ ॥
अधुना मम का सीता धिग्राज्यं जीवितेन किम् ।
कुम्भकर्णविहीनस्य हन्त शून्या जगत्त्रयी ॥ ८८८ ॥
स्वयं मे दुर्नयतरौ विपाकः फलसंततेः ।
विभीषणवचो येन तथ्यं पथ्यं च न श्रुतम् ॥ ८८९ ॥

स मया विनयी धीमान्भक्तो भ्राता विवासितः।
यद्वाक्यातिक्रमादेष स्वयं प्राप्तः पराभवः॥ ८९० ॥
इति प्रलापिनः श्रुत्वा वचनं मानिनः पितुः।
उवाच त्रिशिरा दुःखं नियम्यान्तः समुत्थितम्॥ ८९१ ॥
एवमेतन्महाराज धर्ममुक्तं यदुक्तवान्।
विभीषणस्तद्भवता न गृहीतं हितं पुनः॥ ८९२ ॥
अधुना किं प्रलापेन पश्चात्तापेन किं वृथा।
अतीतं नानुशोचन्ति साधवो धैर्यसागराः॥ ८९३ ॥
त्वदर्थे कुम्भकर्णस्य श्लाघ्यो जीवितसव्ययः।
साधुवादस्तनुत्यागे धन्यानामेव जायते॥ ८९४ ॥
न ते शोच्याः शुचियशःपूर्णचन्द्रोदयाचलाः।
प्रधने निधनं येषां निधनन्यस्तचक्षुषाम्॥ ८९५ ॥
क्रियतामुचितं चैव भुजानां विक्रमस्य च।
रणे हतानां शूराणां न शोकेन प्रतिक्रिया॥ ८९६ ॥
रथो धनुः शराः[1] शौर्यं शक्तिः[2] शक्तिश्च ते दृढा।
कुम्भकर्णवधक्रोधः क्षिप्रं शत्रुषु पात्यताम्॥ ८९७॥
स्थितेष्वस्मासु ते तात विधेयेषु भुजेष्विव।
को रामः कश्च सौमित्रिः के वराकाः प्लवङ्गमाः॥ ८९८ ॥
इति त्रिशिरसो वाक्यान्मन्दशोके दशानने।
अतिकायप्रभृतयस्तथेत्यूचुर्मदोत्कटाः॥ ८९९ ॥
ततस्ते निर्ययुर्मूर्ध्ना पितुरादाय शासनम्।
महोदरमहापार्श्वौ तत्पितृव्यौ च सानुगौ॥ ९०० ॥
ते समासाद्य विपुलं कपिसैन्यमहोदरम्।
चक्रिरे शरवर्षेण दुःसहः क्षोभविभ्रमः॥ ९०१ ॥
ततः कपिप्रधानानां यातुधानबलैः सह।
निर्विभागमभूद्युद्धं शिलाशस्त्रास्त्रदुःसहम्॥ ९०२ ॥

---

१. शस्त्रविशेषः. २. सामर्थ्यविशेषः.

रथो रथेन निष्पिष्य कुञ्जरेणैव कुञ्जरः ।
रक्षसा राक्षसो युद्धे वानरेणैव वानरः ॥ ९०३ ॥
अथातिकायत्रिशिरौ देवान्तकनरान्तकैः ।
दारिताः प्लवगाः पेतुश्छिन्नपक्षा इवाद्रयः ॥ ९०४ ॥
राक्षसैर्बाध्यमानेषु प्लवगेष्वङ्गदो वली ।
सुग्रीवशासनात्तूर्णं नरान्तकमुपाद्रवत् ॥ ९०५ ॥
नरान्तकोऽपि तुरगारूढः प्रासं महाजवम् ।
चिक्षेप वालिपुत्रस्य वक्षसि प्रौढविक्रमः ॥ ९०६ ॥
स शिलापीठकठिने प्रासस्तस्योरसि क्षणात् ।
भग्राननः पपाताग्रे याच्ञाभङ्गादिवाधनः ॥ ९०७ ॥
ततस्तस्याङ्गदः कोपात्तुरङ्गं वल्गु वल्गितम् ।
चक्रे मुष्टिप्रहारेण शीर्णवक्त्रशिरोधरम् ॥ ९०८ ॥
निहताश्वोऽभिसृत्याशु क्रोधाक्रान्तो नरान्तकः ।
जघान मुष्टिना वालिसूनुं मूर्ध्नि वलोत्कटः ॥ ९०९ ॥
स रक्तनिर्झरोद्गारी धातुसिक्त इवाचलः ।
मुष्टिना वज्रकल्पेन निजघान नरान्तकम् ॥ ९१० ॥

इति नरान्तकवधः ॥ २७ ॥

हते नरान्तके घोरे देवान्तकमहोदरौ ।
त्रिशिराश्चाङ्गदं क्रुद्धा लब्धलक्षं समाद्रवत् ॥ ९११ ॥
देवान्तकाय चिक्षेप महापादपमङ्गदः ।
तं चाशुकारी त्रिशिराश्चकार तिलशः शरैः ॥ ९१२ ॥
शालशैलावलीं तस्मै प्राहिणोदङ्गदः क्रुधा ।
वभञ्ज त्रिशिराः क्षिप्रं परिघाग्रेण तामपि ॥ ९१३ ॥
ऐरावणसमं तत्र समारुह्य सुदर्शनम् ।
गजं महोदरश्चक्रे तोमरच्छिन्नमङ्गदम् ॥ ९१४ ॥
देवान्तकेन च जवात्[1]परिघेनाङ्गदो हतः ।

1. 'परिघेणाहतोऽङ्गदः' शा०.

गजदन्तं समुत्पाट्य जघानोरसि तं बली ॥ ९१५ ॥
वीरैस्त्रिभिस्तैर्युगपत्प्रदीप्तायुधवृष्टिभिः।
राक्षसैरावृतस्तीव्रं न चचालाङ्गदो युधि ॥ ९१६ ॥
ततः समेत्य हनुमान्नीलश्च कपियूथपौ।
चक्राते तैस्त्रिभिर्युद्धं शिलाशस्त्रास्त्रदुःसहम् ॥ ९१७ ॥
शरोत्कृत्तमहाशैलं ततो देवान्तकं क्रुधा।
मुष्टिपाताहतं चक्रे गतासुं पवनात्मजः ॥ ९१८ ॥

इति देवान्तकवधः ॥ २८ ॥

हते देवान्तके नीलः शरैस्त्रिशिरसार्दितः।
महोदराय चिक्षेप संग्रामासाद्य भूधरम् ॥ ९१९ ॥
स तेन गाढनिष्पिष्टो दुर्लक्षावयवः क्षितौ।
निपपात समातङ्गः प्रध्वस्ताङ्कुशतोमरः ॥ ९२० ॥

इति महोदरवधः ॥ २९ ॥

हतं पितृव्यमालोक्य त्रिशिराः क्रोधमूर्छितः।
शरैश्चकार कदनं वानराणां तरस्विनाम् ॥ ९२१ ॥
स शक्तिं वायुपुत्राय प्राहरत्प्राणहारिणीम्।
तमापतन्तीमादाय बभञ्ज पवनात्मजः ॥ ९२२ ॥
शक्तिभङ्गक्रुधा खड्गमाकृष्य क्षणदाचरः।
आजघानोरसि स्फारे हनुमन्तं महाभुजः ॥ ९२३ ॥
खड्गप्रहारकुपितः सोऽथ वक्षसि राक्षसम्।
निजघान तलाग्रेण वज्रनिष्पेषपातिना ॥ ९२४ ॥
स तेनाभिहतः कोपान्निपपात च्युतायुधः।
भ्रान्तां वसुमतीं पश्यन्मूर्छितः कनकप्रभाम् ॥ ९२५ ॥
हत्वा निपतितस्यास्य करवालं करात्कपिः।
शिरांसि त्रीणि चिक्षेप शिखराणीव भूभृतः ॥ ९२६ ॥

इति त्रिशिरोवधः ॥ ३० ॥

हते त्रिशिरसि क्रुद्धो महापार्श्वः प्रतापवान्।
गुर्वीं गदां समुद्यम्य निष्पिपेष प्लवंगमान्॥ ९२७॥
ऋषभस्योरसि गदां स तां त्रिदशभञ्जदाम्।
अपातयद्यथा संज्ञां कृच्छ्रेण कपिराप्तवान्॥ ९२८॥
जवेनास्य गदां हृत्वा वानरो वरुणात्मजः।
तथा जघान येनासौ मूर्छितः प्रापतद्व्यसुः॥ ९२९॥

इति महापार्श्ववधः॥ ३१॥

अतिकायो रथेनाथ सहस्राश्वेन नादिना।
राहुध्वजेन महता धन्वी राममुपाद्रवत्॥ ९३०॥
तमापतन्तमालोक्य रत्नाङ्गदकिरीटिनम्।
ऊचे विभीषणं रामः कोऽयं शौर्योर्जिताकृतिः॥ ९३१॥
विभीषणस्तमवदत्पौलस्त्यस्यायमग्रजः।
अतिकायो महोत्साहः प्रजापतिवरोर्जितः॥ ९३२॥
एष धैर्यनिधिर्धीमान्सुवृत्तः श्रुतवान्वशी।
धर्मे नित्यं नये मन्त्रे सत्ये सत्त्वे च विश्रुतः॥ ९३३॥
अवध्यः सर्वभूतानां तरस्वी मानिनीसुतः।
गायन्ति यस्य चरितं दिवि देवमृगीदृशः॥ ९३४॥
उक्ते विभीषणेनेति चिरं रामस्तमैक्षत।
गुणलुब्धा विरुद्धेऽपि सादरा एव साधवः॥ ९३५॥
अतिकायोऽथ निःशस्त्रमग्नभीतपराङ्मुखान्।
वर्जयन्युध्यमानानां चकार समरे क्षयम्॥ ९३६॥
तेनाहतेषु सैन्येषु शरैरशनिदारुणैः।
मैन्दद्विविदमुख्यानां बभूवापूर्वसंभ्रमः॥ ९३७॥
तमभ्येत्याथ सौमित्रिरमित्रं त्रिदिवौकसाम्।
पात्रीचकार बाणानां दीप्तानामिव मन्युना॥ ९३८॥
अतिकायभुजोत्सृष्टान्सायकान्स्तम्भसन्निभान्।

चिक्षेप लक्ष्मणः क्षिप्रं वज्राग्निनिशितैः शरैः ॥ ९३९ ॥
तस्य ज्यातलघोषेण निर्घोषेणाशनेरिव ।
बभूव रक्षसां कोऽपि कम्पः कपिमदप्रदः ॥ ९४० ॥
असकृद्विनिकृत्तेषु लक्ष्मणेनाशुकारिणा ।
शरैः शरसहस्रेषु विस्मितोऽभून्निशाचरः ॥ ९४१ ॥
सोऽथ सौमित्रिणा गाढं ललाटे पत्रिणा हतः ।
श्रमस्रस्तारुणोष्णीष इवाभूद्भूरिशोणितः ॥ ९४२ ॥
रक्षसा सायकेनाथ हतो वक्षसि लक्ष्मणः ।
पुष्पच्छन्न इवाशोकश्चकाशे रुधिरोक्षितः ॥ ९४३ ॥
अथाग्नेयं ससर्जास्मै महास्त्रं राघवानुजः ।
तच्चातिकायः सौरेण चकारास्त्रेण निष्फलम् ॥ ९४४ ॥
ऐषीकमभिमन्त्र्यास्त्रं जघानास्त्रेण लक्ष्मणः ।
आग्नेयं पवनास्त्रेण प्रतिजघ्ने च तद्रिपुः ॥ ९४५ ॥
ततः सौमित्रिनिर्मुक्ता पत्रिणो वज्रघातिनः ।
अतिकायस्य कवचे ब्राह्मे भग्नाः क्षितिं ययुः ॥ ९४६ ॥
ब्रह्मदत्तवरं रक्षो ब्रह्मास्त्रेणैव बाध्यते ।
इति कर्णे समभ्येत्य लक्ष्मणं मारुतोऽभ्यधात् ॥ ९४७ ॥
अथ प्रादुश्चकारास्त्रं ब्राह्मं दशरथात्मजः ।
त्रैलोक्यत्रासगुरुणा येन विश्वमकम्पत ॥ ९४८ ॥
तदस्त्रमतिकायस्य दीप्तायुधपरम्पराम् ।
हत्वा जहाराशु शिरः स्फुरन्मुकुटकुण्डलम् ॥ ९४९ ॥
अतिकाये निपतिते शिखरे त्रिदशद्विपाम् ।
ययौ सहस्रधा क्षिप्रं श्वभ्रभ्रष्टेव वाहिनी ॥ ९५० ॥

इत्यतिकायवधः ॥ ३२ ॥

श्रुत्वातिकायप्रमुखान्निहतान्रावणः सुतान् ।
भ्रातरौ च महावीरौ महापार्श्वमहोदरौ ॥ ९५१ ॥

---

१. 'वज्रादि' शा०.

शोकमन्युसमाविष्टः कष्टं व्यसनमाश्रितः ।
शुशोच साश्रुनयनः काले फलति दुर्नयः ॥ ९५२ ॥
तमुवाचेन्द्रजिद्वीरः शेखरस्त्रिदशद्विषाम् ।
तात विक्रमकालेऽस्मिन्न शोकं कर्तुमर्हसि ॥ ९५३ ॥
शत्रुक्षये भुजाधीने वाष्पैर्नारीजनोचितैः ।
हासायतनमात्मानं कुर्वते हितमानिनः ॥ ९५४ ॥
चिन्ता तवापि निर्मग्ना यदि शत्रुकृता हृदि ।
तत्किमेभिर्यशोभिर्मे मिथ्याशत्रुजयोर्जितैः ॥ ९५५ ॥
अद्य लोकं विधायाहमवानरमराघवम् ।
अवमानोदधेः पारं गच्छाम्यायुधसेतुना ॥ ९५६ ॥
मेघनादो निगद्येति तूर्णं गत्वा निकुम्भिलाम् ।
असितच्छागकण्ठास्त्रैर्वह्निं हुत्वा च पूर्ववत् ॥ ९५७ ॥
जगामान्तर्हितो युद्धमहीं ब्रह्मास्त्रदुर्जयः ।
जगत्प्रलयसंक्षोभं सहसा दर्शयन्निव ॥ ९५८ ॥
अदृश्यत ततो रात्रिः संहारसहचारिणी ।
तस्य मायेव दुर्लक्ष्या कालरात्रिर्वनौकसाम् ॥ ९५९ ॥
घोरा हरिशरीरेषु शस्त्रपातपरम्परा ।
पपात वितता व्योम्नः सर्वतः प्राणहारिणी ॥ ९६० ॥
प्रवरेषु प्लवङ्गेषु शरशूलपरश्वधैः ।
राक्षसैर्भाव्यमानेषु निर्घोषस्तुमुलोऽभवत् ॥ ९६१ ॥
छिन्नजानुशिरोग्रीवैश्च्युतपादशिरोरुभिः ।
पतितैर्वानरवरैर्दुःसंचारा बभूव भूः ॥ ९६२ ॥
नलनीलसुषेणेषु कुमुदद्विविदादिषु ।
गवाक्षगजमुख्येषु निहतेषु तरस्विषु ॥ ९६३ ॥
हतशेषेषु भग्नेषु शस्त्रवृष्टिर्निरन्तरा ।
एकीभूता पपातेव रामलक्ष्मणयोर्युधि ॥ ९६४ ॥

निहते वानरानीके शरैराच्छादिताकृतिः ।
जगाद लक्ष्मणं रामः शस्त्रवृष्टिविदारितम् ॥ ९६५ ॥
पश्य शक्रजितो युद्धं ब्रह्मास्त्रेण प्रमाथिना ।
निरुद्धे भुवनालोके ककुभः संहृता इव ॥ ९६६ ॥
अहो बत ममानेन सैन्यं निर्दलितं क्षणात् ।
पक्कं क्षेत्रमिवाकाले मेघेनाशनिवर्षिणा[1] ॥ ९६७ ॥
निःसंचारा दिशः सर्वा अदृश्या व्योम्नि राक्षसाः ।
ब्रह्मास्त्रमप्रतिहतं नात्र विद्मः प्रतिक्रियाम् ॥ ९६८ ॥
इति ब्रुवाणः प्रसभं रामः शस्त्रास्त्रसंचयैः ।
विदारितः स सौमित्रिर्निश्चेष्टः समपद्यत ॥ ९६९ ॥
कृत्वा तदद्भुतं युद्धं शक्रजिद्विजयोर्जितः ।
प्रविश्य लङ्कां विदधे हेर्षमानोत्सवं[2](?) पितुः ॥ ९७० ॥

इतीन्द्रजिद्युद्धम् ॥ ३३ ॥

घोरे तस्मिन्निरालोके निःशब्दे यामिनीमुखे ।
कपिसैन्ये निपतिते प्रसुप्त इव भूतले ॥ ९७१ ॥
एको विभीषणस्तत्र धीरः सह हनूमता ।
संचचार हतान्द्रष्टुं प्रज्वाल्योल्कां शराकुलः ॥ ९७२ ॥
सुग्रीवाङ्गदमुख्यानां प्लवगानां प्रहारिणाम् ।
सप्त संनिहताः कोट्यः कपीनां तत्र राक्षसैः ॥ ९७३ ॥
तान्दृष्ट्वा निहतान्वीरौ वायुपुत्रविभीषणौ ।
जाम्बवन्तं ददृशतुः किंचिदालक्ष्यजीवितम् ॥ ९७४ ॥
शरतल्पगतं वृद्धं मर्मच्छेदव्यथातुरम् ।
तं सुप्तकरणग्रामं धीमानूचे विभीषणः ॥ ९७५ ॥
कच्चिदार्य तव प्राणास्तिष्ठन्ति दलिताकृतेः ।
विलुप्तविभवस्यान्ते सुहृदः सज्जना इव ॥ ९७६ ॥

१. 'मेघनादेन वर्षिणा' शा०. २. 'हर्षं मानो' स्यात्.

विभीषणवचः श्रुत्वा कण्ठप्राप्ताल्पजीवितः ।
तं शनैर्जाम्बवानूचे कृच्छ्रेणाल्पतरस्वनः ॥ ९७७ ॥
त्वत्संगमो मे पौलस्त्य दिष्ट्या प्रचलितायुषः ।
त्वां स्वरेणाभिजानामि न तु पश्यामि चक्षुषा ॥ ९७८ ॥
इष्टसंदर्शनं दानं सुकृतोदीरणं जनैः ।
दीर्घप्रवासे प्राणानां दुःखसंमार्जनं परम् ॥ ९७९ ॥
कच्चिज्जीवति तेजस्वी हनुमान्वायुनन्दनः ।
कच्चिन्नु तद्विरहितं निरालोकमिदं जगत् ॥ ९८० ॥
इति क्षपाचरः श्रुत्वा वचस्तस्य विभीषणः ।
तमुवाच धियो ज्ञातुं मारुतेरेव शृण्वतः ॥ ९८१ ॥
अहो बत वयं सर्वे निरपेक्षाः स्वजीविते ।
ययोरर्थे न तौ कस्मादार्य पृच्छसि राघवौ ॥ ९८२ ॥
प्रभुं सुग्रीवमुत्सृज्य युवराजं तथाङ्गदम् ।
दयितान्सुहृदश्चान्यान्कस्मात्पृच्छसि मारुतिम् ॥ ९८३ ॥
तस्मिन्संनिहिते रामः सर्वथा कुशलास्पदाम् ।
तस्मिन्हते हतं सैन्यं तस्मिञ्जीवति जीवति ॥ ९८४ ॥
श्रुत्वैतद्वचनं तस्य यथार्थं रावणानुजः ।
उवाच जीवन्नेष त्वां हनुमान्द्रष्टुमागतः ॥ ९८५ ॥
ततोऽभिवाद्य हनुमाञ्जाम्बवन्तं यशोनिधिः ।
ततो बभूव निष्पन्दस्तद्व्यथाव्यथितेक्षणः ॥ ९८६ ॥
वायुसूनुं स्थितं ज्ञात्वा धृतिमासाद्य जाम्बवान् ।
तमुवाच परं पारं प्राप्तः शोकोदधेरिव ॥ ९८७ ॥
एह्येहि हरिशार्दूल गात्रं मे स्पृश पाणिना ।
दिष्ट्या त्वामक्षततनुं पश्याम्यानन्दबान्धवम् ॥ ९८८ ॥
सुग्रीवाङ्गदमुख्यानां कपीनां राघवस्य च ।
घोरे विनाशकालेऽस्मिंस्त्वमेवैकः परायणम् ॥ ९८९ ॥

सुकृतस्य विवेकस्य हेम्नः[1] साधुजनस्य च ।
उपयोगो विशेषेण कृच्छ्रकाले शरीरिणाम् ॥ ९९० ॥
विलङ्घ्य जलधिं धीरो हिमवन्तं च भूधरम् ।
सुवर्णशृङ्गमृषभं कैलासशिखरं तथा ॥ ९९१ ॥
दीप्तौषधिं गिरिं दिव्यं तन्मध्ये प्राप्य दुर्गमम् ।
औषधीर्भासुराकाराश्चतस्रस्तूर्णमाहर ॥ ९९२ ॥
विशल्या जीवनी वर्ण्या संधिनी चेति तास्त्वया ।
इहानीताः करिष्यन्ति व्यसनेऽस्मिन्प्रतिक्रियाम् ॥ ९९३ ॥
इति जाम्बवतो वाक्यं निशम्य पवनात्मजः ।
तथेत्युक्त्वा ययौ क्षिप्रमुरुवेगहताचलः ॥ ९९४ ॥
नभसा व्रजतस्तस्य नादेनाकल्पकारिणा ।
लङ्कायां रक्षसां कोऽपि बभूव प्रलयभ्रमः ॥ ९९५ ॥
स हिमाचलमासाद्य व्याप्तं मुनितपोधनैः ।
ब्रह्मकोशं पदं धाम्नां रजताद्रिं च सिद्धिदम् ॥ ९९६ ॥
शक्रालयं रुद्रनगं प्रमोक्षं तुरगाननम् ।
ब्रह्मशीर्षं यमस्थानं वज्रं वैश्रवणालयम् ॥ ९९७ ॥
सूर्यधाम ब्रह्मपदं कार्मुकं च पिनाकिनः ।
नासां वसुंधरायाश्च कैलासं स हिमाचलम् ॥ ९९८ ॥
स विलङ्घ्य समादाय दीप्तमौषधिपर्वतम् ।
तूर्णं तद्ग्रहणत्रासात्सहसान्तर्हितौषधम् ॥ ९९९ ॥
तदन्तर्धानकुपितो नादेनावृत्य रोदसीम् ।
स शृङ्गमोषधिगिरेरुत्पाट्य प्रययौ जवात् ॥ १००० ॥
मुहूर्तेन समासाद्य स्वसैन्यं तेजसां निधिः ।
दिशो वितिमिराः सर्वाश्चकारौषधिरश्मिभिः ॥ १००१ ॥
अथौषधीनां गन्धेन विशल्यौ रामलक्ष्मणौ ।
रूढव्रणौ क्षणात्संज्ञां नष्टशोकाववापतुः ॥ १००२ ॥

---

१. 'स्नेहः' शा०.

आमोदेनौषधिगिरेर्विप्रकीर्णेन वायुना ।
वानरेषु विशल्येषु क्षिप्रं सुप्तोत्थितेष्विव ॥ १००३ ॥
हनुमान्कृतकार्यस्तं दीप्तमौषधिशेखरम् ।
गत्वा निजपदे तूर्णं निक्षिप्य पुनराययौ ॥ १००४ ॥
इत्यौषध्यानयनम् ॥ ३४ ॥
ततः प्रहृष्टाः प्लवगाः परिष्वज्य परस्परम् ।
नादेन चक्रिरे क्षोभं राक्षसक्षयशंसिना ॥ १००५ ॥
ते शासनं समासाद्य सुग्रीवस्य महौजसः ।
उल्कासहस्रैः प्रज्वाल्य दीप्तां लङ्कां प्रचक्रिरे ॥ १००६ ॥
क्रोधेनेव प्लवङ्गानां निशि सा ज्वालिता पुरी ।
चुक्रोश विद्रुवत्कान्तारशनानूपुरैरिव ॥ १००७ ॥
वह्नेश्चटचटारावं मुखरस्य प्रधावतः ।
उत्सवे प्राकृतस्येव संरम्भोऽभूदितस्ततः ॥ १००८ ॥
मणिवेश्मसु हर्म्येषु प्रासादेषु परेषु च ।
ज्वालाहस्तैर्मुहुश्चक्रे संविभागमिवानलः ॥ १००९ ॥
जलाशयेभ्यः सलिलं प्रतिबिम्बाग्निपिङ्गलम् ।
समादातुमपि प्राप्तौ न पस्पर्श भयाज्जनः ॥ १०१० ॥
दीप्ता रामप्रतापेन पुनरुक्तेन चाग्निना ।
निशीथे विबभौ लङ्का तटे हेमगिरेरिव ॥ १०११ ॥
अनिलोद्धूलितज्वालाकलापवदनोऽनलः ।
दग्धा न वेति नगरी ददर्शेति पुनः पुनः ॥ १०१२ ॥
तेन वह्निप्रकाशेन दिगन्तालोककारिणा ।
ग्रस्तेव क्षणदा क्षिप्रं रक्षसां पक्षपातिनी ॥ १०१३ ॥
ततः प्रदीप्तामालोक्य प्राकाराट्टालमालिकाम् ।
लङ्कानल इव क्रोधात्प्रजज्वाल दशाननः ॥ १०१४ ॥
तथा सैन्येन महता तद्गिरा कुम्भकर्णजौ ।
निकुम्भकुम्भौ संग्रामं जग्मतुर्भङ्गदौ द्विषाम् ॥ १०१५ ॥

घोरैः प्रवृत्ते समरे रक्षसां वानरैर्निशि।
उन्मीलिता इव दिशो बभुर्दीप्तायुधांशुभिः॥ १०१६॥
निर्मर्यादे रणे तस्मिन्नाविष्टेषु भटेष्विव।
कम्पनः कम्पितारातिर्जघान गदयाङ्गदम्॥ १०१७॥
गदाभिघातपतितः समाश्वस्य प्लवङ्गमः।
[1]..................................................।
बाणेनाकर्णकृष्टेन विव्याध द्विविधं(दं) हृदि॥ १०१८॥
द्विविधे(दे) भूधराकारे विह्वले पतिते भुवि।
मैन्दः शिलां समुद्यम्य कुम्भमभ्याद्रवद्रुषा॥ १०१९॥
क्षिप्तां तां तेन बलिना शिलां विपुलविग्रहः।
जघान पञ्चभिर्बाणैः कुम्भो मैन्दं च पत्रिणा॥ १०२०॥
मूर्छिते पतिते भूमौ मैन्दे हृदि शराहते।
अङ्गदो मातुलस्नेहात्कुम्भाय प्राहिणोद्रुमम्॥ १०२१॥
कुम्भश्छित्त्वा शरैस्तूर्णं तरुशैलपरम्पराम्।
अङ्गदं विदधे धन्वी स्रवद्रुधिरनिर्झरम्॥ १०२२॥
शराभिघाताकुलिते मूर्छिते वालिसंभवे।
कुम्भमभ्याद्रवत्कोपात्कपयो जाम्बवन्मुखाः॥ १०२३॥
ते कुम्भशरवर्षेण वृता निःस्पन्दविग्रहाः।
नैवाभिमुखमाजग्मुः प्रययुर्न च लज्जया॥ १०२४॥
ततोऽभिपत्य सुग्रीवः सालतालशिलाशतैः।
क्षिप्तैश्चकार ककुभः कुम्भक्रोधान्निरन्तराः॥ १०२५॥
छित्त्वा द्रुमशिलाः कुम्भः शरैरापूर्य सर्वतः।
वीरश्चकार सुग्रीवं सूर्यं मेघैरिवावृतम्॥ १०२६॥
सुग्रीवो रथमाप्लुत्य कराभ्यां तस्य कार्मुकम्।
द्विधा विधाय प्रोवाच धीरो युध्यस्व राक्षसौ॥ १०२७॥

---

१. त्रुटिचिह्नं तु पुस्तकेषु न दृश्यते, तथापि संदर्भभङ्गेनानुमीयते त्रुटिः.

रावणाभ्यधिकं दर्पे कुम्भकर्णाधिकं बले ।
मेघनादाधिकं शौर्ये जानामि त्वां निशाचर ॥ १०२८ ॥
पश्य मे भुजयोर्वेगं वज्रनिष्पेषगौरवम् ।
इति ब्रुवाणं सुग्रीवं मुष्टिना राक्षसोऽवधीत् ॥ १०२९ ॥
मुष्टिप्रहारपिष्टास्थिसंजाताग्निः कपीश्वरः ।
मुष्टिनैवोग्रवेगेन जघान क्षणदाचरम् ॥ १०३० ॥
मुष्टिघातेन निर्भिन्नः कुलिशेनेव भूधरः ।
पपात भूतले कुम्भः प्रभूतोद्भूतशोणितः ॥ १०३१ ॥

इति कुम्भवधः ॥ ३५ ॥

सुग्रीवेण हते कुम्भे निकुम्भः कपिवाहिनीम् ।
पिपेष परिघाघातैर्घोरनिर्घोषभीषणः ॥ १०३२ ॥
अपातयत्स परिघं दृढं वक्षसि मारुतेः ।
विपुलापातवेगेन सहसा शतधा गतम् ॥ १०३३ ॥
गाढप्रहाराभिहतश्चकम्पे पवनात्मजः ।
कैलाश इव पौलस्त्यभुजस्तम्भसमुद्धृतः ॥ १०३४ ॥
व्यथां संस्तभ्य हनुमान्मुष्टिना क्षणदाचरम् ।
निजघानास्थिनिष्पेषजातज्वालाजटाजुषा ॥ १०३५ ॥
मुष्टिघाताहतः कोपान्निकुम्भः पवनात्मजम् ।
जहार भुजबन्धेन बद्धागाढनिपीडितम् ॥ १०३६ ॥
स रक्षसा गृहीतोऽपि मुष्टिना तमताडयत् ।
तत्पीडितेन तेनासौ विमुक्तो भुजपञ्जरात् ।
पृष्ठे निपतितं चक्रे व्यसुं भग्नशिरोधरम् ॥ १०३७ ॥

इति निकुम्भवधः ॥ ३६ ॥

हते निकुम्भे भूतानां भयस्थाने हनूमता ।
प्लवङ्गसंगरे भङ्गः कोऽप्यभूत्पिशिताशिनाम् ॥ १०३८ ॥
ततः सैन्येन महता वृतो रावणशासनात् ।
अभ्याययौ खरसुतो मकराक्षः क्षपाचरः ॥ १०३९ ॥

स शरैरशनिस्पर्शैर्विदार्य हरिवाहिनीम्।
क रामः क च सौमित्रिरित्यपृच्छन्परान्मुहुः॥ १०४०॥
ततो राघवमासाद्य कर्णान्ताकृष्टकार्मुकम्।
सोऽब्रवीदद्य गच्छामि पारं पितृवधात्क्रुधः॥ १०४१॥
शरवृष्टिं तदुत्सृष्टां छित्त्वा रामः शितैः शरैः।
सूतं रथं धनुश्चास्य चिच्छेदाद्भुतविक्रमः॥ १०४२॥
स शूलं राघवायोग्रं चिक्षेप ज्वलनप्रभम्।
ददृशुस्त्रिदशास्तच्च कृत्तं रामशरैस्त्रिभिः॥ १०४३॥
शूलभङ्गक्रुधा क्षिप्रं मुष्टिमुद्यम्य राक्षसः।
दष्टौष्ठस्तिष्ठ तिष्ठेति गर्जन्राघवमाद्रवत्॥ १०४४॥
ततः प्रादुश्चकारोग्रमस्त्रं रामो विभावसोः।
निर्भिन्नहृदयो येन निपपात निशाचरः॥ १०४५॥

इति मकराक्षवधः॥ ३७॥

मकराक्षे हते कोपादिन्द्रजिद्विजयोर्जितः।
पुनरभ्याययौ युद्धभुवं रक्षोबलैर्वृतः॥ १०४६॥
आवृते राक्षसानीके वद्धप्लक्षैः प्लवंगमैः।
चकार तेषां संहारं क्रुद्धो रुद्र इवेन्द्रजित्॥ १०४७॥
एकेनैकेन बाणेन वानरान्नव सप्त च।
दारयन्प्रधने धन्वी यातुधानश्चचार सः॥ १०४८॥
गन्धमाध(द)नमुख्येषु नलनीलाङ्गदादिषु।
तद्बाणभिन्नदेहेषु विद्रुतेषु दिशो दश॥ १०४९॥
पुनः प्रविश्य नगरं पितुरादाय शासनम्।
पूर्वोक्तेनैव विधिना हुत्वा तूर्णं हुताशनम्॥ १०५०॥
अन्तर्हितः खमुत्पत्य रथी ब्रह्मास्त्रदुर्जयः।
प्रययाविन्द्रजिद्वीरो यत्र रामः सलक्ष्मणः॥ १०५१॥
स ववर्ष शरासारं तयोरुपरि दुःसहम्।
येन बाणमयो लोकः क्षणेनाभून्निरन्तरः॥ १०५२॥

रामसौमित्रिविशिखैरनासादितराक्षसैः ।
निर्वृते शस्त्रसंघाते विस्मयोऽभूद्दिवौकसाम् ॥ १०५३ ॥
ततो निर्विविरैर्घोरैः शरैः शिखरिभेदिभिः ।
इन्द्रजिद्भुजनिर्मुक्तैस्तावदृश्यौ बभूवतुः ॥ १०५४ ॥
सर्वभूतक्षयभयान्निवार्य करुणानिधिः ।
ब्रह्मास्त्रं नाम सौमित्रिं रामः सेहे शरोत्करम् ॥ १०५५ ॥
रथे मायामयीं सीतां कृत्वा कपटविग्रहः ।
अथेन्द्रजित्कृपाणेन कृपणां हन्तुमुद्ययौ ॥ १०५६ ॥
गिरिशृङ्गं समुद्यम्य तं मारुतिरभिद्रुतः ।
ददर्श मेरुसंभ्रान्तस्तत्सीतावधवैशसम् ॥ १०५७ ॥
घोरं नृशंस पापिष्ठ विषमं कर्म मा कृथाः ।
इति ब्रुवाणो हनुमान्साश्रुनेत्रस्तमाद्रवत् ॥ १०५८ ॥
सानुगं मारुतसुतं कोपादावार्य सायकैः ।
खड्गेन हत्वा साक्रन्दां सीतां चिक्षेप राक्षसः ॥ १०५९ ॥
इति मायासीतावधः ॥ ३८ ॥
तद्दृष्ट्वा मलिनं कर्म मारुतिः पिशिताशिनः ।
उत्ससर्ज जवात्प्राज्यभुजः शैलोपमां शिलाम् ॥ १०६० ॥
तां दृष्ट्वेन्द्रजितः सूतो रथं वश्यतुरङ्गिणम् ।
हित्वा दूरापसारेण व्यक्तां चक्रे महाशिलाम् ॥ १०६१ ॥
सा दुराशेव विपुला शिला निष्फलतां गता ।
भूमिं भित्त्वासिवेगेन गुर्वी पातालमाविशत् ॥ १०६२ ॥
क्रोधशोकाभिभूतानां हरीणां सह राक्षसैः ।
शरीरनिरपेक्षाणां घोरं युद्धमवर्तत ॥ १०६३ ॥
ततो निकुम्भिलां गत्वा होमं कर्तुं प्रचक्रमे ।
महारम्भेण विधिना विजयायेन्द्रजिद्द्विषाम् ॥ १०६४ ॥
प्रजज्वालानलस्तस्य यागे मन्त्राभिसंस्कृतः ।
दैत्यशोणितसंसिक्तस्फुरदिन्द्रायुधद्युतिः ॥ १०६५ ॥

सर्वात्मना सन्निविष्टान्प्राणत्यागकृतक्षणान्।
वध्यमानान्कपिवरानुवाच पवनात्मजः॥ १०६६॥
उत्सृज्य राक्षसभयं नियतध्वं प्लवङ्गमाः।
यदर्थमयमुद्योगः सैव सीता हता सती॥ १०६७॥
निवेद्य वृत्तं रामाय वयं भाग्यतिरस्कृताः।
यथोचितं करिष्यामः स यत्पूर्वं करिष्यति॥ १०६८॥
इत्युक्त्वा महतीं सेनां विनिवर्त्य शनैः कपिः।
शोकाभितप्तः प्रययौ सानुगो यत्र राघवः॥ १०६९॥
साहाय्ये रघुनाथेन विसृष्टं बहुभिर्बलैः।
दृष्ट्वा पुरः समायान्तं जाम्बवन्तं सहानुगः॥ १०७०॥
तेनैव सह संप्राप स रामं साश्रुलोचनः।
वाग्वज्रपाते स क्षिप्रं नैव स प्रतिभोऽभवत्॥ १०७१॥
वृत्तं कपिबलैर्युद्धं श्रमश्वासप्रयासितैः।
दृष्ट्वा मारुतिमायान्तं राघवः सादरोऽभवत्॥ १०७२॥
तमुवाच ततो धैर्यं विहाय हरिपुंगवः।
दुर्जनेनेव शोकेन महता मुखरीकृतः॥ १०७३॥
तमसामास्पदीभूतस्त्यक्तधैर्योचितस्थितिः।
त्वामहं दुःसहं देव विज्ञापयितुमुद्यतः॥ १०७४॥
संहारसारे संसारे ते धन्याः सुखभागिनः।
अदृष्ट्वैव क्षयं यान्ति दुःखं प्रियजनस्य ये॥ १०७५॥
हता शक्रजिता सीता क्रोशन्ती करुणस्वना।
विनष्टचेष्टैरस्माभिर्नृशंसैरवलोकिता॥ १०७६॥
इति श्रुत्वैव सहसा मोहेन महता हतः।
पपात भूमौ काकुत्स्थः स्रस्तबाणशरासनः॥ १०७७॥
तं परिष्वज्य पतितं भुजाभ्यामथ लक्ष्मणः।
उवाच निष्फलः क्लेशः समन्तात्खिन्नमानसः॥ १०७८॥

अहो बत सदाचारे लोको मिथ्यैव सादरः ।
पैण्डस्येव सुतो यस्य कश्चिन्नास्ति फलोदयः ॥ १०७९ ॥
धिग्धर्मं यददुःखार्हा धार्मिष्ठा दुःखभागिनः ।
नमः पापाय संसक्तो यस्मिन्स्यात्युदयो जनः ॥ १०८० ॥
आर्येण धर्मो मिथ्यैव क्लेशाय परिरक्षितः ।
किं तेन कृच्छ्रकालेषु यो न रक्षति धीरताम् ॥ १०८१ ॥
धर्मानुरोधादार्येण त्यक्तं राज्यं पितुर्गिरा ।
विनष्टो यत्परित्यागादर्थोऽनर्थनिवर्हणः ॥ १०८२ ॥
विपन्नार्थस्य सहसा कुलीनस्यार्यचेतसः ।
मन्दाग्नेरिव वर्धन्त दोषाः शोषाय केवलम् ॥ १०८३ ॥
निवर्तन्ते दरिद्राणां प्रवर्तन्ते ससंपदाम् ।
धनाधीनाः क्रियाः सर्वा वेश्या इव शरीरिणाम् ॥ १०८४ ॥
अन्धः संदर्शनस्येव वधिरः श्रवणस्य वा ।
स्मृत्वा क्रियाकलापस्य दरिद्रो दीर्यते शुचा ॥ १०८५ ॥
शीलं तेषां कुलं तेषां तेषामेव प्रगल्भता ।
भूतिर्विभूषणं येषां गजेन्द्राणामिवोज्ज्वला ॥ १०८६ ॥
यशस्तेजः श्रुतं रूपं वयः प्रज्ञा कुलं धनम् ।
धनेन लभ्यते सर्वं धनमेतैर्न लभ्यते ॥ १०८७ ॥
बालकः केलिलीलासु संभोगावसरे युवा ।
वृद्धः संमानपूजासु धनवानेव नापरः ॥ १०८८ ॥
लज्जया निर्धनो बन्धुः पर इत्युच्यते जनैः ।
परैः परोऽभिमानार्थमीश्वरो बन्धुरुच्यते ॥ १०८९ ॥
मित्राणां बान्धवानां च न ते जीवन्ति जन्तवः ।
वित्तं न विद्यते येषां जीवितस्यापि जीवितम् ॥ १०९० ॥
धर्मकामौ हतौ तेन येन नोपार्जितं धनम् ।
छिन्नं पुष्पफलं तेन मूलं येन हतं तरोः ॥ १०९१ ॥

१. 'पण्डस्येव' शा०. २. 'स्तेषां' शा०.

जनास्त्यजन्ति स्वजनं नोन्मत्तं न च कुष्ठिनम्।
धनहीनो प्रयत्नेन पुत्रेण त्यज्यते पिता ॥ १०९२ ॥
सादरो न दरिद्रस्य जनः सर्वगुणैरपि।
शिल्पिनश्छिन्नहस्तस्य स्नानशीलव्रतैरिव ॥ १०९३ ॥
राज्यं संत्यजता त्यक्तं सर्वमार्येण सर्वदा।
सीताहरणदुःखस्य वनवासो हि कारणम् ॥ १०९४ ॥
उत्तिष्ठ रघुशार्दूल पश्य पौलस्त्यजं मया।
निहतं युधि दर्पान्धं लङ्कां दग्धां च सायकैः ॥ १०९५ ॥
लक्ष्मणेनेत्यभिहिते युद्धासक्तो विभीषणः।
संघातं विपुलं दृष्ट्वा शनैस्तं देशमाययौ ॥ १०९६ ॥
स विलोक्य स्थितं रामं भूतलाखण्डलं भुवि।
सिच्यमानं हरिवरैर्जलैरुत्पलगन्धिभिः ॥ १०९७ ॥
किमेतदिति तान्पृष्ट्वा श्रुत्वा सीतां तथा मृताम्।
धिगेतदिति सासूयमवदत्सस्मितावननः ॥ १०९८ ॥
देवोत्तिष्ठ न तां हन्ति कश्चिज्जीवति रावणे।
तस्य तत्प्रणये वाञ्छा न हतस्यापि शाम्यति ॥ १०९९ ॥
इयं तु महती चिन्ता संप्रवृत्तो यदिन्द्रजित्।
निकुम्भिलायां हुत्वाग्निं घोरे संहारकर्मणि ॥ ११०० ॥
न तं समाप्तकर्माणं जेतुं शक्ताः सुरासुराः।
कर्मण्यपूर्णे तस्याशु क्रियतामुद्यमो वधे ॥ ११०१ ॥
तूर्णं प्रयातु तं हन्तुं सौमित्रिस्तव शासनात्।
हता मायामयी सीता शोकं मिथ्यैव मा कृथाः ॥ ११०२ ॥
अपूर्णे यागसमये यस्त्वामेष्यति युद्धधीः।
वध्योऽसि तस्येत्यवदत्पूर्वमिन्द्रजितं विधिः ॥ ११०३ ॥
विभीषणस्येति वचः सत्यार्थं रघुनन्दनः।
निशम्य शान्तसंतापस्तथेति प्रत्यपद्यत ॥ ११०४ ॥

इति रामाश्वासनम् ॥ ३९ ॥

ततः प्लवगसैन्येन वृतो राघवशासनात्।
प्रययौ लक्ष्मणो योद्धुं संनद्धो रावणात्मजम्॥ ११०५॥
गत्वा विभीषणादिष्टवर्त्मना स निकुम्भिलाम्।
ददर्श राक्षसव्यूहं मेघसंघातसंनिभम्॥ ११०६॥
तत्ततो राक्षसानीकं विभीषणगिरा शरैः।
विदार्येन्द्रजितश्चक्रे स सुदृश्यां क्रतुक्षितिम्॥ ११०७॥
दारितं लक्ष्मणशरैर्वानरैश्च प्रहारिभिः।
स्वसैन्यमिन्द्रजिद्दृष्ट्वा यागमुत्सृज्य निर्ययौ॥ ११०८॥
असमाप्ते मखविधौ निर्गते रावणात्मजे।
बभूव समरे घोरे सैन्ययोः सुभटक्षयः॥ ११०९॥
विचित्ररत्नकवचः किरीटी रत्नकुण्डलः।
रथेन घोरघोषेण मारुतिं समुपाद्रवत्॥ १११०॥
दृष्ट्वेन्द्रजितमायातं विभीषणनिवेदितम्।
आकृष्टचापस्तस्याशु सौमित्रिः पुरतोऽभवत्॥ ११११॥
लक्ष्मणस्यान्तिके दृष्ट्वा धीसहायं विभीषणम्।
कोपादुवाच सासूय इन्द्रजित्प्रज्वलन्निव॥ १११२॥
कुलमानसदाचारभ्रष्टः शोच्योऽसि बालिश।
स्वजनं यत्परित्यज्य शत्रूणां भृत्यतां गतः॥ १११३॥
मानावमाननिर्यन्त्रस्नेहभूः क्व निजो जनः।
क्व परः प्रस्तुतोदारपूजाशैथिल्यशल्यकृत्॥ १११४॥
न दुर्जनोऽपि स्वजनस्त्याज्योऽभिजनगौरवात्।
सुसेवितोऽपि सुजनो न स्यात्किल परः सदा॥ १११५॥
स्निग्धं परिचितं त्यक्त्वा प्रयान्ति चपलाः परम्।
परस्य भाजने मृष्टं जनो जानाति भोजनम्॥ १११६॥
स्वजनं यः परित्यज्य प्रयाति निरपत्रपः।
परस्य स कथं मित्रं भविष्यति निजो जनः॥ १११७॥

धिक्त्वां सत्त्वपरिभ्रष्टं शठं नीचानुकारिणम् ।
दास्येऽभिरमते बुद्धिर्यस्योत्सृष्टनिजश्रियः ॥ १११८ ॥
त्वत्संदर्शनसंक्रान्तपातकस्यास्य चक्षुषः ।
जायते नैव वैमल्यं सत्यं वर्षशतैरपि ॥ १११९ ॥
इत्युक्ते मेघनादेन वचः श्रुत्वा विभीषणः ।
उवाच विपुलाक्षेपकोपस्मितसिताननः ॥ ११२० ॥
अहो स्वजनवात्सल्याद्गुणवानिव भाषसे ।
पापभीत्या मयेत्युक्तो दुराचारः पिता तव ॥ ११२१ ॥
क्षुद्रश्च द्वेषवांस्त्याज्यः स्वजनोऽपि विपश्चिता ।
बान्धवं सहजं नास्ति साधवो बान्धवः सताम् ॥ ११२२ ॥
त्याज्य एव मम भ्राता मह्यं पापं न रोचते ।
यो यद्वृत्तः स तद्वृत्ते रमते नात्र संशयः ॥ ११२३ ॥
उपालम्भो ममैकस्य मिथ्यैव क्रियते त्वया ।
जीवितेन निजेनापि यूयं व्यक्ताः प्रमादिनः ॥ ११२४ ॥
निकुम्भिलावने हुत्वा न्यग्रोधान्तर्हितेन यत् ।
युद्धं कृतं त्वया पाप चौरकर्म तदुच्यते ॥ ११२५ ॥
अधुना लक्ष्मणशरैः शस्त्रैरिव दिवौकसाम् ।
स्वदुर्नयैरिवात्युग्रैर्हतो मन्तासि मे वचः ॥ ११२६ ॥
विभीषणवचः श्रुत्वा कोपाद्दशमुखात्मजः ।
उपसैन्यं च सौमित्रिं शरासारैरपूरयत् ॥ ११२७ ॥
लक्ष्मणोऽपि शरैस्तस्य प्रतिजग्राह सायकान् ।
ज्याकर्षाशनिनिर्घोषघोषैरापूरयन्दिशः ॥ ११२८ ॥
लेभे तं शब्दमाकर्ण्य वैवर्ण्यं रावणात्मजः ।
आरूढमेव जानाति शूरः शूरं हि यो यथा ॥ ११२९ ॥
शब्दादुद्विजते शत्रोः शूर एव पराङ्मुखः ।
पूर्वं पलायनमतेर्निर्लज्जस्य भयं कुतः ॥ ११३० ॥

तं विवर्णमुखं दृष्ट्वा हृदयज्ञो विभीषणः ।
उवाच लक्ष्मणं भग्नः शत्रुस्ते वधमर्हति ॥ ११३१ ॥
ततः कार्मुकमाकृष्य सौमित्रिः शत्रुसूदनः ।
रजनीचरराजस्य पुत्रं पत्रिमयं व्यधात् ॥ ११३२ ॥
स लक्ष्मणशरैर्विद्धः संज्ञां कृच्छ्रेण मीलितः ।
समासाद्य निरालोकाः कुर्वन्बाणैर्दिशो दश ॥ ११३३ ॥
हनुमत्प्रमुखान्वीरान्विदार्य सविभीषणान् ।
लक्ष्मणस्येन्द्रजिच्चक्रे स मृगस्येव पञ्जरम् ॥ ११३४ ॥
तस्य हेममयं दीप्तं कवचं राघवानुजः ।
चिच्छेद विशिखैर्मूर्तं प्रतापमिव रक्षसः ॥ ११३५ ॥
स विध्वस्ततनुत्राणः स्रवद्रुधिरनिर्झरः ।
उदधेर्विदधे रक्ततटिनीनवसंगमम् ॥ ११३६ ॥
स तीव्रक्रोधविधुरः प्रवृद्धचरितो रणे ।
चकार कपिसंहारं निजदोर्दण्डतोमरैः ॥ ११३७ ॥
ततो विभीषणगिरा चक्रुस्तीव्रपराक्रमाः ।
जाम्बवन्मारुतिमुखाः संक्षयं रक्षसां क्षणात् ॥ ११३८ ॥
सोत्साहान्विपुलोत्साहस्तानुवाच विभीषणः ।
विलोक्येन्द्रजितं युद्धे वर्धमानमिवानलः ॥ ११३९ ॥
हन्यतां राक्षसबलं भवद्भिर्बलवत्तरैः ।
अल्पावशेषे कार्येऽस्मिन्विलम्बो नात्र वः क्षमः ॥ ११४० ॥
स्वयं निसूदयाम्येष समरे भ्रातुरात्मजम् ।
राघवार्थं ममाकार्यं लोके किंचिन्न विद्यते ॥ ११४१ ॥
उपेक्षितो दहत्येष क्षणेनैव प्लवंगमान् ।
स्वहस्तेन वधस्तस्य स्वयं मे जायते घृणा ॥ ११४२ ॥
इत्युक्त्वा राक्षसचमूं राक्षसेन्द्रानुजः स्वयम् ।
जघान घननिर्घोषैर्बाणैरशनिगौरवैः ॥ ११४३ ॥

तं शरैरशनिस्पर्शैः शीघ्रं संपूर्य शक्रजित् ।
सायकाचितसर्वाङ्गं विदधे लक्ष्मणं पुनः ॥ ११४४ ॥
तयोरत्यद्भुतं युद्धं जम्भारिप्रमुखाः सुराः ।
द्रष्टुं समाययुः सर्वे विमानोद्भासिताम्बराः ॥ ११४५ ॥
तयोराधानसंधानलक्ष्यलाघवसौष्ठवे ।
ददर्श नान्तरं कश्चिद्वैचित्र्ये कृतहस्तयोः ॥ ११४६ ॥
त्रस्तेषु सुरसिद्धर्षिसंघेषु पिहिते रवौ ।
तमसा संवृताः प्रापुः प्रलयोपद्रवं दिशः ॥ ११४७ ॥
ततः शरेण सौमित्रिः सूतं तस्य न्यपातयत् ।
विमुक्तसंयमाञ्जघ्नुः प्लवगाश्च तुरङ्गमान् ॥ ११४८ ॥
विरथो रावणसुतः शरैराच्छाद्य लक्ष्मणम् ।
विभीषणवधायोग्रं याम्यमस्त्रमथासृजत् ॥ ११४९ ॥
कुबेरास्त्रेण सौमित्रिस्तदस्त्रं शत्रुदारणम् ।
अभिहत्याददे रौद्रं महास्त्रं वज्रिणार्पितम् ॥ ११५० ॥
सत्यधर्मास्पदं रामो यदि सत्येन तेन मे ।
अस्त्रं प्रयातु साफल्यमित्युक्त्वा समसर्जयत् ॥ ११५१ ॥
तेनोत्कृत्तं महास्त्रेण पपातेन्द्रजितः शिरः ।
लडद्विम्बितमार्तण्डमण्डलोच्चण्डमण्डलम् ॥ ११५२ ॥

इतीन्द्रजिद्वधः ॥ ४० ॥

प्रतापेन प्रभावेण महत्त्वेन च विश्रुतः ।
तेजस्विषु सहस्रांशुर्वरो यश्च सुरारिषु ॥ ११५३ ॥
तस्मिञ्जगत्त्रयीशत्रौ वीरे सौमित्रिणा हते ।
प्रवृत्तस्त्रिदशैस्तूर्णं बभूव भुवनोत्सवः ॥ ११५४ ॥
हरीणां हर्षमत्तानां प्रभग्नानां च रक्षसाम् ।
तदभूद्भूधरव्यापी निस्वनो लोमहर्षणः ॥ ११५५ ॥
विभीषणप्रभृतिभिर्मारुतिप्रमुखैः सह ।
हतामित्रो ययौ द्रष्टुं सौमित्रिस्तूर्णमग्रजम् ॥ ११५६ ॥

हतमिन्द्रजितं श्रुत्वा निकृत्ताङ्गं च लक्ष्मणम् ।
दृष्ट्वा बभूव हृष्टश्च व्यथितश्च स राघवः ॥ ११५७ ॥
स भ्रातरं परिष्वज्य धृत्वाङ्के साश्रुलोचनः ।
पस्पर्शास्य तनुं शल्यसंहतस्रुतशोणितम् ॥ ११५८ ॥
शासनादथ रामस्य सुषेणः कपियूथपः ।
विशल्यकरणीं दिव्यामाजहार महौषधिम् ॥ ११५९ ॥
तां लक्ष्मणः समाघ्राय विशल्यो निर्व्रणः क्षणात् ।
बभूव बलवान्स्वस्थः काकुत्स्थेनाभिपूजितः ॥ ११६० ॥
अत्रान्तरे दशमुखः श्रुत्वा पुत्रं निपातितम् ।
न ददर्श न शुश्राव छिन्नशीर्ष इव क्षणम् ॥ ११६१ ॥
स लब्धसंज्ञः शनकैः शुशोचाकुलितेन्द्रियः ।
शोकक्रोधाग्निसंतप्तैर्दिशः श्वासैर्दहन्निव ॥ ११६२ ॥
हा शक्रविजयोदारयशःकुसुममाधव ।
अस्मिन्व्यसनकाले मां क्व परित्यज्य गच्छसि ॥ ११६३ ॥
अहो बत तवेन्द्रस्य भयदीक्षागुरुर्गुरुः ।
भुजस्तम्भः कथं नाम लक्ष्मणे लघुतां गतः ॥ ११६४ ॥
शिरसामुन्नतिः श्लाघ्या द्वाभ्यामेव ममाभवत् ।
वत्स त्वया च पुत्रेण वरेण च पिनाकिनः ॥ ११६५ ॥
अधुना मम का शोभा राज्येऽस्मिन्का च जीविते ।
कुलचूडामणिर्यस्य हतः पुत्रः सुरेन्द्रजित् ॥ ११६६ ॥
हा हा पुत्र क्व यातोऽसि दर्शय क्षणमाननम् ।
संभावय हतं चेतो नैराश्यं न यथा भवेत् ॥ ११६७ ॥
इति प्रलापिनस्तस्य शोकः पुत्रवियोगजः ।
ययौ मृतस्थान इव प्रौढेन क्रोधवह्निना ॥ ११६८ ॥
तस्य स्रोतोमुखैः सर्वैरमर्षदहनोद्भवः ।
जगत्क्षयक्षमाश्चित्रं घोरा निश्चेरुरर्चिषः ॥ ११६९ ॥

स मूलकारणं मत्वा सीतामिन्द्रजितो वधे।
आकृष्टखङ्गस्तां हन्तुमशोकवनिकां ययौ ॥ ११७० ॥
करालकरवालोग्रं तं दृष्ट्वा क्रुद्धमागतम्।
दशाननसहस्राणि दिक्षु सीता व्यलोकयत् ॥ ११७१ ॥
सीतां व्यवसितुं हन्तुं रावणं क्रोधमूर्छितम्।
उवाच दोर्भ्यामाकृष्य सुपार्श्वो वृद्धराक्षसः ॥ ११७२ ॥
अवदाततरे जन्म कुले कमलजन्मनः।
विश्रुतं चरितं दिक्षु त्रिजगद्विजयोर्जितम् ॥ ११७३ ॥
श्रुतिः श्रुतवती शान्ता मतिर्मानोन्नतं शिरः।
यथा तव तथान्यस्य कस्य लोके विलोक्यते ॥ ११७४ ॥
स त्वं सत्त्ववतामग्र्यः स्त्रीवधे कथमुद्यतः।
द्विजोत्तमः सुरापाने श्रोत्रियः श्रुतवानिव ॥ ११७५ ॥
श्रुतं विवेकः कारुण्यं दमः साधुसमागमः।
मोहप्रपञ्चे पञ्चैते पापसंचयवञ्चकाः ॥ ११७६ ॥
त्यजैतामबलां बालां मा कृथाः कीर्तिविप्लवम्।
हतो यैरिन्द्रजिद्वीरः कोपस्तेषु निपात्यताम् ॥ ११७७ ॥
सुपार्श्वेनेत्यभिहिते विनिवृत्य दशाननः।
आदिदेश निजानीकं सज्जः संग्रामकर्मणि ॥ ११७८ ॥
ततो विनिर्ययुर्घोरा राक्षसा युद्धदुर्मदाः।
मेघध्वस्ता इव दिशः कुर्वन्तो गजवाजिभिः ॥ ११७९ ॥
उदिते तिग्मकिरणे युद्धं तेषां प्लवंगमैः।
अवर्तताश्मशस्त्रास्त्रनिर्घर्षामलपिङ्गलम् ॥ ११८० ॥
शतं शतं वानराणामेकैकस्य तु रक्षसः।
अदृश्यताग्रे संसक्तनखदन्तप्रहारिणाम् ॥ ११८१ ॥
ततः प्रविततं दिक्षु राक्षसक्षयदीक्षितम्।
चुकूज चापं रामस्य विरामस्यास्य संपदाम् ॥ ११८२ ॥

१. 'मत्ता' शा०.

अर्धोद्धृतैश्च कृष्टैश्च निष्पतद्भिश्च निर्गतैः ।
रामबाणच्युतैर्बाणैर्नादृश्यन्त दिशो दश ॥ ११८३ ॥
हतो हस्ती च्युतः सप्तिरयमुन्मथितो रथः ।
इत्यभूद्विपुलः शब्दो राक्षसानामितस्ततः ॥ ११८४ ॥
ते शराशनिनिर्भिन्ना दिवि दिक्षु महीतले ।
क्षणं रामसहस्राणि ददृशुर्भयविद्रुताः ॥ ११८५ ॥
नादृश्यत रणे रामश्चक्रं दीप्तमदृश्यत ।
हेमपृष्ठस्य धनुषो दिक्षु भ्रान्तस्य केवलम् ॥ ११८६ ॥
तेन संमोहनास्त्रेण मोहितास्ते निशाचराः ।
जघ्नुः परस्परं शक्तिशूलप्रासासिपट्टिशैः ॥ ११८७ ॥
छिन्नोरुबाहुचरणैः स्तब्धवक्रशिरोधरैः ।
निःसंचाराभवद्भूमिः पतितैः पिशिताशिभिः ॥ ११८८ ॥
हतेषु रक्षोलक्षेषु भग्नेषु भुजशालिषु ।
हतशेषा ययुस्तूर्णं यत्रास्ते दशकन्धरः ॥ ११८९ ॥

इति रामास्त्रयुद्धम् ॥ ४१ ॥

ततो निहतनाथानां क्षणदाचरयोषिताम् ।
उदभूच्छोकतप्तानां प्रलापः करुणस्वनः ॥ ११९० ॥
अहो बत हृता सीता शिखेवाग्नेर्मनस्विनी ।
रक्षसां राक्षसेन्द्रेण क्षयायैव प्रमादिनी ॥ ११९१ ॥
को हि रामस्य समरे शक्तः सोढुं शराशनिम् ।
याता नक्तंचरा यस्य प्रतापाग्निपतङ्गताम् ॥ ११९२ ॥
कष्टं प्राणप्रवासाय कृतं रामाय विप्रियम् ।
विराधखरमारीचप्रमुखैः क्षणदाचरैः ॥ ११९३ ॥
न केनचिदयं रामः कथितो रावणस्य किम् ।
यस्य ज्यातलनिर्घोषैर्गीयते धनुषा यशः ॥ ११९४ ॥
केतुतां वालिकङ्कालं कोपकापालिकस्य यः ।
निनाय स कथं रामो राक्षसेन्द्रेण न श्रुतः ॥ ११९५ ॥

सेतुबन्धानुबन्धेन लङ्कासंरोधबन्धुना।
कुम्भकर्णवधेनापि न प्रबुद्धो दशाननः॥ ११९६॥
शिरश्छेदोपमेनापि वधेनेन्द्रजितः परम्।
लाभोऽयं यदि पौलस्त्य शेषं युद्धं समाप्यते॥ ११९७॥
इयं रामशरैर्लङ्का प्राकाराजालकेलिभिः।
स्पष्टीकृता कृतान्तस्य दुर्गमार्गनिराकुला॥ ११९८॥
इत्युच्चचार विपुलप्रलापो जननिस्वनः।
रामाप्रलापदग्धानां राक्षसानां गृहे गृहे॥ ११९९॥
क्रुद्धस्तं शब्दमाकर्ण्य सामात्यो राक्षसेश्वरः।
निर्ययौ रथसंघातरेणुग्रस्तनभस्तलः॥ १२००॥
ततो बभूव भूतानां भयकृद्भूमिकम्पनः।
गम्भीरारम्भसंरम्भो विमर्दः कपिरक्षसाम्॥ १२०१॥
रणे रावणनाराचनिचयैरायतोज्झितैः।
वज्राहता इव नगाः पेतुर्वानरयूथपाः॥ १२०२॥
यत्र यत्र प्रतापोग्रपौलस्त्यास्ताः शिलीमुखाः।
तत्र तत्रोदभून्नादः प्रधानवधसूचनः॥ १२०३॥
दशग्रीवभुजोत्सृष्टशरकृत्तभुजाननैः।
वानरैः पतितैर्भूमिरभूमिर्वाजिनामभूत्॥ १२०४॥
लङ्केश्वरशरासारदारिते हरिमण्डले।
ददर्श राघवौ दूरादाकृष्टोरुशरासनौ॥ १२०५॥
स तौ सावेगमभ्येत्य मण्डलीकृतकार्मुकः।
चकार शरनीहारैश्चन्द्रसूर्याविवावृतौ॥ १२०६॥
क्षिप्तां राक्षसराजेन दीप्तां बाणपरम्पराम्।
चिच्छेद राघवः क्षिप्रं चन्द्रार्धवदनैः शरैः॥ १२०७॥
घोरे व्यतिकरे तस्मिन्सुभटप्राणहारिणि।
जघान रावणामात्यौ विरूपाक्षमहामुखौ॥ १२०८॥

सुग्रीवो विग्रहोदग्रं महानादं तथाङ्गदः ।
तत्कोपादथ पौलस्त्यः स्वस्ति हर्ता दिवौकसाम् ।
नाराचमालां चिक्षेप ललाटे रघुभूपतेः ॥ १२०९ ॥
स रत्नमुकुटोद्देशे संहतासक्तया तया ।
नीलोत्पलस्रजा क्षिप्रं कृतोत्तंस इवावभौ ॥ १२१० ॥
रौद्रं ततोऽस्त्रं रामेण क्षिप्तं रक्षःक्षयक्षमम् ।
रुद्रदत्तवरे भङ्गं ययौ रावणवर्मनि ॥ १२११ ॥
असुरास्त्रचितैर्बाणैर्व्याघ्रसिंहगजाननैः ।
दिशः संछाद्य पौलस्त्यश्चक्रे त्रैलोक्यसंभ्रमम् ॥ १२१२ ॥
काकुत्स्थः पावकास्त्रेण घोरं हत्वा महासुरम् ।
दिशो वितिमिराः सर्वाश्चकार तरणिप्रभाः ॥ १२१३ ॥
रावणास्त्रं ततो रौद्रमयं मायाविनिर्मितम् ।
जघानायुधसंबाधं गन्धर्वास्त्रेण राघवः ॥ १२१४ ॥
दारितेषु महास्त्रेषु क्रोधान्धो दशकन्धरः ।
रामं प्रच्छाद्य विशिखैर्जगर्ज घनसंनिभः ॥ १२१५ ॥
सायकैः सारथेर्वक्रं ध्वजचक्रं च लक्ष्मणः ।
चापं च राक्षसेन्द्रस्य चिच्छेदाद्भुतविक्रमः ॥ १२१६ ॥
ततो विभीषणोऽभ्येत्य मेघसंघातसंनिभम् ।
उन्ममाथ रथं भ्रातुः शरैर्भग्नतुरङ्गमम् ॥ १२१७ ॥
स हताश्वादथोत्प्लुत्य रथात्प्रव्यथितः क्रुधा ।
विभीषणाय चिक्षेप शक्तिं शक्तां रिपुक्षये ॥ १२१८ ॥
वेगसूत्कारिणी घोरा सनिश्वासेव पन्नगी ।
सा पपात क्षितितले कृता रामेषुभिस्त्रिभिः ॥ १२१९ ॥
तं शक्तिभङ्गकुपितं विभीषणवधोद्यतम् ।
प्रतिजग्राह सौमित्रिः पत्रिभिः शत्रुभेदिभिः ॥ १२२० ॥
शोणपट्टोपमज्वालामष्टघण्टारवोत्कटाम् ।
परां मयकृतां शक्तिं लक्ष्मणायोत्ससर्ज सः ॥ १२२१ ॥

सा तस्य हृदयं भित्त्वा त्रिदशत्रासकारिणी ।
विवेश नैव वसुधां वसुधामप्रमाथिनी ॥ १२२२ ॥
शक्तिस्यूतं निपतितं लक्ष्मणं वीक्ष्य राघवः ।
बभ्राम मूर्छितः क्षिप्रमन्तरे क्रोधशोकयोः ॥ १२२३ ॥
समाश्रुलोचनः कोपाद्विग्रहे गिरिविग्रहम् ।
शरैर्निर्विवरैश्चक्रे दुर्लक्षं राक्षसेश्वरम् ॥ १२२४ ॥
बाणपातादपावृत्ते भग्नशौर्ये दशानने ।
विसंज्ञं भ्रातरं रामः शुशोच भ्रातृवत्सलः ॥ १२२५ ॥
ततः सुषेणनिर्दिष्टं हनुमान्गरुडोपमः ।
आनिनायौषधिगिरिं मन्थाचलमिवाच्युतः ॥ १२२६ ॥
सुषेणेनोद्धृतां तस्मात्तूर्णं संजीवनौषधिम् ।
आघ्राय नासायोगेन लक्ष्मणः स्वास्थ्यमाप्तवान् ॥ १२२७ ॥
इति लक्ष्मणविशल्यकरणम् ॥ ४१ ॥
अत्रान्तरे समारुह्य घोरं मायाविनिर्मितम् ।
रथं पृथुहयोदग्रं दशग्रीवः समाययौ ॥ १२२८ ॥
क्रूरक्रोधोद्धतं युद्धं ततः पुनरवर्तत ।
काकुत्स्थस्य क्षितिस्थस्य रथस्थस्य च रक्षसः ॥ १२२९ ॥
तयोः स्फारशरासारमेघयोर्युद्ध्यमानयोः ।
नैतदेकरथं तुल्यं युद्धमित्यूचिरे सुराः ॥ १२३० ॥
ततः कान्तस्वरोदाररत्नाभरणभासुरः ।
सहस्रसंख्यैस्तुरगैः संयुक्तो वल्गुवल्गिभिः ॥ १२३१ ॥
विलोलकिंकिणीजालवैजयन्तीध्वजोर्जितः ।
अदृश्यतोग्रनिर्घोषो मातलिप्रेरितो रथः ॥ १२३२ ॥
वातोद्यतपताकेन स्वच्छच्छत्रापहासिना ।
अवतीर्याम्बरात्तेन रथेन सुरसारथिः ॥ १२३३ ॥
उवाच प्रणतो रामं मुकुटावर्जिताञ्जलिः ।
दत्तकान्तिच्छलेनास्य जयोष्णीषमिवार्पयन् ॥ १२३४ ॥

एष ते त्रिजगज्जेतुः शत्रुवित्रासनिस्वनः ।
दीप्तः सचापकवचः सर्वायुधविभूषितः ॥ १२३५ ॥
विसृष्टः सुरराजेन दशास्यदलनक्षमः ।
संग्रामाश्चर्यचर्यासु रथः पूर्णमनोरथः ॥ १२३६ ॥
इत्युक्ते शक्रसूतेन संपूज्य रघुनन्दनः ।
आरुरोह रथं दिव्यं जयं मूर्तमिवागतम् ॥ १२३७ ॥
ततो बभूव दिव्यास्त्रप्रभावोद्भ्रान्तखेचरम् ।
रामरावणयोर्युद्धं संशयायासितामरम् ॥ १२३८ ॥
नागास्त्रं रावणेनात्तं सुपर्णास्त्रेण राघवः ।
निवार्य विदधे दिक्षु पक्षाक्षिप्तमहानिलम् ॥ १२३९ ॥
ततः शरसहस्रेण रामं सरथसारथिम् ।
अभिपूर्योत्ससर्जोग्रां रक्षः शस्त्रपरम्पराम् ॥ १२४० ॥
शरनिर्भिन्नसर्वाङ्गे मूर्छिते राघवे क्षणम् ।
व्यथां लक्ष्मणसुग्रीवविभीषणमुखा ययुः ॥ १२४१ ॥
दशास्ये त्रिंशतिभुजे वर्द्धमानपराक्रमे ।
प्राजापत्ये बुधेनैत्य नक्षत्रे परिपीडिते ॥ १२४२ ॥
अङ्गारकेन ज्येष्ठाख्ये राघवर्क्षे निपीडिते ।
साचला चञ्चला चोर्वी क्षुब्धाब्धिध्वाननादिनी ॥ १२४३ ॥
चन्द्रवर्णेन सूर्येन रेणुपूर्णेन वायुना ।
स निर्घातेन भूतानां घोरमाविरभूद्भयम् ॥ १२४४ ॥
राघवोऽथ समाश्वस्य कोपरक्तान्तलोचनः ।
चकर्ष कार्मुकं येन विवर्णो रावणोऽभवत् ॥ १२४५ ॥
रामबाणवृते लोके पौलस्त्यः शूलमुत्कटम् ।
अयं न भवसीत्युक्त्वा रामाय प्राहिणोत्क्रुधा ॥ १२४६ ॥
शूलध्वंसाय रामेण मुक्ता शरपरम्परा ।
तदग्नि(?)देशमासाद्य भस्मसादभवत्क्षणात् ॥ १२४७ ॥

ततः सुरपतेः शक्तिर्दीप्ता रामभुजोर्जिता ।
पीता बभञ्ज सावेगं शूलं शूलमिवौषधिः ॥ १२४८ ॥
शूलविध्वंसकुपितं रावणं बाणवर्षिणम् ।
उवाच राघवः कोपस्मितप्रस्फुरिताधरः ॥ १२४९ ॥
दिष्ट्यावबोधितः पाप दिवारात्रं विचिन्तितः ।
चक्षुषोर्गोचरं यातस्त्वमद्य सुचिरेण नः ॥ १२५० ॥
वैदेही भिक्षुरूपेण विजने कानने त्वया ।
हृता हेममृगव्याजादहो वीरव्रतं कृतम् ॥ १२५१ ॥
परदारापहरणे व्रक्षशीलस्य दुर्मतेः ।
तवैतानि न लज्जन्ते वक्त्राणि न परस्परम् ॥ १२५२ ॥
समरे यदि वीरोऽसि तत्संदर्शय पौरुषम् ।
निर्जने हरणे स्त्रीणां स्वापिनाम (?) प्रगल्भते ॥ १२५३ ॥
बन्धुस्वजनमित्राणां शोच्याः शूलविनाकृताः ।
ऐश्वर्यं क्षणिकं येषु जलं भग्नघटेष्विव ॥ १२५४ ॥
इन्द्रजित्प्रमुखाः पुत्राः कुम्भकर्णादयोऽनुजाः ।
इयं विभूतिरात्मा च दुर्नयाग्नौ त्वया हुताः ॥ १२५५ ॥
धिक्त्वां परवधूचौरं क्षुद्रं क्षुद्रपथे स्थितम् ।
किं करोमि शरस्पर्शोऽप्येष मे त्वयि नोचितः ॥ १२५६ ॥
इत्युक्ते चण्डकोदण्डमण्डलोदरनिर्गतः ।
रामेषवस्तं विविशुस्तमः सूर्यकरा इव ॥ १२५७ ॥
शरनिर्भिन्नसर्वाङ्गस्तेजोविरहितः क्षणम् ।
बभूव गलितोत्साहः शिथिलो राक्षसेश्वरः ॥ १२५८ ॥
विवर्णवदनं दृष्ट्वा सारथिस्तं ससंभ्रमम् ।
अपसृत्य रथेनाशु जहार समराङ्गनात् ॥ १२५९ ॥
लब्धधैर्योऽथ पौलस्त्यो विलोक्यापसृतं रथम् ।
सूतं बभाषे भ्रूभङ्गधूमकोपानलाकुलः ॥ १२६० ॥

---

१. 'चापिता न' स्यात्.

अहो नु सुभृतेनापि स्नेहसस्मानवृत्तिना ।
सुभृत्येन त्वया सूत प्रभुभक्तिः प्रदर्शिता ॥ १२६१ ॥
मानिनो रणसक्तस्य मूर्ध्नि लज्जारजस्त्वया ।
क्षपिता शत्रुमध्ये मे किं नाह सुकृतं कृतम् ॥ १२६२ ॥
मिथ्यैव लज्जाजननी देहरक्षा मम त्वया ।
कृता परेषां हासाय मूर्खेणेव गुणस्तुतिः ॥ १२६३ ॥
नूनं शत्रुप्रयुक्तेन मानम्लानिरियं च मे ।
विहिता भवता युद्धे वीरवृत्तान्तसाक्षिणा ॥ १२६४ ॥
इति कोपेन सासूयं भाषमाणे दशानने ।
रथी सारथिना रक्ष्य इति सूतस्तमभ्यधात् ॥ १२६५ ॥
ततः प्रजविनाश्वेन रथेन घननादिना ।
रावणे पुनरायाते प्रादुरासीज्जनस्वनः ॥ १२६६ ॥
ऐन्द्रं धनुः समादाय रामे मेघ इवोद्यते ।
दुर्निमित्ता व्यदृश्यन्त रावणस्य रथं प्रति ॥ १२६७ ॥
प्रवृत्ते दारुणे युद्धे रामलङ्काधिनाथयोः ।
प्रेक्षकत्वं प्रयातेषु रक्षःसु प्लवगेषु च ॥ १२६८ ॥
क्रमेण वर्द्धमानेषु चित्रलाघवकर्मसु ।
रामचक्रे जये बुद्धिं मरणे च दशाननः ॥ १२६९ ॥
शत्रुध्वजं रावणेन क्षिप्ताश्छेत्तुं शिलीमुखाः ।
वृथा जग्मुस्तमप्राप्य दूता अप्रतिभा इव ॥ १२७० ॥
अथ रामशरोत्कृत्तः केतुर्नक्तंचरप्रभोः ।
पपातोत्पातसूर्यार्चिः प्रताप इव मूर्तिमान् ॥ १२७१ ॥
केतौ निपतिते तस्मिन्रक्षसां तनुतां ययौ ।
आशाबन्धोरिव जये भुजयोर्जीवितेषु च ॥ १२७२ ॥
ततः क्षपाचरपतिः शस्त्रवृष्टिं निरन्तराम् ।
चिक्षेप राघवायोग्रां मूर्तां मायामिवात्मनः ॥ १२७३ ॥

१. 'समरे' शा०.

रामस्तां सायकैश्छित्वा कवचं काञ्चनाचितम् ।
धनुश्च राक्षसपतेश्चकर्ताभ्यर्चितः सुरैः ॥ १२७४ ॥
रावणः क्रोधदीप्तोऽथ संक्रान्तज्वलनैरिव ।
विविधैरायुधैश्चक्रे रामं निष्पन्दकार्मुकम् ॥ १२७५ ॥
गोचरे पतितं शत्रुं देव कस्मादुपेक्षसे ।
विभीषणप्रभृतयो राममित्यूचिरे मुहुः ॥ १२७६ ॥
ततस्तरुणजीमूतसंघातप्रतिमान्हयान् ।
रिपोर्जघान काकुत्स्थस्ते चासन्राक्षसा हताः ॥ १२७७ ॥
शरेण सारथेः कायाच्छिरस्तरलकुण्डलम् ।
हृतं विलोक्य रामेण चकम्पे रावणः क्रुधा ॥ १२७८ ॥
तस्योद्यतायुधस्याद्य मुकुटं रघुनन्दनः ।
उन्ममाथार्धचन्द्रेण साम्राज्यस्येव जीवितम् ॥ १२७९ ॥
भल्लेनोत्पतता वेगाद्वक्रमेकं सुरद्विपः ।
रामश्चिच्छेद नवभिर्वक्त्रैर्दृष्टं सविस्मयैः ॥ १२८० ॥
दृष्ट्वा कृत्तावशेषाणि न निजं मेनिरे क्षणात् ।
दशमेनैव वक्त्रेण पापं मन्येऽधिकं कृतम् ॥ १२८१ ॥
च्युतानि नव वक्त्राणि पुरो दृष्टानि तेन यत् ।
ज्वलत्कुण्डलमालोक्य वक्त्रमण्डलमग्रतः ।
सस्मार रावणः पूर्वं निकृत्तवदनाहुतीः ॥ १२८२ ॥
स शक्तिं प्राहिणोद्दीप्तां कोपवह्नेः शिखामिव ।
लक्ष्मणायोपरि क्षीणशक्तिश्छिन्नैर्मुखैरपि ॥ १२८३ ॥
सा शक्तिर्लक्ष्मणशरैर्याता शतसहस्रधा ।
पौलस्त्यजीविताशेव नैव क्वचिददृश्यत ॥ १२८४ ॥
स विभीषणसुग्रीवलक्ष्मणानाद्रवत्क्रुधा ।
कितवस्त्यक्तमर्यादसर्वस्वमिव निर्जितः ॥ १२८५ ॥
विलोक्यादृष्टपूर्वाणि पतितानि मुखानि सः ।
मदतान्द्रीं परित्यज्य रामं रामममन्यत ॥ १२८६ ॥

स क्रुधादायुधवनं प्रवणं दारणे रिपोः ।
धीरः ससर्ज नोत्साहं त्यजन्त्यन्येऽपि मानिनः ॥ १२८७ ॥
रणे प्रगल्भमालोक्य तं पर्यन्तेऽपि मातलिः ।
उवाच राघवं मेघघोषगम्भीरनिस्वनः ॥ १२८८ ॥
द्वौ शत्रुदलने श्लाघ्यौ वैकुण्ठस्त्वं च राघवः ।
यौ दृष्टौ कृत्तवक्त्राभ्यां राहुणा रावणेन च ॥ १२८९ ॥
एकशीर्षावशेषेऽयं जय्यस्ते जयतां वर ।
त्रैलोक्यजयिनं शत्रुं हेलया किमुपेक्षसे ॥ १२९० ॥
ब्रह्मास्त्रेण जहि क्षिप्रं भग्नवेगं क्षपाचरम् ।
अयं व्याधिरिवासाध्यो वध्यः कालव्यतिक्रमात् ॥ १२९१ ॥
इति मातलिना वीरः प्रेरितो रघुनन्दनः ।
ब्रह्मास्त्रमादधे दीप्तं यदगस्त्यादवाप्तवान् ॥ १२९२ ॥
सर्वदेवमयं दृष्ट्वा रामेणास्त्रमुदीरितम् ।
ससार सुरसंघातस्त्रिपुरारिपराक्रमम् ॥ १२९३ ॥
स धूमदहनोद्गारं तदस्त्रं घोरनिस्वनम् ।
पपात राघवोत्सृष्टं हृदये राक्षसप्रभोः ॥ १२९४ ॥
पौलस्त्यवक्षो निर्भिद्य स शरोऽस्त्राभिमन्त्रितः ।
राममेवाययौ तूर्णं प्रत्यग्ररुधिरारुणः ॥ १२९५ ॥
ततः पपात पौलस्त्यः स्रस्तसायककार्मुकः ।
कृत्तः सीतानिकारेण क्रकचेनेव पादपः ॥ १२९६ ॥
तस्मिन्निपतिते वीरे शेखरे त्रिदशद्विषाम् ।
अताड्यत सुरैर्व्योम्नि काकुत्स्थजयदुन्दुभिः ॥ १२९७ ॥
शत्रुं शल्यमिवोन्मूल्य स्वस्थः पारं परं ययौ ।
वियोगस्याभियोगस्य प्रकोपस्य च राघवः ॥ १२९८ ॥

इति रावणवधः ॥ ४२ ॥

इति क्षेमेन्द्रविरचिते रामायणकथासारे संपूर्णं युद्धकाण्डम् ।

सुरैरवध्यं समरे हतं श्रुत्वा दशाननम्।
तं देशमाययुस्तूर्णं रावणान्तःपुराङ्गनाः॥ १॥
ताश्छिन्नहारकेयूरधम्मिल्लकुसुमस्रजः।
लङ्केश्वरं निपतितं ददृशुर्वल्लभं भुवि॥ २॥
गतासुं गाढमालिङ्ग्य तं कुरङ्गविलोचनाः।
सृजन्त्यो बाष्पसलिलं शुशुचुः शोकविह्वलाः॥ ३॥
कथं सुरासुरपुरप्रोद्गीतगुरुविक्रमः।
त्रिविक्रमविजेता त्वं मानुषेण रणे हतः॥ ४॥
विवशास्त्रिदशा येन कृताः प्रथितपौरुषाः।
स त्वमद्य कथं नाम शेषे निःशेषितः परैः॥ ५॥
एते ते शेरते राजन्कैलासोल्लासलाञ्छनाः।
भुजाः स्तम्भनिभा भूमौ मन्त्रान्ता[1] भुजगा इव॥ ६॥
विकीर्णहारं वक्षस्ते रुधिरोद्भ्रान्तु चन्दनम्।
ललनाकेलिशयनं पांशुदिग्धं न शोभते॥ ७॥
आकृष्टशिष्टाचारेण निष्पिष्टगुणसंपदा।
अत्र सीतापहारेण कृतान्तेनासि मोहितः॥ ८॥
शिखेवाग्नेः पतङ्गेन रूपलुब्धेन जानकी।
मृत्युरात्मविनाशाय स्वयमालिङ्गितस्त्वया॥ ९॥
प्रत्यासन्नविनाशेन श्रुतं तद्विस्मृतं श्रुतम्।
स्थलीकृतोऽम्बुधिर्येन कुम्भकर्णश्च पातितः।
स मर्त्य इति किं मिथ्या काकुत्स्थश्चिन्तितस्त्वया॥ १०॥
अपाकृतं च बन्धूनां वचनं हितवादिनाम्।
मुखं रजःपुटेनेव किं ह्रिया विनिगूहसे॥ ११॥
सीताहृतेरसि हतः किमस्माभिः कृतं तव।
देहि प्रतिवचो नाम न प्रियां त्यक्तुमर्हसि॥ १२॥

---

१. 'मन्त्राता' ग०.

अहो च पाशहस्तेन त्वं युक्त्यैव प्रमाथिना ।
जानकीकरिणीलोभादाकृष्टो नरकुञ्जरः ॥ १३ ॥
स्वदारान्क परित्यज्य परस्त्रीलुब्ध गच्छसि ।
तव केनोपदिष्टोऽयं विवेकः साध्वसंमतः ॥ १४ ॥
अधुना वन्धुभिर्वीरैः पतितस्य स्वदुर्नयात् ।
राघवस्तव संस्कारं चौरस्येवाभियुज्यते ॥ १५ ॥
धिगेतत्पवनोद्वल्गद्वीचिसंचयचञ्चलम् ।
ऐश्वर्यं यत्त्वमद्यैव परायत्तौर्ध्वदैहिकः ॥ १६ ॥
क सा सुरासुरशिरःशायिनी विश्वकम्पिनी ।
आज्ञा तवाप्रतिहता निहतारातिसंपदः ॥ १७ ॥
यत्र यत्र दृशः पेतुस्तव पद्मवनोपमाः ।
तत्र तत्रावभौ श्रीमानञ्जलिप्रणयी जनः ॥ १८ ॥
स त्वमेको निपतितः क्षितौ क्षितिभृतां वर ।
भृत्यशेषोऽपि यस्याग्रे नास्ति क्रव्यादवारणे ॥ १९ ॥
भृत्याः सनाथाः सामात्याः सनाथा पृथिवी पुनः ।
नाथे त्वयि गते नाथ विनाथस्तु वधूजनः ॥ २० ॥
इति मन्दोदरी देवी सर्वाश्चान्तःपुराङ्गनाः ।
चक्रुर्मुन्मदनोद्यानसंभोगस्मरणाकुलाः ॥ २१ ॥

इत्यन्तःपुरप्रलापः ॥ १ ॥

ततो विभीषणं रामः सदाचाराब्धिरभ्यधात् ।
सत्कारः क्रियतां भ्रातुः सान्त्व्यतां च वधूजनः ॥ २२ ॥
एतद्विभीषणः श्रुत्वा तं जगाद कृताञ्जलिः ।
नृशंसस्यास्य सत्कारे न मे चेतः प्रवर्तते ॥ २३ ॥
कृतघ्नं त्यक्तसद्वृत्तं निष्कृपं निरपत्रपम् ।
वायसा अपि नाश्नन्ति कथं दहति पावकः ॥ २४ ॥
परामुन्नतिमासाद्य श्वभ्रे क्षिपति यस्तनुम् ।
तस्यात्महन्तुर्मूढस्य क्रियते केन सत्क्रिया ॥ २५ ॥

शक्त्या क्रूरान्गुणैर्दृप्तान्प्रभावेण प्रमादिनः ।
ऐश्वर्येण कदर्यांश्च धिगनार्यान्वृथोन्नतान् ॥ २६ ॥
परदारपरामर्षसंजातेनाजितेन्द्रियः ।
जनवादेन दग्धोऽयं तत्किं दग्धस्य दह्यते ॥ २७ ॥
इति ब्रुवाणं रामस्तं प्रीत्या स्पृष्ट्वाशु पाणिना ।
उवाच प्रणयस्मेरत्विषा कुसुमिताधरः ॥ २८ ॥
उद्धृत्तो दैन्यमापन्नः शत्रुर्व्यसनमागतः ।
माननीयोऽभिरक्ष्यश्च विशेषेण मनस्विभिः ॥ २९ ॥
महाजनो वा दीनो वा वयस्यः शत्रुरेव वा ।
गतासवः समा रागद्वेषः कस्य कलेवरे ॥ ३० ॥
गुणिनो गुणहीना वा ज्ञातयः प्रच्युताः पदात् ।
अनुग्राह्याश्च पूज्याश्च स्थितिरेषा सतां सदा ॥ ३१ ॥
हतेऽस्मिन्पतिते कोपं परित्यज्य विभीषण ।
यातजीवस्य कः शत्रुर्विग्रहान्तो हि विग्रहः ॥ ३२ ॥
तस्मात्कुरुष्व सत्कारं भ्रातुर्निजकुलोचितम् ।
अकार्यमपि ते कार्यं सुहृदो वचनं मम ॥ ३३ ॥
शासनादिति रामस्य बन्धूनामग्रजस्य च ।
वृद्धामात्यैरविन्ध्याद्यैर्विदधे देहसत्क्रियाम् ॥ ३४ ॥
कृतोदकः समाश्वास्य वृद्धैरन्तःपुराङ्गनाः ।
निदेशकारी रामस्य पुरस्तस्थौ विभीषणः ॥ ३५ ॥

इति रावणसत्क्रिया ॥ २ ॥

ततो विमुक्तकवचः शिथिलीकृतकार्मुकः ।
विसृज्य मातलिं रामः प्रीत्या सौमित्रिमब्रवीत् ॥ ३६ ॥
अधुना वत्स सुहृदः सतः पूर्वोपकारिणः ।
विभीषणस्याभिषेकं द्रष्टुमिच्छति मे मनः ॥ ३७ ॥
अनुरक्तस्य भक्तस्य रतस्य च हिते सदा ।
स्निग्धस्य सुहृदः कृत्स्ना पृथिवी मूल्यमल्पकम् ॥ ३८ ॥

विभीषणो निजयशःशुभ्रोष्णीषविभीषणः ।
अलंकरोतु लङ्कायां [1]प्रशान्तातङ्कमासनम् ॥ ३९ ॥
एवंविधः सदाचारस्तरूणां कुसुमागमः ।
पुण्यैः प्रजाभिः श्रुतवान्धर्मात्मा लभ्यते प्रभुः ॥ ४० ॥
धनी दाता गुणी नम्रः शूरः शान्तो द्विजः क्षमी ।
मूलं कृतयुगस्यैतद्धर्मशीलश्च भूपतिः ॥ ४१ ॥
सत्वे [2]सत्ये दमे धैर्ये कुले शीले श्रुतौ श्रुते ।
विभीषणसमः कोऽस्ति बुधेषु विबुधेषु च ॥ ४२ ॥
प्रौढप्रकाशयशसा गुणिना पक्षपातिना ।
लङ्कातेजस्विनानेन द्यौरिवार्केण राजितः ॥ ४३ ॥
सद्वर्त्मनि स्थितं पुत्रममित्रं व्यसनाहृतम् ।
मित्रं च विभवारूढं पश्यन्ति सुकृ[3]तौचिताः ॥ ४४ ॥
रत्नोत्तमानि चत्वारि सन्ति संसारवारिधेः ।
मित्रं [4]कार्याय सक्तं च संपूर्णश्च सुधाकरः ॥ ४५ ॥
सोऽयं मम सुहृन्मान्यः स्नेहप्रणयभाजनम् ।
क्रियतामभिषेकार्द्रः प्रत्यग्रविभवोचितः ॥ ४६ ॥
इत्युक्ते रघुनाथेन लक्ष्मणः शुभलक्ष्मणः ।
मङ्गलैर्विदधे मित्रं क्षेत्रं साम्राज्यसंपदाम् ॥ ४७ ॥
हेमरत्नघटन्यस्तसर्वौषधिफलाक्षतैः ।
बभौ शक्र इव श्रीमानभिषिक्तो विभीषणः ॥ ४८ ॥
विभीषणाभिषेकेऽभूत्स [5]कोऽप्यव्यग्रग्रहोदयः ।
प्राज्यो यस्य फलं राज्यमाभूमिगिरिसागरम् ॥ ४९ ॥

इति विभीषणाभिषेकः ॥ ३ ॥

शासनाद्रघुनाथस्य हनुमान्हर्षनिर्भरः ।
गत्वा विजयवृत्तान्तं रामपत्न्यै न्यवेदयत् ॥ ५० ॥

---

१. 'प्रशङ्का' शा०. २. 'सन्ये दमे धर्मे' शा०. ३. 'तोज्ज्वलाः' शा०. ४. 'कार्या-
यस' शा०. ५. 'कोऽपि न ग्रहो' शा०.

सा भर्तुर्वचनं श्रुत्वा प्रहर्षोत्तम्भिताशया ।
न शशाक क्षणं वक्तुं क्षीवेवामृतनिर्झरैः ॥ ५१ ॥
ततश्चिरेण वैदेही बभाषे पवनात्मजम् ।
आनन्देन निरुद्धं मे वचनं न प्रवर्तते ॥ ५२ ॥
प्रियाख्यानस्य पृथिवी मूल्यस्यास्य ददानि किम् ।
इति दैन्येन मे चेतः संतोषं नाधिगच्छति ॥ ५३ ॥
इति ब्रुवाणां वैदेहीं मारुतिः प्रत्यभाषत ।
इदं मे वचनं मातः परमं पारितोषिकम् ॥ ५४ ॥
हतामित्रं कुशलिनं तव पश्यामि यत्पतिम् ।
याभिस्त्वं तर्जिता कृच्छ्रे राक्षसीभिर्भयाकुला ॥ ५५ ॥
आज्ञैव विग्रहं तासां प्रसादो मे विधीयताम् ।
इत्युक्ते वायुपुत्रेण जगाद जनकात्मजा ॥ ५६ ॥
प्रेष्यासु परतन्त्रासु वीर न क्रोद्धुमर्हसि ।
अपराधे वधार्हेऽपि क्षमावानुन्नताशयः ॥ ५७ ॥
इति व्याघ्रस्य पुरतो मुनिः कश्चिदभाषत ।
आर्यपुत्रं कुशलिनं द्रष्टुमिच्छामि मारुते ॥ ५८ ॥
इति सीतावचः श्रुत्वा स ययौ यत्र राघवः ।
तस्मै निवेद्य सानन्दां जायां जनकनन्दिनीम् ॥ ५९ ॥
उवाच हनुमान्देवं देवी त्वां द्रष्टुमिच्छति ।
श्रुत्वा हनूमतो वाक्यं विचार्य सुचिरं धिया ॥ ६० ॥
हर्षशोकसमाविष्टः कृच्छ्रेणोवाच राघवः ।
कृतोदको गताशोचः स्वयं राजा विभीषणः ॥ ६१ ॥
स्नातामलंकृतां सीतां समादायोपगच्छतु ।
इति रामस्य वचसा लङ्कां गत्वानिलात्मजः ॥ ६२ ॥
विभीषणाय सीतार्थं यथावृत्तं न्यवेदयत् ।
ततः स्नाता शशिमुखी वस्त्राभरणभूषिता ॥ ६३ ॥

तां रत्नशिविकारूढां पुरस्कृत्य विभीषणः ।
वृद्धामात्यैः परिवृतः काकुत्स्थं समुपाययौ ॥ ६४ ॥
आगतां जानकीं दृष्ट्वा वानराः कौतुकाकुलाः ।
उन्मुखा विपुलं वर्त्म निःसंचारं प्रचक्रमुः ॥ ६५ ॥
किं नु वक्ष्यति वैदेही रामः किं प्रतिवक्ष्यति ।
कान्तिर्वा कीदृशी तस्या यदर्थं रावणो हतः ॥ ६६ ॥
समागमो वा दम्पत्योः कीदृशोऽयं भविष्यति ।
इत्यनेकविकल्पोऽभूज्जल्पस्तेषामनल्पकः ॥ ६७ ॥
ततो विभीषणोऽभ्येत्य राममूचे कृताञ्जलिः ।
निरस्य वेत्रिप्रवरैर्जनं दर्शनसंगतम् ॥ ६८ ॥
जयश्रीरिव ते मूर्ता जानकी विक्रमार्जिता ।
इयमग्रे स्थिता देव कौमुदीवामृतत्विषः ॥ ६९ ॥
इत्युक्तं राक्षसेन्द्रेण श्रुत्वा रघुपतिः क्षणम् ।
प्रमोदक्रोधदैन्यानां तुल्यं प्राप विधेयताम् ॥ ७० ॥
सोऽवदत्किमयं मिथ्या जनः प्रोत्सार्यते पुरः ।
युद्धे ममैते स्वजनाः कथं नु परतां गताः ॥ ७१ ॥
यत्कृतो विस्मयो मूर्त इव सेतुर्महोदधौ ।
वत सा कीदृशी सीतेत्येषामेवास्ति संशयः ॥ ७२ ॥
पुत्रपक्षे प्रजा राज्ञस्तस्मात्पश्यन्तु जानकीम् ।
व्यसनोत्सवयुद्धेषु नादृश्या राजयोषितः ॥ ७३ ॥
नान्तःपुरैर्न वासोभिर्न जनोत्सारणैः पुरः ।
भवन्ति पूजिता नार्यः शीलं तासां समुन्नतिः ॥ ७४ ॥
विद्येवात्मविवेकेन सत्येनेव सरस्वती ।
प्रज्ञेव धर्ममार्गेण नारी शीलेन पूज्यते ॥ ७५ ॥
इत्युक्ते रघुनाथेन प्लवङ्गाः सह राक्षसैः ।
सीतां समुपसर्पन्तीं ददृशुर्विस्मयाकुलाः ॥ ७६ ॥

सीतादर्शनसंक्रान्तप्रकोपाताम्रलोचनम्।
सर्वे राघवमालोक्य शल्यविद्धा इवाभवन्॥ ७७॥
मानार्हमालिनी भर्त्रा मानसंभाषिता सती।
लज्जिता स्वानि गात्राणि विवेशेव विषादिनी॥ ७८॥
चिरदर्शनवैलक्ष्यविक्लवा सा विमानिता।
तन्वी लतेव तुहिनस्फारभारानताभवत्॥ ७९॥
अनुरागावमानाग्नितप्तामालोक्य मैथिलीम्।
मा कस्यचित्प्रियः कश्चिद्भूयादित्यवदज्जनः॥ ८०॥
चिरसंभृतलावण्यललितामवलोक्य ताम्।
विवर्णवदनो रामः कोपस्नेहाकुलोऽभवत्॥ ८१॥
दृशं तद्वदनाम्भोजादपसार्य विनिश्वसन्।
वर्जयन्दर्शनस्पर्शौ काकुत्स्थः क्ष्मां निरैक्षत॥ ८२॥
सुग्रीवलक्ष्मणमुखाः प्रत्याख्यातामधोमुखीम्।
तां दृष्ट्वा वाससा वक्त्राण्याच्छाद्य रुरुदुः शुचा॥ ८३॥
वलिना संनिरुद्धेन ततः कोपाग्निना ज्वलन्।
भ्रुकुटीधूमलेखां कः काकुत्स्थः शङ्कितोऽवदत्॥ ८४॥
मानिना दारहरणे कर्तव्यं यत्कुलोचितम्।
तदस्माभिः कृतं तावद्वैरनिर्यातनं युधि॥ ८५॥
लज्जावमानपङ्केन लिप्तं यन्मेऽखिलं यशः।
क्षालितं निहितारातिवनिताबाष्पनिर्झरैः॥ ८६॥
शत्रुहस्तात्त्वमाकृष्टा न भ्रष्टा शल्यमानिता।
अधुना गच्छ वैदेहि स्वाधीनास्ते दिशो दश॥ ८७॥
मानिनः परिभूतस्य दातुः कृशधनस्य च।
शङ्कितस्य च दारेषु कुतो निद्रा कुतः सुखम्॥ ८८॥
रक्षद्भिरार्यमर्यादां साधुशब्दपदैर्वधूः।
सापशब्दाविपश्चिद्भिर्वाणीव परिवर्ज्यते॥ ८९॥

---

१. 'व्योमा' क-ख.

देवराणां गृहे वा त्वं सुग्रीवस्य गृहेऽथवा ।
पुरे वा राक्षसेन्द्रस्य वस देशान्तरेषु वा ॥ ९० ॥
गृहे स्थितां रावणस्य निर्लज्जस्याजितात्मनः ।
कथं नु धारयामि त्वां मालां परिधृतामिव ॥ ९१ ॥
इति प्रियेण निर्दोषा मिथ्यादोषेण दूषिता ।
असूत्रहारं कुचयोश्चक्रे सीताश्रुबिन्दुभिः ॥ ९२ ॥
अवमानेन कोपेन लज्जया विस्मितेन च ।
सुकुमारं मनस्तस्या भागीकृतमिवाभवत् ॥ ९३ ॥
स वाससा बाष्पजलं परिमृज्य मृगेक्षणा ।
उवाच बाष्पसंतप्ता दीर्घं निश्वस्य मानिनी ॥ ९४ ॥
अहो विसदृशं नाथ पुरुषं जनसंनिधौ ।
श्राविताहं कुलवधूरवधूतगुणा त्वया ॥ ९५ ॥
स्थाने मनस्ते साशङ्कं स्त्रियो हि तरलाशयाः ।
किं तु मां नाभिजानासि शीलज्ञोऽपि कथं प्रभो ॥ ९६ ॥
कुले जनकराजस्य जाता दशरथस्नुषा ।
पत्नी ननाम रामस्य सहते दूषणामिमाम् ॥ ९७ ॥
प्राकृतस्त्रीसमुचितैः किं प्रलापैरसंगतैः ।
अस्य मिथ्याव्यलीकस्य प्रमाणं मे हुताशनः ॥ ९८ ॥
चितां रचय सौमित्रे पत्युर्वक्त्रेन्दुनिर्गताम् ।
उल्कामादाय हृदये कथं जीवितुमुत्सहे ॥ ९९ ॥
इति सीतावचः श्रुत्वा लक्ष्मणः शोकविह्वलः ।
अधोमुखस्य रामस्य विज्ञायेङ्गितचेष्टितम् ॥ १०० ॥
विदधे दुःखसदृशं ज्वलितं जातवेधसम् ।
शीलशैलस्य वैदेह्या मिथ्यादोषस्य भेषजम् ॥ १०१ ॥
पावकाभिमुखी गत्वा ततो जनकनन्दिनी ।
अभ्यधादवमानस्य प्रायश्चित्तार्थिनी सती ॥ १०२ ॥

मनोवाक्कायचेष्टाभिर्यथाहं राघवात्परम् ।
दैवतं नाभिजानामि तेन मां पातु पावकः ॥ १०३ ॥
इत्युक्त्वा ब्राह्मणेभ्यश्च देवेभ्यश्च मनस्विनी ।
प्रणामं मनसा कृत्वा प्रविवेश हुताशनम् ॥ १०४ ॥

इति वह्निप्रवेशः ॥ ४ ॥

ततः शचीपतिः श्रीमांल्लोकपालैः सहाखिलैः ।
अदृश्यत स्वयं ब्रह्मा देवश्च गिरिजापतिः ॥ १०५ ॥
ते सूर्यशतसंकाशैर्विमानैः पूरिताम्बराः ।
शक्रप्रभावविभवो राजा दशरथस्तथा ॥ १०६ ॥
राक्षसक्षयसंहृष्टा राममूचुः कृताञ्जलिम् ।
किरन्त इव दन्तांशुनिवहैः कुसुमस्रजः ॥ १०७ ॥
कथं पृथग्जन इव प्रजानाथ कुलोचितम् ।
परित्यजसि निर्दोषां सीतां कीर्तिमिवात्मनः ॥ १०८ ॥
अहो वत न जानासि स्वयमात्मानमच्युत ।
कथं जगन्निवासस्य प्रभावो विस्मृतस्तव ॥ १०९ ॥
इत्युक्ते सादरं व्योम्ना सहस्राक्षमुखैः सुरैः ।
शक्रेण प्रेरितो वक्तुं स्वयमूचे प्रजापतिः ॥ ११० ॥
देवो नारायणः श्रीमान्पद्मनाभो विभुर्भवान् ।
स्वेच्छामात्रसमुन्मेषो यस्यायं विश्वसंभ्रमः ॥ १११ ॥
चराचरस्य स्रष्टारं त्रातारं जगतामपि ।
संहर्तारं च पर्यन्ते त्वामाहुः कारणं त्रिधा ॥ ११२ ॥
सर्वयज्ञमयं धाम सर्वदेवमयं वपुः ।
सर्वदेवमयश्चात्मा कस्यान्यस्य यथा तव ॥ ११३ ॥
पराकाशावकाशेऽस्मिन्नेकोऽर्कस्त्वं सदोदितः ।
हंसो हिरण्यवर्णश्च मानसोरुसरोरुहे ॥ ११४ ॥
पुरुषस्याप्रमेयस्य शाश्वतस्य प्रजापतेः ।
स्तुतौ शक्तात्र नैवैषा तावती यदि भारती ॥ ११५ ॥

सर्वावतारलीलासु तव विस्रम्भसाक्षिणी ।
लक्ष्मीः क्षितिसमुद्भूता सती जनकनन्दिनी ॥ ११६ ॥

इति महापुरुषस्तवः ॥ ५ ॥

उक्ते पितामहेनेति भगवान्भूतभावनः ।
स्वयं विभावसुः सीतामादाय प्रत्यदृश्यत ॥ ११७ ॥
स समभ्येत्य काकुत्स्थं तेजोनिधिरभाषत ।
निर्दोषां राम वैदेहीं गृहाणाभिजनोज्ज्वलाम् ।
विमोहजननीं मिथ्या न शङ्कां कर्तुमर्हसि ॥ ११८ ॥
इत्युक्ते वह्निना रामस्तमुवाच कृताञ्जलिः ।
गृहीतेयं मया देव वैदेही तव शासनात् ॥ ११९ ॥
शुद्धस्वभावां सततं ननु जानामि जानकीम् ।
किं त्वस्या विहिता शुद्धिर्लोकप्रत्ययकारिणी ॥ १२० ॥
सर्वथा रञ्जनीयोऽयं जनो निर्दोषदोषभाक् ।
लोकप्रत्ययसारो हि सदाचारपरिग्रहः ॥ १२१ ॥
उक्त्वेति सीतां जग्राह राघवो वह्निनार्पिताम् ।
स्वयं महेश्वरेणापि पवित्रितगुणस्तवः ॥ १२२ ॥
ततो दशरथः पुत्रं राममूचे दिवि स्थितः ।
सत्यं ममैव नान्यस्य पुत्र मानोन्नतं शिरः ॥ १२३ ॥
धन्योऽहं यस्य मे राम त्वं सुतस्त्रिदशार्चितः ।
स्नुषा चेयं सती सूता पावकी कुलसंततेः ॥ १२४ ॥
यशःशुभ्रांशुकः श्रीमान्सत्यधर्मविभूषणः ।
स्वच्छन्ददेहविरहो भविष्यसि वरान्मम ॥ १२५ ॥
श्रुत्वेति राघवो वाक्यं पितुः प्रणतशेखरः ।
उवाच तात धन्योऽहं प्रसादेन तवामुना ॥ १२६ ॥
मद्विप्रवासकोपस्ते योऽभूत्कैकयजां प्रति ।
भरते वा तदुद्भूतस्तयोः शापो निवर्तताम् ॥ १२७ ॥

इत्युक्ते रघुनाथेन तथेत्युक्त्वा नभोगतः ।
गुणैः प्रशंसन्सौमित्रिं नृपः सीतामपूजयत् ॥ १२८ ॥
किं तदा नीतिचक्रेण प्रेरितो राघवः प्रियम् ।
हतानां कपिवीराणां ययाचे जीवितं विभुः ॥ १२९ ॥
ततः पीयूषवर्षेण शक्रोत्सृष्टेन वानराः ।
लब्धजीवाः समुत्तस्थुः सर्वत्रेच्छाफलोदकाः ॥ १३० ॥
ततो रामं समाभाष्य पूजयित्वा पुनः पुनः ।
सुराः ससिद्धगन्धर्वाः प्रययुः प्रीतिशालिनः ॥ १३१ ॥

इति लोकपालदर्शनम् ॥ ६ ॥

ततो रामस्य वचसा रत्नैरापूर्य वानरान् ।
स्वपुरीमुद्यतो गन्तुं तमुवाच विभीषणः ।
शक्रस्येवाभिषेकं ते द्रष्टुमिच्छामि मानद ॥ १३२ ॥
इदं च पुष्पकं नाम विमानाग्र्यं मनोजवम् ।
मयोपनीतमारुह्य सनाथीक्रियतां विभो ॥ १३३ ॥
एतदाकर्ण्य काकुत्स्थस्तथेत्युक्त्वा वधूसखः ।
आरुरोह विमानं तत्सानुजः सविभीषणः ॥ १३४ ॥
ततो वानरराजस्य सैन्ये बलजयोर्जिते ।
भुवनोल्लङ्घनायेव त्रिविक्रम इवोद्यते ॥ १३५ ॥
राघवेणाभ्यनुज्ञातमथ कैलाससंनिभम् ।
जगाहे गगनं वेगात्पुष्पकं कीर्णपुष्पकम् ॥ १३६ ॥
जवोद्धूतपताकेन केतुना पुष्पकं दिशाम् ।
चक्रे रत्नांशुमायूरव्यंजिनेनैव[1] जीवनम् ॥ १३७ ॥
पुष्पकेन व्रजन्रामो व्योम्नः क्ष्मामवलोकयन् ।
जगाद जानकीं दन्तज्योत्स्नारञ्जितदिङ्मुखः ॥ १३८ ॥
एतदायोधनं यत्र सीते ते निधनं गताः ।
इन्द्रजित्प्रमुखा वीरास्तदर्थं क्षणदाचराः ॥ १३९ ॥

---

१. 'व्यजनेनेव वीजनम्' इति स्यात्.

अयं तरङ्गसंघट्टविस्फुटः शुक्तिमौक्तिकैः।
व्यक्ताट्टहासो जलधिर्लङ्काविभ्रमदर्पणः॥ १४०॥
अयं स पौलस्त्य इवोग्रसत्वः क्रान्तोऽम्बुधिर्मारुतनन्दनेन।
उल्लोलदोलावलयेन यस्य लङ्कावधूर्भाति दुकूलिनीव॥ १४१॥
अयं स सेतुर्गिरिभिर्निबद्धः सीमन्तिताम्भोधिरिवावभाति।
यशांसि येन प्लवगर्षभाणां भुजोर्जितानां सततं तरन्ति॥ १४२॥
वेलावने श्यामलतालतालीतालीसहिन्तालतमालयाली।
भात्यस्य भर्गाग्निपतङ्गवृत्तेर्धूमावली वासमसायकस्य॥ १४३॥
सोऽयं गिरीन्द्रः सुमहान्महेन्द्रः क्रान्तः कपीन्द्रेण विलङ्घनेऽब्धेः।
मानोन्नतः साधुरिवाकुलीनो याच्ञा हि सा खर्वशिरा बभूव॥१४४॥
एतन्महन्माल्यवतो महाद्रेः संदृश्यते शृङ्गमनङ्गरङ्गम्।
यत्कन्दरे वानरराजजुष्टा रत्नोज्ज्वला राजति राजधानी॥ १४५॥
त्वया विहीनेन मयास्य सानौ कृच्छ्रेण पीतो विधिनोपरीतः।
वियोगमुह्यन्मनसाप्यकाले कालः सकालो नवमेघकालः॥ १४६॥
सेन्द्रायुधान्यम्बुदमण्डलानि नृत्यन्मयूराणि च काननानि।
स्मृत्वा ममाद्याप्यधिवासलीनं वियोगदुःखं न जहाति चेतः॥ १४७॥
एतत्तदम्भोजरजःपिशङ्गं पम्पासरस्सारसनादहृद्यम्।
नीता निशास्त्वद्विरहे मयास्य तीरे वियुक्तैः सह चक्रवाकैः॥ १४८॥
सोऽयं जनस्थाननिवासपूज्यो वनस्पतिर्यत्र स गृध्रराजः।
हतस्त्वदर्थे जनसाधुवादं शृणोति सर्वत्र यशःशरीरः॥ १४९॥
मुनेरगस्त्यस्य पवित्रकीर्तेस्तपःपवित्रस्य तथायमत्रेः।
पुण्याश्रमस्तीव्रभवाध्वतापः श्रमापहस्त्यक्तविरोधसत्वः॥ १५०॥
सोऽयं गिरिर्निर्झरधौतसानुः संदृश्यते जानकि चित्रकूटः।
बभूव सौजन्यसुधाकरेण समागमो मे भरतेन यत्र॥ १५१॥
अग्र्यं विभात्यग्रकलत्रमब्धेस्त्रिमार्गगा स्वर्गनिसर्गमार्गः।
यस्यां त्रिलोक्याः कथयत्यजस्रं पवित्रतां त्र्यम्बकमौलिमाली॥ १५२॥

इयं कलिन्दाद्रिगजेन्द्रसान्द्रमदाम्बुशोभां यमुना बिभर्ति।
तरङ्गिणीभूषितमध्यदेशा रोमावलीवावनिनायिकायाः॥ १५३॥
अत्राश्रमो विश्रमहेतुरक्ष्णां पुण्यो भरद्वाजमुनेर्विभाति।
यस्याविदूरे नगरी गुहस्य विलोक्यते प्रीतिरिवाक्षया मे॥ १५४॥
इयं सरित्सा सरयूरयोध्यावधूनिबद्धा मणिमेखलेव।
करोति वेल्लत्कलहंसमालाकोलाहलैर्विभ्रमशिञ्जितानि॥ १५५॥
एषाप्ययोध्या रघुराजधानी स्फारस्फुटस्फाटिकसौधभाभिः।
भात्युल्लिखन्ती निखिलं खमुच्चैर्मूर्तेव राज्ञो भरतस्य कीर्तिः॥ १५६॥
उक्त्वेति रामः स्वपुरा[1]प्तकामस्तूर्णं विमानादवरुह्य वीरः।
ज्ञानेक्षणं ज्ञातसमस्तवृत्तं नत्वा भरद्वाजमुनिं प्रतस्थे॥ १५७॥

इति पुनराख्यायिकम्॥ ७॥

सत्यः समुद्भूतविकासपुष्पाः फलाकुलास्तस्य पुरः समस्ताः।
अश्रान्तसंतोषवसन्तकान्ता वृक्षा भरद्वाजवराद्बभूवुः॥ १५८॥
निशम्य तस्मात्कुशलं गुणाब्धेः [2]कृतं च दीप्तं भरतस्य राज्ञः।
पुनः प्रहर्षाय समीरसूनुं मनःसमानं विससर्ज वक्तुम्॥ १५९॥
गत्वा ततो राघवशासनेन कपिः पितुः स्वस्य गतिं क्षणेन।
गुहाय सर्वं विनिवेद्य वृत्तमवाप धर्म्यं भरतस्य धाम॥ १६०॥
स तं निशातव्रतकर्षिताङ्गं ददर्श दर्शोदितचन्द्रतुल्यम्।
जटाधरं राज्यमिवाभिरामं रामं विना प्रव्रजितं वनान्ते॥ १६१॥
निवेद्य तस्मै निरवद्यवृत्तेर्वृत्तं समस्तं रघुनन्दनस्य।
सीतावियोगव्यसनार्तिकृच्छ्रं दशाननोच्छेदभयोर्जितं च॥ १६२॥
प्राप्तं च सुग्रीवविभीषणाद्यैर्जयोदयश्रीसचिवैः सहैव।
सीतासहायं तमुदारशीलं कपिप्रवीरो विरराम वाक्यात्॥ १६३॥
श्रुत्वा समुत्तीर्य वनव्रतं तं समागतं भ्रातरमात्त[3]जीवः।
नवेन हर्षेण निरुद्धमूर्तिर्निस्पन्दमूर्तिर्भरतो बभूव॥ १६४॥

---

१. 'रः प्रक्रा' शा०. २. 'वृ' शा०. ३. 'स' शा०.

स धैर्यमासाद्य शनैः समस्तं पुनर्जगज्जातमिवाकलय्य।
हर्षाश्रुसंपूर्णविलोचनाग्रः स्पृशन्कराग्रेण कपिं जगाद॥ १६५॥
दिष्ट्या स देवः कुशली हतारिस्त्वत्तः श्रुतः स्वं विषयं प्रविष्टः।
किं ते प्रियाख्यानसुखस्य मूल्यं कोटीसहस्राणि ददानि हेम्नः॥१६६॥
सर्वात्मना वर्षशतादपीह जीवन्तमायाति नरं प्रहर्षः।
इत्येष सत्यः किल लोकवादः कल्याणशंसी प्रतिभाति मेऽद्य॥१६७॥
उक्त्वेति सर्वाः प्रकृतीर्नियोज्य पुरोत्सवालंकृतिसत्क्रियासु।
सामात्यभृत्यो जननीजनेन सार्धं प्रतस्थे भरतोऽग्रजाग्रम्॥ १६८॥
इति भरतानन्दः॥ ८॥

स वानरानीकमहाब्धिमध्ये दृष्ट्वा समायान्तमनन्तवीर्यम्।
मान्यं विमानस्थगिताम्बराग्रं रामं प्रहृष्टः प्रणनाम दूरात्॥ १६९॥
तमादराद्दीर्घतरप्रवाससमागतौत्सुक्यपरीतचेताः।
रामः सरामोऽप्यविमानशृङ्गमुत्सङ्गसक्तं मुहुरालिलिङ्ग॥ १७०॥
ततः समुत्सृज्य विमानमुच्चैः स्वयं कुबेराय विसृज्य तच्च।
वशिष्ठमाप्तं पुरतो ववन्दे रघूद्वहः स्वं जननीजनं च॥ १७१॥
निवेदिते न्यास इव स्वराज्ये रामस्य हर्षाङ्कुरतेन राज्ञः।
समुच्चचारासमसाधुवादैर्जनस्य सौजन्यगुणप्रवादः॥ १७२॥
गुणप्रकर्षे भरतस्य तत्र सौभ्रात्रजे राघववर्ण्यमाने।
जनस्तथेत्याह विलज्जिताभ्यामन्यत्र सुग्रीवविभीषणाभ्याम्॥ १७३॥
यथोचितं नूतनसंगमेन हृष्टाः परिष्वज्य मिथः प्रणामैः।
ते भ्रातरस्ताश्च परं जनन्यः सीता च सर्वे च चिरं ननन्दुः॥१७४॥
पौलस्त्यकारागृहबन्धमुक्तनाकौकसां हर्षफलैः कलत्रैः।
आकीर्यमाणः कुसुमैर्विवेश ततः पुरीं स्वां रघुराजचन्द्रः॥ १७५॥
इति भरतसमागमः॥ ९॥

स्नाता विमुक्तव्रतकेशबन्धाः पुष्पोज्ज्वला रत्नविभूषिताश्च।
ते राघवास्तत्र बभुर्वसन्ते वृक्षा इवाप्तास्तरुणस्वभावम्॥ १७६॥

१. 'मौ' शा०. २. 'ङ्गि' शा०.

प्रसादिता भूषणरत्नमाल्यैः कौशल्यया मैथिलराजपुत्री ।
लतेव तन्वी नवचैत्रलक्ष्म्या विभ्राजिता चारुतरा बभूव ॥ १७७ ॥
ततः कपीन्द्रस्य गिरा चतुर्भ्यो रत्नाकरेभ्यः सलिलेन पूर्णान् ।
आजग्मुरादाय सुवर्णकुम्भान्नदीशतेभ्यश्च तदङ्गदाद्याः ॥ १७८ ॥
वसिष्ठमुख्यैर्मुनिभिः समस्तैरथाभिषिक्तो विधिना निजेन ।
रत्नासने शासनसंविभक्तसमान्तचक्रः स रराज राजा ॥ १७९ ॥
यथैष रामश्चरिताभिरामस्तथाविधं नैव नृपं स्मरामः ।
विलोक्य रामस्य महाभिषेकमित्यूचिरे खे सुरसिद्धसंघाः ॥ १८० ॥
लक्ष्मीप्रहर्षस्मितचारु तस्य च्छत्रं यशःस्वच्छमतुच्छकीर्तेः ।
सानन्दशत्रुघ्नधृते रराज राज्याम्बुधेः फेणमहाट्टहासः ॥ १८१ ॥
स वीज्यमानः सितचामराभ्यां हर्षेण सुग्रीवविभीषणाभ्याम् ।
वभौ शशाङ्कच्छविलाञ्छनाभ्यां नीलाम्बुदाभ्यामिव शैलराजः ॥१८२॥
प्रावारकेयूरमहार्हहार[1]विभूषणापूरितपात्रहस्ताः ।
सुरासुरेन्द्रैः प्रहिताः समुद्रमुख्यास्तमव्यग्रतयोपतस्थुः ॥ १८३ ॥
ततो ददौ दिव्यविभूषणानि रामो यथार्थं हरिपुंगवेभ्यः ।
यैरावभुर्भूधरविग्रहास्ते मेघा इवेन्द्रायुधसंविभक्ताः ॥ १८४ ॥
विमुच्य हारं हरिणायताक्षी मतेन पत्युः प्रददौ च बाढम् ।
स तेन संपूर्णतुषाररश्मितारेण हारेण रराज वीरः ॥ १८५ ॥
क्षीरेण मन्थोत्थितफेनहाससमुल्लसत्कान्तिरिवामृताब्धिः ।
ततः कृतार्थः सुहृदर्थसिद्धिः संपूर्णमानः प्लवगप्रवीरः ॥ १८६ ॥
रामं समामन्त्र्य ययुः पुरीं स्वां संपूर्णमाना दिवि देवसंघाः ।
सौमित्रिरग्र्यो[2]र्पितयौवराज्यं प्राप्यं न जग्राह यदार्थितोऽपि ॥ १८७ ॥
तदा नियुक्तः प्रणयेन राज्ञा निदेशकारी भरतः प्रपेदे ।
सधर्ममूलः शतयज्ञशाखः सत्यप्रसूनः सितकीर्तिपुष्पः ।
गुणद्विरेफो विरराज रा····जसद्रुमस्तापहरः प्रजानाम् ॥ १८८ ॥

---

१. 'ता' शा०. २. 'ग्र्या' शा०.

स्वर्गोपमा यदभवत्सकला धरित्री
देवानुकारिचरितो यदभूज्जनश्च।
कल्पद्रुमा यदभवन्सकलाश्च वृक्षा
राजा प्रजापतिकृताभिनवस्थितिश्च॥ १८९॥
तस्यादरः सुचरितेन सितातपत्रे
निर्व्याजसत्वविभवेषु न चामरेषु।
आसीज्जनार्तिहरणेषु न संचयेषु
धर्मोज्ज्वलेषु च गुणेषु न भूषणेषु॥ १९०॥
त्यागेन वित्तं प्रशमेन विद्या शीलेन रूपं क्षमया प्रभावः।
अश्लाघया तेन गुणाश्च सर्वे विभूषिताः सत्वविभूषणेन॥ १९१॥
स्वच्छाशये कुवलयाभरणे विचित्र-
शब्दैः सदा द्विजवरैरुपजीव्यमाने।
विभ्राजते गुणगणैः कृतसंनिधानो
यस्मिन्नवाप कमलाकरनिर्वृतिं श्रीः॥ १९२॥
नृपतिमुकुटरत्ने राघवे शासति क्ष्मां
गुणगणपरिपूर्णः सर्वसंपत्समृद्धः।
समुचितनिजकर्मा धर्ममार्गप्रवृत्तः
सुतपरिजनयुक्तः प्राज्यजीवो जनोऽभूत्॥ १९३॥
इति रामाभिषेकः॥ १०॥

---

उत्तरकाण्डः।

जितं भगवता तेन हरिणा लोकधारिणा।
अजेन विश्वरूपेन निर्गुणेन गुणात्मना॥ १॥
शरांशुनिहितारातितिमिरं तेजसां निधिम्।
राज्योदयस्थं मुनयः काकुत्स्थं द्रष्टुमाययुः॥ २॥
अत्रिर्वशिष्ठः पुलहः कश्यपो गोतमस्तथा।
च्यवनो व्याघ्रकश्चैव देवलो रोमहर्षणः॥ ३॥

कश्यपो दीर्घतपसः पाराशर्यः पराशरः।
विश्वामित्रोऽथ जाबालिर्भारद्वाजश्च शौनकः॥ ४॥
सनन्दः पिप्पलादश्च लोकाक्षः कपिलस्तथा।
आपस्तम्भः सुमन्तुश्च बौधायनवलायनौ॥ ५॥
ऋष्यशृङ्गोऽथ कुशिकः गर्गवत्ससनातनाः।
एते ते मुनयः पूज्याः पृथग्द्रव्यादिसंचयाः॥ ६॥
पूजितास्ते विधानेन प्रधानेन पुरोधसा।
हेमरत्नासनजुषः प्रणतं राममूचिरे॥ ७॥
दिष्ट्या स निहतो वीर रावणः सानुगस्त्वया।
स्मृतेऽपि यस्मिन्मुञ्चन्ति न संत्रासं दिवौकसः॥ ८॥
दिष्ट्या कुशलिनं राम पश्यामस्त्वां हताहितम्।
यस्येयं भुजवीर्येण पुनर्जाता जगत्त्रयी॥ ९॥
धर्मासक्तधियो धाम्नां निधयो विधयः स्थितेः।
त्वद्विधाननुजायन्ते लोकत्राणाय साधवः॥ १०॥
रक्ष्यते त्वादृशैरेव मार्गः स्वर्गौकसां हितैः।
क्रमैस्त्रिविक्रमस्येव त्रैलोक्याक्रमणक्षमैः॥ ११॥
अद्भुतं त्वत्प्रभावेण स्वयमेतत्प्रदर्शितम्।
महाब्धौ सेतुबन्धश्च वधश्चेन्द्रजितो युधि॥ १२॥
कम्पं यत्कीर्तने वक्ति सुरस्त्रीरशनारवः।
वधादिन्द्रजितस्तस्य जातः कस्य न विस्मयः॥ १३॥
धनुस्त्रैलोक्यरक्षार्थं यज्ञार्थमखिलं धनम्।
जीवितं साधुवादार्थमहो श्लाघ्यं तव त्रयम्॥ १४॥
इत्युक्ते मुनिचक्रेण शक्रजिद्वधविस्मयम्।
उवाच विनयानम्रः काकुत्स्थस्तान्सकौतुकः॥ १५॥
कुम्भकर्णदशग्रीवमुखेभ्योऽभ्यधिकः कथम्।
इन्द्रजित्प्रवरश्चास्य कीदृशो वाभवद्वरः॥ १६॥

प्रणयादिति पृष्टेषु राघवेण महर्षिषु।
त्रिकालज्ञ ऋषिः श्रुत्वा प्रहसन्दिव्यलोचनः।
मुनिर्जगादागस्त्यस्तं दक्षिणाशाविशेषकः॥ १७॥
मेरुपार्श्वे तपस्तेपे पुरा कृतयुगे मुनिः।
तृणाङ्केराश्रमे पुण्ये पुलस्त्यो ब्रह्मणः सुतः॥ १८॥
तं देशं सुरसिद्धर्षिराजर्षिवरकन्यकाः।
क्रीडन्त्यः काञ्चनलता कान्तं सततमाययुः॥ १९॥
मत्वा तास्तपसो विघ्नं पुनः प्रोवाच संयमी।
ममाश्रमं या प्रविशेत्सा गर्भं धारयेदिति॥ २०॥
श्रुत्वैतत्कन्यकाः सर्वास्तं देशं नाययुः पुनः।
तृणबिन्दोस्तु राजर्षेर्न तच्छुश्राव कन्यका॥ २१॥
सा सखीदर्शनरसा तं देशं हरिणेक्षणा।
मुनिं स्वाध्यायसंसक्तं ददर्शाभ्येत्य निर्भया॥ २२॥
तस्य श्रुतिं श्रुतिसुखामाकर्ण्यालोक्य चाकृतिम्।
लेभे वसन्तवल्लीव प्रकामकमनीयताम्॥ २३॥
ततः सा व्यक्तसंदर्भगर्भजम्बालमस्थितिः।
जगामापाण्डुरमुखी लज्जिता पितुराश्रमम्॥ २४॥
राजर्षिर्ध्यानयोगेन सर्वं विज्ञाय दिव्यधीः।
पुलस्त्यायैव तां गत्वा ददौ भिक्षामिवात्मजाम्॥ २५॥
तस्यामजनयत्पुत्रं स मुनिर्विश्वविश्रुतम्।
श्रुतिश्रवणजन्मानं नाम्ना विश्रवसं सुतम्॥ २६॥
पितुः समानचरितः स कालेन महातपाः।
भरद्वाजात्मजां कान्तां पत्नीं प्राप पतिव्रताम्॥ २७॥
सा तस्मादुचितं पुत्रं पवित्रचरितं सती।
लेभे वैश्रवणं नाम तुल्यं विश्रवसो गुणैः॥ २८॥

---

१. 'म' शा०.

तस्य वर्षसहस्रेषु प्रयातेषु तपस्यतः ।
ददौ वरान्वरान्प्रीतः सुरैः सह पितामहः ॥ २९ ॥
स प्राप्य लोकपालत्वं वित्तैश्वर्यं स पुष्पकम् ।
गत्वा पप्रच्छ पितरं निवासं विभवोचितम् ॥ ३० ॥
सोऽब्रवीत्काञ्चनमयी विश्वकर्मकृता पुरा ।
लङ्का नामास्ति रक्षोभिस्त्यक्ता विष्णुभयार्पितैः ॥ ३१ ॥
सा तवैवोचिता पुत्र गच्छेत्याकर्ण्य तद्वचः ।
ययौ वैश्रवणस्तूर्णं तां पुरीं रत्नतोरणाम् ॥ ३२ ॥
तस्यां सुरार्चितः श्रीमान्निवसन्गुह्यकेश्वरः ।
काले काले ययौ द्रष्टुं पितरं पुष्पकेन सः ॥ ३३ ॥

इति वैश्रवणोत्पत्तिः ॥ १ ॥

इति कुम्भोद्भवेनोक्तमाकर्ण्य रघुनन्दनः ।
लङ्काख्यानप्रसङ्गेन विस्मितस्तमभाषत ॥ ३४ ॥
पुलस्त्यवंशसंभूताः श्रूयन्ते किल राक्षसाः ।
तेभ्योऽप्यन्ये बभूवुः के लङ्का येषामभूत्पुरी ॥ ३५ ॥
रामेणेति पुनः पृष्टः चुलुकापीतसागरः ।
ऊचे दन्तांशुभिः कुर्वन्दिशो मुक्ताङ्किता इव ॥ ३६ ॥
पुरा प्रजासु जातासु रक्षोभिः क्षुभितैर्विधिः ।
प्रार्थितो विदधे रक्ष्यरक्षिणौ यक्षरक्षसाम् ॥ ३७ ॥
ततो हेतिः प्रहेतिश्च सत्यधर्मव्रतोऽभवत् ।
हेतेर्भयायामभवद्विद्युत्केशाभिधः सुतः ।
स्वयं संध्या ददौ तस्मै सुतां सालकटां कटाम् ॥ ३८ ॥
विद्युत्केशेन सततं रममाणा घनस्तनी ।
गर्भमाधत्त सा काले विघ्नं संभोगसंपदाम् ॥ ३९ ॥
सा गत्वा तूर्णमुत्सृज्य गर्भं मन्दरकन्दरे ।
विद्युत्केशान्तिकं प्रायादश्रान्तसुरतार्थिनी ॥ ४० ॥

---

१. 'रम्ये' शा०.

स त्वया शिशुरुत्सृष्टः संध्यारुण इवांशुमान् ।
निक्षिप्य वदने पाणिं रुरोदाम्बुदनिस्वनः ॥ ४१ ॥
व्रजन्गगनमार्गेण देवस्तं वृषवाहनः ।
ददर्श सह पार्वत्या भगवान्भूतभावनः ॥ ४२ ॥
कारुण्यादथ रुद्राण्या स्वयमभ्यर्थितः शिशोः ।
पुरामाकाशगं प्रादादमरत्वं च शंकरः ॥ ४३ ॥
अम्बिकानुग्रहादुग्रतेजः शक्तिपराक्रमः ।
जातमात्रः प्रववृधे ततः प्रभृति राक्षसः ॥ ४४ ॥
स सुकेशाभिधः श्रीमान्राक्षसेन्द्रो वरोऽर्जितः ।
विश्रुतस्त्रिषु लोकेषु हरस्यानुचरोऽभवत् ॥ ४५ ॥
ग्रामणीं नाम गन्धर्वस्तस्मै देववतीं सुताम् ।
दत्वा कृतार्थमात्मानं मेने गिरिशगौरवात् ॥ ४६ ॥
बभूवुस्तनयास्तस्य तस्यामग्निप्रभास्त्रयः ।
माल्यवांश्च सुमाली च माली च बलशालिनः ॥ ४७ ॥
सर्वभूतैरजय्यास्ते तपसा ब्रह्मणो वरात् ।
अमर्त्यचक्रमाक्रम्य चक्रुर्विस्मृतविक्रमम् ॥ ४८ ॥
ते दुर्गमां पुरीं पूर्वनिर्मितां विश्वकर्मणा ।
लङ्कां तद्वचसा प्रापुः शङ्कां खिन्नां समन्ततः ॥ ४९ ॥
तस्यां वसद्भिस्तैर्दीप्तप्रतापैर्विजिताः सुराः ।
ययुः स्वर्गं समुत्सृज्य प्राणरक्षाकृतक्षणाः ॥ ५० ॥
गन्धर्वपुत्रिकास्तिस्रः प्रापुस्ते दीप्तचन्द्रिकाः ।
विभवे सर्वरत्नानामयत्नेनैव संगमः ॥ ५१ ॥
तासां तु सुकृती नाम ज्येष्ठा माल्यवतः प्रिया ।
पुत्रानजनयद्वीरान्युधि ये निहितास्त्वया ॥ ५२ ॥
वज्रमुष्टिर्विरूपाक्षः सुप्तघ्नो दुर्मुखस्तथा ।
मद्गुमान्यज्ञकोपश्च कन्या चैकानिलाधिकाम् ॥ ५३ ॥
सुमाली केतुमत्याश्च पुत्रान्प्राप्य बलाधिकात् ।
प्रहस्तः कम्पनश्चण्डो विकटः कङ्कटामुखः ॥ ५४ ॥

धूम्राक्षः कम्पनो ह्रादी सुपार्श्वः प्रघसस्तथा ।
ह्रासवर्णश्च बलवानिति तुल्यपराक्रमाः ॥ ५५ ॥
पुष्पोत्कटा केकसी च वाका कुम्भीरसा तथा ।
चतस्रः कन्यकाः श्लाघ्या बभूवुर्मृगलोचनाः ॥ ५६ ॥
अभवन्वसुधाख्यायां चत्वारो धर्मवर्तिनः ।
अनिलानिलसंपातिहराख्या मालिनः सुताः ॥ ५७ ॥
एतैर्विभीषणामात्यैः सत्वगाम्भीर्यसागरैः ।
यशश्च युद्धविपुलं प्राप्तं दुष्कर्म संस्कृतात्[1] ॥ ५८ ॥
एवं प्रविसृते तेषामक्षये रक्षसां कुले ।
सुराणां संचुकोच श्रीः पद्मिनीव हिमाहता ॥ ५९ ॥
ब्रह्मयज्ञद्विषां तेषां भयेन महतार्दिताः ।
त्रिदशाः शरणं जग्मुर्देवदेवं पिनाकिनम् ॥ ६० ॥
पक्षमपातात्सुकेशस्य जगतामप्यनुग्रहात् ।
दोलायितमनाः क्षिप्रं तानुवाच वृषध्वजः ॥ ६१ ॥
ते सुकेशस्य तनयाः कथं वर्ध्याः[2] स्वयं मम ।
कार्येऽस्मिन्कुशलो विष्णुरर्थ्यतामसुरान्तकः ॥ ६२ ॥
अथ त्रिनेत्रस्य गिरा गीर्वाणा देवमच्युतम् ।
विष्णुं शरणमभ्येत्य राक्षसेभ्यो भयं जगुः ॥ ६३ ॥
ततस्तेषां प्रपन्नानामभयं भूतभृद्विभुः ।
ददौ नारायणो येन तत्यजुर्मनसो ज्वरम् ॥ ६४ ॥
चारैस्त्रिदशवृत्तान्तं सर्वं विज्ञाय माल्यवान् ।
उवाच भ्रातरौ धीमानिति चिन्ताविचक्षणः ॥ ६५ ॥
श्रुतमस्माभिरन्विष्य यथा देवेन चक्रिणा ।
दत्तमस्मद्भयार्तानामभयं त्रिदिवौकसाम् ॥ ६६ ॥
अस्मदभ्यधिकः पूर्वं येन ते दानवर्षभाः ।
प्रतिबिम्बभयेनेव चक्रधारां प्रवेशिताः ॥ ६७ ॥

१. 'क्षया' शा०. २. 'ध्या' शा०.

स दैत्यदहनो विष्णुः प्रभविष्णुर्वधे द्विषाम् ।
संधेयः सर्वथास्माकं स्पृहा यद्यस्ति जीविते ॥ ६८ ॥
योद्धुमिच्छन्ति ते मूढा हरिणा हरिणा इव ।
दूरात्साचीकृताक्षेण ये कृतान्तेन र[1]क्षिताः ॥ ६९ ॥
अनागतं बलं वेत्ति यः संचिन्त्य बलाबलम् ।
अप्रमादोपगूढस्य य[2]स्यैता निर्भया दिशः ॥ ७० ॥
दूरारूढप्रभावेषु न कुर्यादुद्धतं शिरः ।
उत्पतन्निपतत्येव सिंहो मेघजिगीषया ॥ ७१ ॥
इति माल्यवतो वाक्यं श्रुत्वा श्रीरक्षणक्षमम् ।
सुमालिमालिनौ वीरौ सभ्रूभङ्गं तमूचतुः ॥ ७२ ॥
हुतं दत्तं च भुक्तं च जिताश्च यदि विद्विषः ।
किमन्यत्कृतकृत्यानामस्माकमवशिष्यते ॥ ७३ ॥
निधनं धातुरायत्तं जयो भुजयुगानुगः ।
चित्तोचितानि वित्तानि भा[3]ग्ययुक्तानि देहिनाम् ॥ ७४ ॥
लोभोऽभिमाने न धने तृष्णा यशसि नायुषि ।
एतावदेव महतां वीरव्रतमखण्डितम् ॥ ७५ ॥
मानमूलस्य यशसः परिरक्षैव जीवनम् ।
कृतान्तेन कृता कस्य मुहूर्तं[4] हस्तधारणा ॥ ७६ ॥
हरिश्चक्रं गदा वास्तु वस्तु तन्न नवं युधि ।
परीक्षा क्रियतां तस्य उभयोर्विक्रमेन च ॥ ७७ ॥
वराहकेसरिच्छन्नप्रकारैर्निघ्नता रिपून् ।
तेनात्मानः प्रकटितौ पृष्ठ्युद्धेष्वशक्तता ॥ ७८ ॥
व्याजध्वजे बलिजये त्रैलोक्याक्रान्तिकारिणा ।
अपवादः स्वहस्तेन लिखितस्तेन शाश्वतः ॥ ७९ ॥
इत्युक्त्वाग्रजमव्यग्रौ सै[5]न्येन महता वृतौ ।

---

१. 'ल' शा०. २. 'त' शा०. ३. 'ग्यायत्तानि' शा०. ४. 'ताः स्पृष्टा' शा०.
५. धैर्येण च महावलौ । सैन्येन सहितौ युद्धं जग्मतुस्तौ सुरालयम् ॥' शा०.

तेनैव सहितं योद्धुं जग्मतुस्तौ सुरालयम् ॥ ८० ॥
सुकेशितनयैर्वीरैर्निरुद्धे स्वर्गवर्त्मनि ।
उत्पातशतसंबाधा चकम्पे भुवनत्रयी ॥ ८१ ॥
ततो नवघनश्यामस्तडित्पुञ्जोपमांशुकः ।
ऊह्यमानः सुपर्णेन सपक्षेणेव मेरुणा ॥ ८२ ॥
[1]शङ्खचापगदाखड्गप्रभापरिकरैः करैः ।
किरन्निव प्रतापाग्निं मुरारिः प्रत्यभाषत ॥ ८३ ॥
अथ क्षपाचरोत्सृष्टशरनीहारपीडिताः ।
भीता इव ययुः क्वापि निरालोका दिशो दश ॥ ८४ ॥
ततो युद्धाब्धिपूर्णेन्दुरट्टहासो जयश्रियः ।
ननाद विष्णुना शङ्खः प्राणेन परिपूरितः ॥ ८५ ॥
[2]तेनायुधानि दीप्तानि शब्देन क्षोभकारिणा ।
घट्टितानीव चेतांसि पेतुर्मूर्तानि रक्षसाम् ॥ ८६ ॥
ततो विविशुराश्रान्ताः शरीराणि सुरद्विषाम् ।
शराः शार्ङ्गसमुद्गीर्णाः प्रदीप्ताः प्राणहारिणः ॥ ८७ ॥
प्रभग्ने राक्षसबले तार्क्ष्यपक्षानिलाहते ।
मेघसङ्घ इव स्रस्ते त्रस्ते ग्रस्त इवेषुभिः ॥ ८८ ॥
सुमाली विष्णुमभ्येत्य तूर्णं निर्विविरैः शरैः ।
अदृश्यं विदधे व्याप्तं महाद्रुममिवाण्डजैः ॥ ८९ ॥
ततः सुमालिसूतस्य शरेण रुचिरं शिरः ।
हरिर्जहार येनासौ हृतो दूरं ययौ हयैः ॥ ९० ॥
राक्षसे विद्रुते तस्मिन्मालिनः शरवर्षिणः ।
रथं धनुः किरीटं च चिच्छेद मधुसूदनः ॥ ९१ ॥
विरथः स समादाय दीप्तहेमाङ्गदां गदाम् ।
जघान गरुडं मूर्ध्नि येनाभूत्स पराङ्मुखः ॥ ९२ ॥

---

१. 'च' शा०. २. 'तत्रायुधानां दीप्तानां' शा०. ३. 'वाण्डजैः' शा०.

चक्रप्रान्तानलज्वालाकपिलीकृतदिक्तटम् ।
ततश्चक्रं ससर्जास्मै कुपितः कैटभान्तकः ॥ ९३ ॥
भ्रुकुटीकुटिलं तेन कृतमुद्यतकुण्डलम् ।
निपपात शिरः स्फारवल्गिनो हेममालिनः ॥ ९४ ॥

इति मालिवधः ॥ २ ॥

पतितं राक्षसा वीक्ष्य मालिनं भुजशालिनम् ।
दुद्रुवुः पांशुनिचयाः पवनप्रेरिता इव ॥ ९५ ॥
पृष्ठतो वध्यमानास्ते गदाचक्रासिसायकैः ।
छिन्नस्कन्दोदरग्रीवा निपेतुर्लवणाम्भसि ॥ ९६ ॥
स्वसैन्यं क्षीणमालोक्य क्रोधात्मा तोषमाल्यवान् ।
उवाच शरनिर्भिन्नः परावृत्यासुरान्तकम् ॥ ९७ ॥
अहो नु वीरमर्यादां न जानीषे जनार्दन ।
विशृङ्खलः खल इव प्रह्वेष्वतिप्रगल्भसे ॥ ९८ ॥
त्रस्तैः किमेतैर्निहतैर्मयि दर्शय पौरुषम् ।
याते वात्र हरो वायुर्गिरिमासाद्य पङ्कताम् ॥ ९९ ॥
इति माल्यवतः श्रुत्वा वचः प्रोवाच केशवः ।
वध्या ममैते सर्वत्र त्रैलोक्यभयकारिणः ॥ १०० ॥
गुणेष्वेव गुणा योज्या दोषा दोषेषु संगताः ।
अमर्यादेषु मर्यादा क्रियमाणा न शोभते ॥ १०१ ॥
इति ब्रुवाणं गोविन्दं शक्त्या विद्युत्प्रदीप्तया ।
जघानोरसि वेगेन माल्यवान्क्रोधमूर्छितः ॥ १०२ ॥
मग्नां नारायणः शक्तिं तामुद्धृत्य स्ववक्षसः ।
चिक्षेप राक्षसायैव चिन्तामिव दिवौकसाम् ॥ १०३ ॥
मूर्छाविनष्टसंज्ञोऽथ निर्भिन्नहृदयस्तथा ।
चिरेण जीवितं प्राप्य राक्षसः शूलमादधे ॥ १०४ ॥

---

१. 'प्राप्तवार्तो' शा०. २. 'पु' शा०. ३. 'ततः क्रुधाकुलो रक्षः शक्तिं चिक्षेप विष्णवे। क्षणमात्रं ममो हासो हृदये ताडितो यया ॥' इति शा० पुस्तके अधिको लिखितः.

स दीप्तशूलकपिलः शूलपाणिरिवापरः ।
वैनतेयमभिद्रुत्य मुष्टिना मूर्ध्न्यताडयत् ॥ १०५ ॥
क्रुद्धस्याथ सुपर्णस्य पक्षवातेन राक्षसाः ।
सुमाल्यमाल्यवान्मुख्याः क्षिप्ता जग्मुर्दिशो दश ॥ १०६ ॥
ततो लङ्कां परित्यज्य कैटभारिभयार्दिताः ।
पातालं व्यालकलिलं विविशुस्ते निशाचराः ॥ १०७ ॥

इति राक्षसभङ्गः ॥ ३ ॥

एते निशाचरा घोराः ख्याताः सालकटाः कटाः ।
पौलस्त्यास्तु परे विष्णुमूर्तिना ये त्वया हताः ॥ १०८ ॥
ततः कदाचित्पातालादुद्गतोऽम्बुधिसंनिभः ।
दीप्तः कुण्डलकेयूररत्नांशुशरकार्मुकः ॥ १०९ ॥
आदाय यौवनवतीं तनयामायतेक्षणाम् ।
चचार चिन्ताकुलितः सुमाली भूतले स्वयम् ॥ ११० ॥
स ददर्श समायान्तं पुष्पकेन धनाधिपम् ।
ऐश्वर्यमिव साकारं स्पृहणीयं शरीरिणाम् ॥ १११ ॥
पुलस्त्यजं गुरुं द्रष्टुं तं व्रजन्तं विलोक्य सः ।
सुतामुवाच संजातस्तनलज्जानताननाम् ॥ ११२ ॥
पुत्रे प्रधानकालस्ते तारुण्येन सहामुना ।
करोम्युपेक्षितश्चिन्तां ऋणशेष इवैष नः ॥ ११३ ॥
यचते नाधिकाः कन्यां हीनेभ्यो दीयते कथम् ।
तूर्णं प्रयाति कालश्च धिक्कन्याजन्म दुःखदम् ॥ ११४ ॥
आशेव सहसा वृद्धिं प्रयाता शोककारिणी ।
कष्टं कन्यावमानाय सेवेव महतामपि ॥ ११५ ॥
येन नैव कृता याच्ञा जाता यस्य न कन्यका ।
स्वाधीना यस्य वृत्तिश्च धन्या जीवन्ति ते त्रयः ॥ ११६ ॥
पितुर्मातुश्च दुःखाय यत्र च प्रतिपाद्यते ।
कन्या करोति संदेहदोलारूढं कुलत्रयम् ॥ ११७ ॥

---

१. 'सै' शा०.

सा त्वं गत्वानवद्याङ्गि स्वयं विश्रवसं मुनिम्।
वरदं वरय प्रीत्या यस्यायं धनदः सुतः॥ ११८॥
इति पित्रा समादिष्टा सा प्रविश्य तपोवनम्।
लज्जानता मुनेरग्रे तस्थौ कुवलयेक्षणा॥ ११९॥
तामुवाच मुनिर्दृष्ट्वा रूपलावण्यविस्मितः।
कस्य त्वं चन्द्रवदने किमर्थं वनमागता॥ १२०॥
सावदद्भगवन्सर्वं जानीहि ज्ञानचक्षुषा।
कथं नु त्वद्विधस्याग्रे वक्तुं कन्या प्रगल्भते॥ १२१॥
इत्युक्तः स तया ध्यानायोगेन ज्ञाततत्कथः।
तामूचे विश्रवाः सुभ्रु जातं यत्ते समीहते॥ १२२॥
दारुणे मां मुहूर्तेऽस्मिन्संध्यायां त्वामुपस्थिता।
तस्मात्ते दारुणाचारः क्रूरः पुत्रो भविष्यति॥ १२३॥
श्रुत्वैतत्साब्रवीत्कान्ता प्रणिपत्य महामुनिम्।
कथं मे त्वत्प्रसादस्य सदृशो दारुणः सुतः॥ १२४॥
तामुवाच मुनिः प्रीत्या पश्चिमस्ते भविष्यति।
असूत तनयं श्यामं मणिवाक्योर्जिताशयम्।
ब्रह्मण्यो गुणवान्पुत्रः सदाचारो वरानने॥ १२५॥
इति पुष्पोत्कटा प्रीत्या मुनिना भाषिता रहः।
कालेन कालसंकाशमसूत सुतमुत्कटम्[1]॥ १२६॥
दशास्यो विंशतिभुजो दीप्तास्ये कज्जलत्विषि।
उत्पातसदृशे तस्मिञ्जाते जगदकम्पत॥ १२७॥
वर्धमाने दशग्रीवे घोररूपा क्षपाचरी।
अतिप्रमाणमपरं कुम्भकर्णमजीजनत्॥ १२८॥
पश्चिमोऽप्यभवत्तस्या यथोक्तो मुनिना सुतः।
सदाचार इव श्लाघ्यः सत्वशीलो विभीषणः॥ १२९॥

1. 'तमूर्जवलमुत्क' ख०.

तेषु प्रवर्धमानेषु राक्षसेषु तपोवने ।
आययौ पितरं द्रष्टुं श्रीमान्वैश्रवणः स्वयम् ॥ १३० ॥
तं दृष्ट्वा पुष्पकारूढं निवासं सर्वसंपदाम् ।
दशग्रीवं समभ्येत्य जननी विस्मितावदत् ॥ १३१ ॥
एष पुत्र तव भ्राता विभवो मूर्तिमानिव ।
कुबेरस्तपसा भाति तिग्मांशुरिव तेजसा ॥ १३२ ॥
भ्रातृत्वे वत्स तुल्येऽपि श्रीमानेष त्वमीदृशः ।
आत्माधीनस्य तपसः फलमेता विभूतयः ॥ १३३ ॥
इति मातुर्वचः श्रुत्वा सानुजो दशकन्धरः ।
जगाम गोकर्णतटं तपसे कृतनिश्चयः ॥ १३४ ॥
ग्रीष्मे पञ्चाग्निसंतप्तः शीते सलिलमध्यगः ।
दशवर्षसहस्राणि कुम्भकर्णोऽभवद्व्रती ॥ १३५ ॥
ऊर्ध्वबाहुशिरः सूर्यन्यस्तचक्षुर्विभीषणः ।
दशैवाब्दसहस्राणि तपश्चक्रे प्रसन्नधीः ॥ १३६ ॥
दिव्ये वर्षसहस्रेऽथ प्रयाते प्रथमं शिरः ।
निराहारः स्वयं छित्वा जुहावाग्नौ दशाननः ॥ १३७ ॥
एवं सहस्रैर्वर्षाणां नवभिर्नव निश्चलः ।
हुत्वा शिरांसि दशमं स शिरश्छेत्तुमुद्ययौ ॥ १३८ ॥
ततः पितामहोऽभ्येत्य देवैः सह सविस्मयः ।
तपःफलं वरं वीर गृहाणेति तमभ्यधात् ॥ १३९ ॥
सोऽवदत्सुरगन्धर्वदैत्यकिन्नरभोगिनाम् ।
अवध्योऽहं तव वरात्तृणं मे मानुषादयः ॥ १४० ॥
इत्युक्ते दशकण्ठेन तथेत्युक्त्वा प्रजापतिः ।
स्वेच्छारूपं ददौ तस्मै शिरसां चोद्भवं पुनः ॥ १४१ ॥
ततो वरं गृहाणेति प्रेरितः पद्मजन्मना ।
धर्मे मे रमतां बुद्धिरित्युवाच विभीषणः ॥ १४२ ॥

१. 'ध्यः स्याम्' शा०.

अमरत्वं ददौ तस्मै धर्मप्रीत्या पितामहः ।
शीलेन लभ्यते सर्वं याच्ञा लज्जैव केवलम् ॥ १४३ ॥
असुराः कुम्भकर्णस्य वरदानोद्यतं ततः ।
ऊचुश्चतुर्मुखं नास्मै वरो देयस्त्वया विभो ॥ १४४ ॥
त्रैलोक्यं भक्षयन्नेष क्रूरो ब्रह्मर्षिकण्टकः ।
वरव्याजेन शापोऽस्य दीयतां विश्वशान्तये ॥ १४५ ॥
इत्यर्थितो सुरैर्ब्रह्मा स्मृत्वा देवीं सरस्वतीम् ।
जिह्वाग्रे कुम्भकर्णस्य विदधे व्यक्तवादिनीम् ॥ १४६ ॥
ततो वरं गृहाणेति स्वयमुक्तः प्रजासृजा ।
कुम्भकर्णोऽवदद्देव निद्रा मे चिरमीप्सिता ॥ १४७ ॥
षड्भिर्मासैः प्रबुद्धस्य दिनमेकं तु भोजनम् ।
ममास्त्वित्यर्थितस्तेन तथेत्युक्त्वा ययौ विधिः ॥ १४८ ॥
प्रजापतौ वरान्दत्त्वा देवैः सह तिरोहिते ।
नोक्तं युक्तं मयेत्यासीत्कुम्भकर्णोऽतिदुःखितः ॥ १४९ ॥
एवं लब्धवराः सर्वे भ्रातरस्ते क्षपाचराः ।
श्लेष्मान्तकवनं गत्वा प्रहृष्टा रेमिरे चिरम् ॥ १५० ॥
श्रुत्वा लब्धवरान्वीरान्दौहित्रान्बलशालिनः ।
उदतिष्ठत्स पातालात्सुमाली च समाल्यवान् ॥ १५१ ॥

इति पौलस्त्योत्पत्तिः ॥ ४ ॥

प्रहस्तमारीचमुखैः सह कालकटङ्कटाः ।
ते दशग्रीवमाश्रित्य ननन्दुर्निर्भयाः सुखम् ॥ १५२ ॥
सानुगस्तं परिष्वज्य जगाद दशनांशुभिः ।
सुमाली मालिनं मानं कुलस्य क्षालयन्निव ॥ १५३ ॥
चतुर्मुखवरावाप्त्या दिष्ट्या पुत्र विवर्धसे ।
दिष्ट्या सनाथाः संवृत्ता वयं विष्णुतिरस्कृताः ॥ १५४ ॥
एकः स एव सुकृती स जातः स च जीवति ।
यस्य नाम्ना समुन्नद्धाः सर्वे जीवन्ति बान्धवाः ॥ १५५ ॥

१. 'त्रैलोक्य' शा०. २. 'स्तिभ्य' शा०. ३. 'मनेत्यासीत्कुम्भ' शा०.

वंशमुक्तामणिर्लोके कश्चिदेव स जायते ।
यस्याग्रे याति सकलं कुलमुत्तानपाणिताम् ॥ १५६ ॥
त्रिकूटविकटे लङ्का रत्नहेममयी पुरी ।
अस्माकमभवत्कान्ता संतोषजननी रतेः ॥ १५७ ॥
ममानुजे हते वीरे रणे मालिनि विष्णुना ।
भग्नेष्वस्मासु शून्यां तां लङ्कां वैश्रवणोऽविशत् ॥ १५८ ॥
सास्माकं सततं तात पाताले वसतां सताम् ।
विद्येव धीमतां लङ्कां नापैति हृदयात्क्षणात् ॥ १५९ ॥
श्रुत्वास्माभिर्वरोदारं त्वां विष्णुर्भवसंभवाः[1] ।
त्यक्तैव लङ्का शङ्का च लब्धेव हृदये कृताः ॥ १६० ॥
लङ्कां स्फाटिकसौधानां ज्योत्स्नाहासविकासिनीम्[2] ।
निद्रां नायान्ति पाताले स्मरन्त्यो राक्षसाङ्गनाः ॥ १६१ ॥
समुद्रदर्शनालक्ष्यहर्म्यस्थललनाननाम्[3] ।
लङ्कामितः कथायातां सदा शोचन्ति राक्षसाः ॥ १६२ ॥
सा धर्मेण स्वयं प्राप्ता मातामहपुरी त्वया ।
नार्हत्येव कुबेरस्तां वृद्धो नववधूमिव ॥ १६३ ॥
सुमालिवचनं श्रुत्वा दशास्यः क्ष्मां विलोकयन् ।
वित्तेशो गुरुराराध्य समभ्येत्य वदन्मुहुः ॥ १६४ ॥
ततः काले सुविपुले याते प्रथितविक्रमम् ।
प्रहस्तः प्रश्रयोपेतं दशग्रीवमभाषत ॥ १६५ ॥
विद्वानिव दुराचारः कदर्यो धनवानिव ।
न पूजते[4] जनो राजन्सप्रभावो निरुद्यमः ॥ १६६ ॥
सौभ्रात्रं गणयन्कस्मान्निजां लङ्कामुपेक्षसे ।
एकद्रव्याभिलाषेण शत्रुर्वैश्रवणस्तव ॥ १६७ ॥

---

१. 'भय' शा०. २. 'कामप्रकाशिनाम्' शा०. ३. 'गणाननाम्' शा०. ४. 'धनैः राजा' शा०.

स ते स्निग्धो यदि भ्राता लङ्कां नोज्झति किं स्वयम् ।
य एवावनतां नित्यं विजिगीषुः स बान्धवः ॥ १६८ ॥
किं न श्रुतं त्वया वीर राज्यार्थे योऽभवत्[1]क्षयः ।
सुरासुराणां भ्रातॄणां पुरा कश्यपजन्मनाम् ॥ १६९ ॥
प्रहस्त्येनेत्यभिहिते क्षणं ध्यात्वा दशाननः ।
तमुवाच [2]रवोद्भूतलङ्कालाभमनोरथः ॥ १७० ॥
गत्वा त्वमेव धनदं लङ्कां याचस्व मद्गिरा ।
प्रतिभाप्रभविष्णुस्ते संदेशः कोपयुज्यते ॥ १७१ ॥
इति शासनमादाय प्रहस्तो राक्षसप्रभोः ।
जातपक्ष इव क्षिप्रं जगाम धनदान्तिकम् ॥ १७२ ॥
स सभाभुवमभ्येत्य देवगन्धर्वसेविताम् ।
पित्रा सह स्थितं [3]देवं धनाधिपमभाषत ॥ १७३ ॥
श्लेष्मान्तकवनादेत्य त्रिकूटस्य [4]तटे स्थितः ।
अभिधत्ते दशग्रीवस्त्वां सुमालिमुखैर्वृतः ॥ १७४ ॥
त्वमेव सर्वं जानीषे यथास्माकमिमां पुरीम् ।
परद्रव्यं निजं तावद्यावन्नार्थयते परः ॥ १७५ ॥
साम्नैव त्यज्यतां लङ्का लोभशङ्का निवार्यताम् ।
निरातङ्के कुले चास्मिन्निष्कलङ्कं यशोऽस्तु नः ॥ १७६ ॥
त्वमेव धनवांल्लोके समृद्धस्त्वत्समोऽस्ति कः ।
दैवायत्तानि वित्तानि भुजाधीनस्तु विक्रमः ॥ १७७ ॥
प्रहस्तेनेत्यभिहिते नोचे किंचिदवाङ्मुखः ।
कुबेरः स्वेदसंसिक्तं ललाटं पाणिना स्पृशन् ॥ १७८ ॥
ततः प्रहस्तं निर्भर्त्स्य कुपितो विश्रवाः स्वयम् ।
उवाच साममधुरं पुत्रप्रीत्या धनाधिपम् ॥ १७९ ॥
त्यज लङ्कामिमां [5]वत्स दुराशामिव पण्डितः ।
गौरवेणाभिजानाति वरदृप्तः स राक्षसः ॥ १८० ॥

१. 'त्वयम्' शा०. २. 'न' शा०. ३. 'वीरं' शा०. ४. 'वने' शा०. ५. 'पुत्र' शा०.

दर्शने नेत्ररोगार्त्तः श्रवणे कर्णशूलिनः।
मूका विनयवाक्येषु भवन्ति विभवस्थिताः॥ १८१॥
काले सुविपुलेऽप्यस्मिन्न स दृष्टो महाशयः।
यः सोन्मादो न संपद्भिर्विपद्भिर्वा न विक्लवः॥ १८२॥
गौरिवाचाररहितैर्निर्विचारैः प्रमादिभिः।
क्षुद्रैर्गतत्रपैर्वैरं कः कुर्याद्यो न तद्विधः॥ १८३॥
अस्ति चारुतरः श्रीमान्स्फारस्फटिकभूधरः।
लभते तिमिरं यस्य नावकाशं गुहास्वपि॥ १८४॥
शशाङ्कतिलकं कृत्वा तारहारविभूषिता।
तस्मिन्विलोकयत्येव द्यौर्दर्पणमिवामलम्॥ १८५॥
तटी मन्दाकिनी यस्य कचत्काञ्चनपङ्कजा।
भाति वक्षसि मालेव लीलालोला महीभृतः॥ १८६॥
तत्रोचितो निवासस्ते विलासवसतेः श्रियः।
गच्छावः सहितौ क्षिप्रमित्युक्त्वा विरराम सः॥ १८७॥
ततो धनपतिर्गत्वा सद्भृत्यबलवाहनः।
रत्नाङ्कामलकां नाम कैलासे निर्ममे पुरीम्॥ १८८॥
प्रहस्तवाक्याद्विज्ञाय यातं वैश्रवणं स्वयम्।
अभिषेकोत्सवं चक्रे लङ्कां लब्ध्वा दशाननः॥ १८९॥
स ददौ कालखञ्जाय दानवाय निजानुजाम्।
विद्युज्जिह्वाभिधानाय यत्र शूर्पणखाभिधाम्॥ १९०॥

इति लङ्काप्रवेशः॥ ५॥

ततः कदाचिन्मृगयारसाकृष्टो दशाननः।
ददर्श कानने कन्यासहितं दानवं मयम्॥ १९१॥
पौलस्त्येन स पृष्टोऽथ वनवासस्य कारणम्।
उवाच तस्य भावेन तेजसा तस्य विस्मितः॥ १९२॥

---

१. 'ननम्' शा. २. 'रत्नाङ्कामलकां नाम यत्र सूर्पणखाभिधः' इत्यधिकम्. ३. 'स प्रभावेण' शा०.

दानवोऽहं मयो नाम हेमा नाम ममाप्सरा ।
बभूव वल्लभा यस्याः कन्येयं सुन्दरी सुता ॥ १९३ ॥
याते वर्षसहस्रेऽथ यस्यां सक्तस्य मे सदा ।
वियोगो दैवयोगेन दुःसहः सुचिरादभूत् ॥ १९४ ॥
तत्संभोगसुखोल्लासलीलाविभ्रमसाक्षिणीम् ।
ज्वलितामिव पश्यामि हेमहर्म्यावलीं गृहे ॥ १९५ ॥
चन्द्रोदयः सुहृद्गोष्ठी हर्म्ये वीणा मधूत्सवः ।
सत्यं सुखाय कल्पन्ते न वियुक्तस्य चेतसः ॥ १९६ ॥
इयं मन्दोदरी कन्या योग्येव तव वल्लभा ।
स तां संभाषणाचारैर्जायते हि कुलोन्नतिः ॥ १९७ ॥
अस्यास्तौ भ्रातरौ वीरौ दैत्यावपरमानतः ।
त्रैलोक्यविजयोदग्रौ मायावी दुर्मतिस्तथा ॥ १९८ ॥
इत्युक्त्वा दशकण्ठस्य नाम कर्म कुलं वयः ।
श्रुत्वा ददौ तां विधिना मयः कन्यामनिन्दिताम् ॥ १९९ ॥
शक्तिं च दीप्तरत्नाङ्कां मूर्तां शक्तिमिवोत्कटाम् ।
तस्मादवाप पौलस्त्यः सौमित्रिमवधीद्यया ॥ २०० ॥
स प्रविश्योत्सवस्मेरलङ्कां मन्दोदरीसखः ।
कुलोचितः परिणयो भ्रातोरविहितोऽभवत् ॥ २०१ ॥
वैरोचनस्य दौहित्रीं वज्रज्वालाभिधां ततः ।
आनिनाय स यत्नेन कुम्भकर्णाय कन्यकाम् ॥ २०२ ॥
गन्धर्वाधिपतेः पुत्रीं शैलूषस्य सुलोचनाम् ।
विभीषणाय स ददौ धर्मचारानुवर्तिनीम् ॥ २०३ ॥
जातां जलागमे दृष्ट्वा तां माता मनसेऽवदत् ।
सरो मा वृद्धिमेहीति तेन सा सरमाभवत् ॥ २०४ ॥

इति रावणादिविवाहः ॥ ६ ॥

---

१. 'विस्रम्भ' शा०. २. 'दुंदुभि' शा०. ३. 'त्रिरत्नधोद्यया' शा.० ४. 'मार्गा' शा०.

तेष्वेवं कृतदारेषु देवी मन्दोदरी सुतम् ।
असूत नूतना लक्ष्मीरहंकारमिवोन्नतम् ॥ २०५ ॥
स ननाद यथा मेघा घोषघट्टितदिक्तटाः ।
मेघनादेति नामास्य तदा चक्रे दशाननः ॥ २०६ ॥
स ययौ सहसा वृद्धिं पितुर्मूर्त इवोदयः ।
येनेन्द्रविजयोदग्रं स्वनाम्ना लिखितं यशः ॥ २०७ ॥
अथाविवेश हृदयं निद्रा नयनवर्त्मना ।
मोहाय कुम्भकर्णस्य प्रौढामरवधूरिव ॥ २०८ ॥
तस्य हेममणिस्तम्भं षड्व्यामशतमग्रजः ।
ततोऽपि षड्गुणायामं निद्रागृहमकारयत् ॥ २०९ ॥
ततो रत्नगृहे तस्य तस्मिन्कैलाससंनिभे ।
ययुर्वर्षसहस्राणि सुखसुप्तस्य रक्षसः ॥ २१० ॥

इतीन्द्रजिज्जन्म ॥ ७ ॥

निद्राभिभूते दुर्वृत्ते प्रजापुण्यैः क्षपाचरैः ।
सक्तो बभूव पौलस्त्यः स्वर्गोद्यानविलोडने ॥ २११ ॥
स सुरासुरसंहारदीक्षितो राक्षसेश्वरः ।
विश्वक्षयमतिं चक्रे कालः काल इवोत्थितः ॥ २१२ ॥
तेन भग्ने त्रिभुवने स पावनतपोवने ।
विद्रुतेषु दशाशेषा त्रिदशेषु दिशो दश ॥ २१३ ॥
व्याप्तैर्वृषमनोद्भूतैर्भूतले भूतलोहितैः ।
तमो जजाले पाताले प्रज्वालित इवाहिभिः ॥ २१४ ॥
निःस्वाध्यायवषट्कारे समुत्पन्ने क्रियाक्रमे ।
विकारे निष्प्रतीकारे गते रक्षःप्रकारताम् ॥ २१५ ॥
अनुग्रहाय लोकानां भूतले स्वकुलस्य च ।
लङ्कां दूतं दशास्याय विससर्ज धनेश्वरः ॥ २१६ ॥

---

१. 'रत्नंकार' क. २. 'परवधू' शा०.

स पौलस्त्यपुरीं गत्वा दूतः प्राप्य विभीषणम् ।
यथायुक्तं निवेद्यास्मै विवेशास्थानमन्दिरम् ॥ २१७ ॥
कुबेरगौरवात्तत्र संप्राप्तकनकासनः ।
स प्रणम्य दशग्रीवं जगाद जगतां हितम् ॥ २१८ ॥
आह त्वां भ्रातरं प्रीत्या देवो वैश्रवणः स्वयम् ।
श्रूयतामवधानेन श्रुत्वा सद्भिर्विचार्यताम् ॥ २१९ ॥
इमा धर्मद्रुमोद्भूता विपुलाः फलसंपदः ।
नापुण्यवद्भिर्लभ्यन्ते विजयव्यञ्जनाः श्रियः ॥ २२० ॥
काकतालीययोगिन्यः सर्वस्यैव विभूतयः ।
लब्धानां रक्षणे त्वासां विरलः कुशलो जनः ॥ २२१ ॥
कीर्तयः पुण्यशीलस्य सदाचारस्य संपदः ।
विद्याप्रज्ञाप्रगल्भस्य भवन्ति स्थिरयौवनाः ॥ २२२ ॥
स्पृहणीया जगत्यस्मिंस्तस्यैव प्रभविष्णुता ।
निर्भयं सर्वभूतानि यं समाश्रित्य शेरते ॥ २२३ ॥
धिक्तस्य निरपेक्षस्य विभूतिं रौद्रकर्मणः ।
दीप्तादिव चितावह्नेर्यस्मादुद्विजते जनः ॥ २२४ ॥
आचारः साधुवादाय विभवो विनयाय च ।
शक्तिः परोपकाराय भवत्युज्ज्वलजन्मनाम् ॥ २२५ ॥
व्ययेन ज्ञायते वित्तं शीलेन ज्ञायते कुलम् ।
सत्येन ज्ञायते सत्त्वं धर्मेण ज्ञायते श्रुतम् ॥ २२६ ॥
त्रयं परस्परं क्षिप्तं तुल्यमेवं प्रजायते ।
पापाज्जनापवादश्च तस्माच्च विभवक्षयः ॥ २२७ ॥
न तत्कुर्यात्कुले जातः श्रुतवान्विश्रुतो जनः ।
येनोन्नतपदभ्रष्टो याति प्रत्युत वाच्यताम् ॥ २२८ ॥
हसन्तो हेलया कर्म तत्कुर्वन्ति प्रमादिनः ।
जन्मान्तरशतैरन्ते शोचन्ते न भवन्ति यत् ॥ २२९ ॥

यत्त्वया स्वर्गविध्वंसे कृतं किंचिदसांप्रतम् ।
अधुना संयमेनास्तु तस्य प्रक्षालनक्रिया ॥ २३० ॥
स्वर्गोद्यानानि भग्नानि मुनयो निहताश्च यत् ।
किमेतदुचितं भ्रातः कुले कमलजन्मनः ॥ २३१ ॥
प्रजाक्षये यदि भवेत्सक्तो विश्रवसः सुतः ।
तद्राज्याभिजनश्लाघ्या कस्यान्यस्य भविष्यति ॥ २३२ ॥
वारितोऽपि मया पूर्वं पुनरप्येव वार्यते ।
राक्षसेऽस्मिन्निपतिते निपतत्यश्रुबिन्दवः ॥ २३३ ॥
चिन्त्यते निधनोपायः शङ्कितैस्त्रिदशैस्तव ।
व्रतात्प्रतिनिवृत्तेन चिरात्सर्वं मया श्रुतम् ॥ २३४ ॥
मया हिमाद्रिशिखरे दृष्टः शीतांशुशेखरः ।
देवः प्रीतिसमासक्तः सतीप्रणयकेलिषु ॥ २३५ ॥
तत्र कोऽयमिति स्फारलोचनं विस्मयान्मया ।
निक्षिप्तमम्बिकागात्रे निर्लेपेनान्तरात्मना ॥ २३६ ॥
ततो देव्याः प्रभावेण तद्वामं मम लोचनम् ।
संपूरितं विषेणेव निष्प्रभं पिङ्गतां ययौ ॥ २३७ ॥
अथो गत्वा मया तीव्रं मौनिना तत्कृतं तपः ।
येन मां स्वयमभ्येत्य बभाषे भगवान्भवः ॥ २३८ ॥
अहोरात्रं व्रतमिदं दुश्चरं चरितं त्वया ।
मया कृतं पुरा चैतत्तृतीयो नोपलभ्यते ॥ २३९ ॥
व्रतस्यास्य प्रभावेण सख्यमस्तु मम त्वया ।
एकपिङ्गेक्षणो नाम्ना विश्रुतश्च भविष्यति ॥ २४० ॥
इत्युक्त्वा प्रययौ देवः प्रीतिमान्वृषभध्वजः ।
ततस्तपोवनादेत्य श्रुतं त्वच्चरितं मया ॥ २४१ ॥
तस्मादस्मान्निवर्तस्व कर्मणः कुलदूषणात् ।
कस्मादकस्माद्बुद्धिस्ते कुपथेनैव धावति ॥ २४२ ॥

इति दूतवचः श्रुत्वा क्रोधधूम्रारुणेक्षणः ।
निष्पिष्य पाणिना पाणिं तं जगाद दशाननः ॥ २४३ ॥
अहो धनाधिनाथोऽसौ ज्येष्ठो लोकहिते रतः ।
आत्मसंभावितो वक्तुं दम्भारम्भात्प्रगल्भते ॥ २४४ ॥
स देवोऽन्यत्र नास्मासु धनं कस्य न विद्यते ।
ततोऽप्यभ्यधिका ज्येष्ठा भृत्यवर्गे मम स्थिताः ॥ २४५ ॥
अहं यशस्वी लोकेऽस्मिन्यूयमेव यशस्विनः ।
इति तात्पर्यमेवास्य वाक्यस्य स्वामिनस्तव ॥ २४६ ॥
स्वगुणख्यातये नित्यं परेषां भूषणाय च ।
प्रत्ययाय च लोकानां जिह्वा जल्पन्ति कोमलम् ॥ २४७ ॥
धनदो यदि नामासौ लोकेऽस्मिन्करुणापरः ।
तत्किं सुविपुलं वित्तं न दीनेभ्यः प्रयच्छति ॥ २४८ ॥
न देवानां न चास्माकं हितं तस्य प्रयोजनम् ।
युक्त्या वदति संदेशैः सख्यं देवेन शूलिना ॥ २४९ ॥
सुरार्थे यदसौ वक्ति तत्तेषां विप्रिये स्थितः ।
अद्यैव तद्वाक्यरुषा करोम्यविबुधं जगत् ॥ २५० ॥
यदसौ स्वगृहे दृप्तः प्रागल्भ्याद्दूत भाषसे ।
किं तच्छुक इव श्रुत्वा दूत त्वमभिभाषसे ॥ २५१ ॥
वध्यानां लोकपालानां कुबेरोऽस्तु पुरःसरः ।
अद्य कैलासशिखरे रथो मे समनोरथः ॥ २५२ ॥
इत्युक्त्वा दूतमुत्कृत्य स्वयं खड्गेन राक्षसः ।
अमात्यैः सहितः षड्भिः प्रतस्थे सानुगो रथैः ॥ २५३ ॥
स महोदरधूम्राक्षमारीचशुकसारणैः ।
प्रहस्तेन च कैलासं सह प्राप प्रतापवत् ॥ २५४ ॥
ततो बभूव यक्षाणां राक्षसैः कूटयोधिभिः ।
युद्धं प्रलयमेघानां गर्जद्भिः स्वजनैरिव ॥ २५५ ॥

---

१. 'सत्वं' शा०.

वलिना राक्षसेन्द्रेण भग्नास्ते युधि गुह्यकाः।
भ्राता प्रभोरिति भयाद्बभूव शिथिलोद्यमः॥ २५६॥
ततः कुवेरनिर्दिष्टा निर्ययुर्यक्षराक्षसाः।
हेमरत्नोरुसंनाहा मेघाः सेन्द्रायुधा इव॥ २५७॥
तेषां प्रवृत्ते तुमुले संग्रामे खण्डितिर्मुकः(?)।
चक्रे चक्रेण मारीचं मूर्छितं गुह्यकाग्रणीः॥ २५८॥
लब्धसंज्ञोऽथ मारीचस्तं विद्राव्य भयोत्कटः।
रणे चकार यक्षाणां क्षयं रक्षःपतेः पुरः॥ २५९॥
विद्रुतेष्वथ यक्षेषु पुरीं प्राप्य दशाननः।
रत्नतोरणमुत्पाट्य जघान द्वाररक्षिणः॥ २६०॥
वध्यमानेषु यक्षेषु लब्धलक्षैः क्षपाचरैः।
धनदस्याज्ञया तूर्णं मणिभद्रः समाययौ॥ २६१॥
धूम्राक्षस्ताडितस्तेन गदया मूर्ध्नि विह्वलः।
पतिः क्षमातले वेगात्क्षणं व्यसुरिवाभवत्॥ २६२॥
स दशाननमभ्येत्य शक्तिमान्गिरिविग्रहम्।
शक्तित्रयेन भिन्नोरःकपाटपिकटं व्यधात्॥ २६३॥
ततो जघान गदया मुकुटे तं दशाननः।
लोकेऽस्मिन्विश्रुतो येन पार्श्वमौलिर्बभूव सः॥ २६४॥
मणिभद्रेऽपि विजिते वरदत्तेन रक्षसा।
निर्घोषैर्घट्टिते लोके निर्ययौ धनदः स्वयम्।
शुष्कप्रोष्ठपदायुक्तः शङ्खपद्मादिभिर्वृतः॥ २६५॥
स युद्धभुवमभ्येत्य पौलस्त्यं कुपितोऽवदत्।
पापान्निवार्यमाणोऽपि विद्वेषादिव दुर्जनः॥ २६६॥
कस्तस्य वैभवेनार्थः प्रभावेन बलेन वा।
क्षपितान्त(?)जनोच्छ्वासमलिनं यस्य जीवितम्॥ २६७॥

---

१. 'खण्डितिन्दुकः' क; 'खण्डकार्मुकः' शा०.

अहो बत न ते कश्चिदस्ति दुर्नयकृत्सुहृत् ।
विषं भक्षयतो मोहाद्यः करोति करग्रहम् ॥ २६८ ॥
शोचते नित्यशोच्यस्य किं तस्याशुचिचेतसः ।
जीवितान्तरितो यस्य नरकेषु क्षयः क्षयः ॥ २६९ ॥
शरीरावधि जन्तूनां स्वाधीने शुभदुष्कृते ।
समुत्तीर्णः समुत्तीर्णः पतितः पतितस्ततः ॥ २७० ॥
पापी निरयगामी त्वं न मे संभाषणोचितः ।
इत्युक्त्वा विमुखान्त्राणैः स चक्रे तस्य मन्त्रिणः ॥ २७१ ॥
ताडितस्तेन गदया मूर्ध्नि नक्तंचरेश्वरः ।
नाकम्पत दुराचारो निन्दयेवोग्रपातकी ॥ २७२ ॥
दिव्यास्त्रदीप्तिदुष्प्रेक्ष्ये प्रवृत्ते समरे तयोः ।
युयुधे राक्षसपतिर्मायारूपसहस्रकृत् ॥ २७३ ॥
ततः शस्त्रास्त्रवर्षेण विक्षिताङ्गो धनप्रभुः ।
पपात शोणितासिक्तः स्यन्दने मूर्छितः क्षणम् ॥ २७४ ॥
शङ्खपद्मादिभिस्तस्मिन्नीते नन्दनकाननम् ।
राक्षसेन्द्रो जहारास्य पुष्पकं रत्नपुष्पकम् ॥ २७५ ॥
इति कुबेरनिर्जयः ॥ ८ ॥

जित्वा वैश्रवणं श्रीमान्दशग्रीवः सहानुगम् ।
व्रजन्नवाप कौमारं रौक्मं शरवनं महत् ॥ २७६ ॥
तत्रास्य व्रजतो व्योम्नि स्तब्धतां पुष्पकं ययौ ।
चित्रस्थमिव निस्पन्दपताकाकिंकिणीकुलम् ॥ २७७ ॥
प्रतिग्रहाद्विमानस्य चिन्ताविस्मयनिश्चलम् ।
तमभ्येत्योद्धतगतिः प्राह माहेश्वरो गणः ॥ २७८ ॥
भोः पौलस्त्यगतिर्नेह सुरसिद्धर्षिभोगिनाम् ।
विमानानां स्वयं देवः क्रीडत्यत्र त्रिलोचनः ॥ २७९ ॥
दर्पो मोहः प्रमादो वा तव वा बलचापलम् ।
भवान्स्तम्भितजृम्भारिभुजस्तम्भं न वेत्सि यत् ॥ २८० ॥

इति धीरं गणेनोक्तः प्रकोपकलुषेक्षणः ।
कोऽसौ क्वास्ते त्रिनयनः प्रोवाचेति स निःश्वसन् ॥ २८१ ॥
पुष्पकादवतीर्याथ शैलमूलमुपेत्य सः ।
नन्दिरुद्रं ददर्शाग्रे स्थितं देवस्य धूर्जटेः ॥ २८२ ॥
तं शूलहस्तमालोक्य भासुरं वानराननम् ।
मुमोचाशनिनिर्घोषमट्टहासं दशाननः ॥ २८३ ॥
तदाट्टहासकुपितः प्रोवाचाञ्चितशेखरः ।
उद्यम्य तर्जनीमग्रे नन्दी भैरवविग्रहः ॥ २८४ ॥
वानराननमालोक्य सोन्मादं हसितं त्वया ।
त्वत्कुले वानरकुलान्मृत्युरेव भविष्यति ॥ २८५ ॥
इति ब्रुवाणं दर्पान्धस्तमनादृत्य राक्षसः ।
गतिग्रहरुषा चक्रे कैलासोन्मूलने मतिम् ॥ २८६ ॥
स शैलमूले विपुले विन्यस्य भुजकाननम् ।
ददौ स्कन्दशिलाबन्धनिर्घोषोद्भूतपावकम् ॥ २८७ ॥
तद्भुजोत्तालपातालनीलमूलशिलातलः ।
चिरं चचाल कैलाशः सविलास इव द्विपः ॥ २८८ ॥
विशृङ्खलपरिभ्रष्टं निर्जलं वारि रक्षसः ।
पीनांसशिखरे प्राप स्फारहारप्रकारताम् ॥ २८९ ॥
शैलकम्पाकुलवधूपरिष्वङ्गोत्सवप्रदः ।
विद्याधराणामभवद्वामाचारोऽपि रक्षसः ॥ २९० ॥
ततो विहस्य भगवान्पादाङ्गुष्ठेन लीलया ।
अपीडयन्मृडः शैलं घूर्णमानमहाद्रुमम् ॥ २९१ ॥
गम्भीरभूधरभरप्राग्भारपरिपीडितः ।
विरुराव दशग्रीवः खण्डिताङ्गदमण्डलः ॥ २९२ ॥
भुजावपीडनरुषा तस्यारावेण रक्षसः ।
ससुरासुरगन्धर्वा विचचार जगत्त्रयी ॥ २९३ ॥

शंकरस्तेन शब्देन परितुष्टस्तमभ्यधात् ।
प्रायेणोत्सिक्तचरितः प्रभूणां वल्लभो जनः ॥ २९४ ॥
प्रीतोऽस्मि तव नादेन बलेन च दशानन ।
पुष्पकेन यथाकामं गच्छ स्वेच्छाविलासकृत् ॥ २९५ ॥
त्रैलोक्यरावणाच्छब्दात्त्वं भविष्यसि रावणः ।
इति स्वयं भगवता कृतनामा निशाचरः ।
पुनः पुष्पकमारुह्य विचचार महीतले ॥ २९६ ॥

इति कैलासोल्लासकम् ॥ ९ ॥

स चलन्भूतले वीरान्क्षत्रियान्[1]बलशालिनः ।
जघानाहूय समरे पौरुषादपराङ्मुखान् ॥ २९७ ॥
ततस्तुहिनशैलस्य शृङ्गमारुह्य रावणः ।
ददर्शैकां तपस्यन्तीं कन्यां लावण्यकौमुदीम् ॥ २९८ ॥
संलक्षदक्षिणकुचां भोगे[2]कृष्णाजिनावृताम् ।
दिवं विनिर्यदर्धेन्दुबिम्बा[3]म्बुधिमतीमिव ॥ २९९ ॥
संपूर्णशर्वचापस्य पुष्पचापस्य जीवनीम् ।
वरावासितपःसक्तां गिरिराजसुतामिव[4] ॥ ३०० ॥
स्फाटिकेनाक्षसूत्रेण कलितां ललिताननाम् ।
मूर्तां पूर्णेन्दुनक्षत्रराजितां रजनीमिव ॥ ३०१ ॥
दोर्मृणालीलतां पाणिसुप्ताब्जां लोचनोत्पलाम् ।
संचारिणीमिवायातां नन्दिनीं भूतपद्मिनीम् ॥ ३०२ ॥
तां दृष्ट्वा विस्मयावेशनिष्पन्दः क्षणदाचरः ।
कासि कस्येति पप्रच्छ विच्छायवदनः क्षणम् ॥ ३०३ ॥
सा तमूचे कृतातिथ्या मिथ्याचारं निशाचरम् ।
दर्शयन्तीं तपःपुण्यं दन्तांशुनिवहैरिव ॥ ३०४ ॥
अभूत्कुशध्वजो नाम बृहस्पतिसुतो मुनिः ।
तस्याध्ययनसक्तस्य जाताहं वाङ्मयी सुता ॥ ३०५ ॥

---

१. 'न्भुज' ख–शा०. २. 'भोगतृष्णा' शा०. ३. 'बिम्बां बुधवतीमिव' शा०.
४. 'न नाम्' ख.

साहं देववती नाम सुरगन्धर्वकिंनरैः ।
याचिता सिद्धसाध्यैश्च न च मां प्रददौ पिता ॥ ३०६ ॥
सोऽवदद्विष्णुरेवैकस्तुल्यो मे दुहितुः पतिः ।
कौस्तुभाभरणस्यैषा वनमालेव शोभते ॥ ३०७ ॥
ततो दैत्याधिनाथेन जम्बुना पापचेतसा ।
कालेनेव प्रसुप्तो मे रजन्यां निहतः पिता ॥ ३०८ ॥
तेनैव सह दुःखाग्नितप्तामिव चितां सती ।
बन्धुबाष्पौघजननी प्रविष्टा जननी मम ॥ ३०९ ॥
पितुर्मनोरथेनादौ स्वसंकल्पेन चाकुला ।
करोम्येतदहं तीव्रं तपो नारायणार्थिनी ॥ ३१० ॥
जानाम्यहं त्वां पौलस्त्य तपसा दिव्यचक्षुषा ।
इत्युक्त्वा प्रश्रयोपेतं विरराम सुमध्यमा ॥ ३११ ॥
पुष्पकादवतीर्याथ मन्मथाकुलिताशयः ।
तां समभ्येत्य पौलस्त्यः स्रस्तधैर्योऽभ्यभाषत ॥ ३१२ ॥
अहो विरुद्धं लोलाक्षि तव व्यवसितं श्रुतम् ।
तपोऽर्हति कथं तीव्रमिदं रूपमिदं वयः ॥ ३१३ ॥
तपः संयमसिद्धानां वृद्धानामेव शोभते ।
वपुः पीनस्तनयुगाभोगसंभोगमिच्छति ॥ ३१४ ॥
यदि त्वं तापसा सुभ्रु स्वाधीना न मनोभुवः ।
तत्कस्यैताः कृते जाताश्चन्द्रोद्यानमधुश्रियः ॥ ३१५ ॥
इदं कान्ताकचाकर्षसीत्कारोचितमाननम् ।
माननं मन्मथस्यास्तु जटाभिर्न विराजते ॥ ३१६ ॥
अस्थाने तव निर्बन्धः को नाम स जनार्दनः ।
नीचतुल्यो न तुल्योऽसौ शतांशेनापि मे गुणैः ॥ ३१७ ॥
श्रुत्वैतत्कोपदीप्ता सा मैवमित्यब्रवीन्मुहुः ।
केशपाशं[1] परामृश्य राक्षसस्तामभर्त्सयत् ॥ ३१८ ॥

---

१. 'पाशमथाकृष्य' शा०.

ततः सा केशसंस्पर्शन्यक्कारदहनार्दिता ।
तमूचे त्वद्वधे शक्ता न करोमि तपोव्ययम् ॥ ३१९ ॥
जन्मान्तरे वधायैव तव स्यान्मे तनुग्रहः ।
इत्युक्त्वा पश्यतस्तस्य सा विवेश हुताशनम् ॥ ३२० ॥
सैवेयं जानकी जाता त्वत्कलत्रमयोनिजम् ।
कृते युगे देववती त्रेतायां सैव मैथिली ॥ ३२१ ॥
क्षेत्रे हलमुखाकृष्टे जनकस्य महीपतेः ।
श्रीरेषा राम पत्नी ते देवो विष्णुस्त्वमच्युतः ॥ ३२२ ॥

इति देववत्युपाख्यानम् ॥ १० ॥

ततः पुष्पकमारुह्य विचरन्भुवि रावणः ।
उशीरबीजनामानमारुरोह महाचलम् ॥ ३२३ ॥
मरुत्तं तत्र राजानं यजमानं ददर्श सः ।
स्वयं बृहस्पतिभ्राता संवर्तो यस्य याजकः ॥ ३२४ ॥
यज्ञभूमिस्थिता देवा वरदप्तं दशाननम् ।
दृष्ट्वा प्रदुद्रुवुर्भीताः कृत्वा रूपविपर्ययम् ॥ ३२५ ॥
शक्रः शिखी यमः काकः कृकलासो धनाधिपः ।
हंसो भूत्वा च वरुणः प्रययुस्ते मनोजवाः ॥ ३२६ ॥
ततो युद्धं प्रयच्छेति रावणेनार्थितः स्वयम् ।
ससंभ्रमो मरुत्तस्तं को भवानित्यभाषत ॥ ३२७ ॥
तमूचे स स्वयं हासमुक्त्वा नक्तंचरेश्वरः ।
अहो प्रौढावलेपेऽस्मिन्प्रीतोऽस्मि तव भूपते ॥ ३२८ ॥
कस्तापस जगत्यस्मिन्देशोऽस्ति त्रिदिवाधिकः ।
दृश्यते यत्र नोष्णांशुः श्रूयते न च रावणः ।
पौलस्त्यं मां न जानासि भ्रातुर्येन धनप्रभोः ॥ ३२९ ॥
श्रुत्वैतदूचे तं राजा धन्यो जातः कुले भवान् ।
ज्येष्ठो भ्राता गुरुर्येन सदाचारेण मानितः ॥ ३३० ॥

कर्मणा धनहीनेन जननिन्दारजोजुषा ।
दुर्जनः श्लाघते नित्यं लज्जते येन सज्जनः ॥ ३३१ ॥
इत्युक्त्वा चापमादाय सायकांश्च महीपतिः ।
उद्ययौ रावणं योद्धुं सर्वतोऽथ तमब्रवीत् ॥ ३३२ ॥
असंपूर्णो निहत्येष राजन्माहेश्वरः क्रतुः ।
दीक्षा हि क्षीणरजसां किल्बिषक्षयसाक्षिणी ॥ ३३३ ॥
क्व दीक्षितः क्षमापात्रसंक्षिप्तसकलेन्द्रियः ।
क्व च क्रोधारजोध्वस्तं युद्धं कलिसमुद्धतम् ॥ ३३४ ॥
इति संवर्तकेनोक्तो मरुत्तः पृथिवीपतिः ।
उत्सृज्य सशरं चापं वभूव निरुपद्रवः ॥ ३३५ ॥
ततः पौलस्त्यसचिवैर्जयशब्दे कृते पुनः ।
ब्रह्मर्षिशोणितपानमत्तो रक्षःपतिर्ययौ ॥ ३३६ ॥
वरान्दत्वा विहङ्गेभ्यस्ततः सुतनृपान्वितः ।
पुनर्यज्ञभुवं देवा मरुत्तप्रीतये ययुः ॥ ३३७ ॥
बर्हे बर्हे सहस्राक्षः सहस्राक्षवरादभूत् ।
अद्यापि चाभ्रशब्देन शक्रप्रीत्यैव नृत्यति ॥ ३३८ ॥
हंसोऽपि हिमकर्पूरशीतांशुरजतद्युतिः ।
वरुणस्य वराज्जातस्तोयेशप्रीतिमान्सदा ॥ ३३९ ॥
कृकलासः सुवर्णाभः सदा सद्रव्यमस्तकः ।
वभूव भासुराकारः श्रीमद्वैश्रवणाश्रयात् ॥ ३४० ॥
वलिभुक्परितृप्तश्च पितृणां प्रीतिकृत्सदा ।
अरोगश्चिरजीवी च काकोऽभूद्यमशासनात् ॥ ३४१ ॥
एवं ते प्राणिनः प्रापुस्तद्वरात्कृतकृत्यताम् ।
न हि सत्पुरुषैः सङ्गः क्वचिद्भवति निष्फलः ॥ ३४२ ॥

इति मरुत्तसमागमः ॥ ११ ॥

दुष्यन्तः सुरथो गोप्ता गयो गाधिः पुरूरवाः ।
एते चान्ये च भूपाला रावणेन जितास्ततः ॥ ३४३ ॥

अथाभवदयोध्यायामनरण्येन भूभुजा ।
युद्धं राक्षसराजस्य शस्त्रास्त्रग्रामदुःसहम् ॥ ३४४ ॥
ततस्तलाभिघातेन निहतस्तेन भूपतिः ।
निपपात महातालः कृत्तमूल इव क्षितौ ॥ ३४५ ॥
क्षणावशेषजीवोऽपि स जगाद दशाननम् ।
श्लाघमानं स्वविजयं संदष्टदशनच्छदः ॥ ३४६ ॥
निहतः प्राप्तकालोऽहं क्षत्रियः किं प्रगल्भसि ।
भविष्यति तवावश्यं राज्ञो मद्वंशजाद्वधः ॥ ३४७ ॥
इत्युक्ते सत्यशीलेन भूभुजा देवदुन्दुभिः ।
ननाद पुष्पवृष्टिश्च निपपात महीतले ॥ ३४८ ॥

इत्यनरण्यवधः ॥ १२ ॥

एतदाकर्ण्य पप्रच्छ रामः कुम्भोद्भवं मुनिम् ।
किं तदा भगवन्कृत्स्ना वीरशून्याभवन्मही ॥ ३४९ ॥
एवंविधा नृपतयः प्रवराश्चक्रवर्तिनः ।
जिताः स्म इत्यभाषन्त कथं वीर दशाननम् ॥ ३५० ॥
न कश्चिदपि संजातः क्षत्रियः क्षत्रियस्तदा ।
दर्पेण सर्वसामान्या ये न प्रक्षालिता युधि ॥ ३५१ ॥
इति रामेण भगवान्पृष्टोऽगस्त्यस्तमब्रवीत् ।
नृपाः कुर्वन्ति किं राम वरदृप्ते क्षपाचरे ॥ ३५२ ॥
ततो माहिष्मतीं येन पुरीं दशमुखो ययौ ।
स सहस्रभुजो यस्यां कार्तवीर्योऽर्जुनः पतिः ॥ ३५३ ॥
जयकेलिरते राज्ञि नर्मदां फेनहासिनीम् ।
अन्तःपुरैः सह गते राजधानीं विवेश सः ॥ ३५४ ॥
युद्धार्थी स महामात्यान्मुहुः पप्रच्छ दुर्मदः ।
क्व स राजार्जुनो नाम वीरो भूरिभुजोर्जितः ॥ ३५५ ॥
इति तस्य वचः श्रुत्वा कालज्ञास्तस्य मन्त्रिणः ।
न स्थितो भूपतिरिति प्राहुर्नयविचक्षणाः ॥ ३५६ ॥

ततो विन्ध्याचलं गत्वा शनैर्वृद्धमनोरथः ।
मध्याह्ने नर्मदातीरमाससाद दशाननः ॥ ३५७ ॥
दक्षिणाम्भोधिमहिषीं स्वच्छफेनदुकूलिनीम् ।
तां हंसमालिनीं वीक्ष्य नर्मदां नर्मदां रतेः ॥ ३५८ ॥
प्रहर्षोत्फुल्लनयनश्चिरेणासाद्य निर्वृतिम् ।
उवाच मारीचमुखान्सचिवान्विगतक्लमः ॥ ३५९ ॥
लोलफेनावलीहारा चक्रवाकोन्नतस्तनी ।
मनो मे रसयत्येषा तरुणीव तरङ्गिणी ॥ ३६० ॥
एते विन्ध्योपलस्फालस्फारशीकरदन्तुराः ।
भान्ति विश्रान्तिसुहृदो नर्मदातीरमारुताः ॥ ३६१ ॥
इयं विलोक्य मां सुप्तकल्लोलवलया सरित् ।
लीनमीनविहङ्गाक्षी भीतेव निभृतं स्थिता ॥ ३६२ ॥
तपत्यतप्तं तपनः पवनः पङ्गुतां गतः ।
सुसंगतविहङ्गापि नो ननाद च नर्मदा ॥ ३६३ ॥
अस्मिन्संतोषविषदे वाहिनीपुलिने मम ।
हरपुष्पोपहाराय भृशमुत्कण्ठते मनः ॥ ३६४ ॥
किं तैः कुविभवैर्भूत पीत्वा संभृतभोजनैः ।
हरार्चनोपकरणे संतता न भवन्ति ये ॥ ३६५ ॥
हरार्चनैकव्यापारा यद्भवन्ति विभूतयः ।
तज्जन्मान्तरलब्धस्य तत्प्रसादस्य तत्फलम् ॥ ३६६ ॥
एतावदेव विपुलैश्वर्यकल्पतरोः फलम् ।
राजोपचारपूजाभिः पूज्यन्ते यन्महेश्वराः ॥ ३६७ ॥
पूजानुरागहेवाकः पुण्यभाजां प्रजायते ।
एकजन्मावशेषाणां भवे भवति भावना ॥ ३६८ ॥
भवद्भिरुपनीतेन पूजोपकरणेन मे ।
प्रवर्ततामयं पूर्णं तूर्णं लिङ्गार्चनोत्सवः ॥ ३६९ ॥

इत्युक्त्वा विरते तस्मिन्सर्वं पूजामयोचितम् ।
पुरः पुष्पाणि निचितं चक्रुस्ते क्षणदाचराः ॥ ३७० ॥
ततो भ्रात्रा कृतजपः शुद्धात्मा हृदि योगकृत् ।
सदार्चितं हेममयं लिङ्गमादाय सैकते ॥ ३७१ ॥
सर्वोपचारपूजाभिः पूजयित्वा यथेप्सितम् ।
नामाष्टशतकं गायन्ननर्त दशकन्धरः ॥ ३७२ ॥
विधानेन सदा पूजां कृत्वा सोऽभूज्जगज्जयी ।
तस्मिन्दिने समुत्सेको विधिहीनक्रियोऽभवत् ॥ ३७३ ॥
सा पूजा महती शंभोर्दिव्यपुष्पविनिर्मिता ।
खेचराणां क्षणं चक्रे रत्नादिशिखरभ्रमम् ॥ ३७४ ॥
मन्दारैः सौरभोदारैः कचद्भिः काञ्चनाम्बुजैः ।
सुजातैः पारिजातैश्च सा पूजा शुशुभे विभोः ॥ ३७५ ॥
अत्रान्तरे तटस्याधस्तीरे माहिष्मतीपतिः ।
विललासार्जुनो राजा सलिले ललनाशतैः ॥ ३७६ ॥
तस्य कङ्कणकेयूररत्नांशुवलयैर्जलम् ।
बभौ प्रावृड्घनभ्रष्टैर्व्याप्तं चक्रायुधैरिव ॥ ३७७ ॥
तत्करास्फालितजलस्फारशीकरसंततिः ।
तरुणीनां स्तनतटे प्रययौ [1]भारहारताम् ॥ ३७८ ॥
जलं पिञ्जरितं रेजे कामिनीकुचकुङ्कुमैः ।
हेमाम्बुजस्रजो राज्ञः किंजल्कैरिव पूरितम् ॥ ३७९ ॥
भुजानां भूपतिस्तत्र सारं ज्ञातुं तरङ्गिणीम् ।
धृत्वा चकार सावेगं प्रतिस्रोतः पराङ्मुखाम् ॥ ३८० ॥
निरुद्धा बलिना तेन प्रवृद्धेन महाम्भसा ।
मन्युनेव परावृत्ता सा जगाम यथागतम् ॥ ३८१ ॥
अर्धे सलिलकल्लोलदुकूलवलिता सरित् ।
अर्धे [2]भग्नतटे श्रेणीहृततोयांशुकाभवत् ॥ ३८२ ॥

१. 'तार' क-ख. २. 'नग्न' शा०.

इतः सहस्रगुणिता प्रापाथ तनुतामितः।
तुल्यं मेघागमशरद्भिरक्केन बभूव सा॥ ३८३॥
राज्ञा भुजसहस्रेण रुद्धा सागरगामिनी।
मुखं वर्त्मसहस्रेण दत्त्वा दत्त्वा न्यवर्तत॥ ३८४॥
तटी भग्नवरोद्याना तस्याः कूलंकषैर्जलैः।
तन्मार्गगामिनी दूरात्सा सर्वजनवर्जिता॥ ३८५॥
बभ्राम रावणाज्ञेव पुण्याश्रमविनाशिनी।
तां रावणकृतां पूजामुन्मत्तेव विशृङ्खला॥ ३८६॥
जहार वीचिहस्तैः सा स्फीतफेनाट्टहासिनी।
हृतपूजां नदीं रक्षश्चक्षुषा क्षणमैक्षत॥ ३८७॥
ईर्ष्यालुरिव सोत्सेकां दयितामपकारिणीम्।
क्षुभितां नर्मदां दृष्ट्वा निर्विकारामिव स्थिताम्॥ ३८८॥
दिदेश संज्ञया ज्ञातुं रावणः शुकसारणौ।
तौ गत्वा तटिनीमध्ये रोद्धारं सलिलं भुजैः॥ ३८९॥
वृतं कान्तासहस्रेण दृप्तं ददृशतुर्नृपम्।
तौ तु दृष्ट्वा समभ्येत्य दशकन्धरमूचतुः॥ ३९०॥
निरुद्धा कार्तवीर्येण परावृत्ता तरङ्गिणी।
पौलस्त्यः सुचिरान्विष्टं स्थितं श्रुत्वा महीपतिम्॥ ३९१॥
अमर्षहर्षसंपूर्णः सानुगस्तां ययौ भुवम्।
स तस्य सचिवानेत्य जगाद समरोन्मुखः॥ ३९२॥
क्व स राजार्जुनो नाम सहस्रभुजदुर्मदः।
दशाननोऽहं युद्धार्थी रसेन स्वयमागतः॥ ३९३॥
न सेहे त्रिजगत्यस्मिन्वीरमानोन्नतं जनम्।
इति ब्रुवाणं सावेगं मन्त्रिणस्तं बभाषिरे॥ ३९४॥
स्वैरं स्थितो नरपतिः कान्ताकेलिकुतूहली।
दृश्यो भवति नास्माकं कालेऽस्मिन्मदनिर्भरः॥ ३९५॥

युद्धस्यावसरो नायं क्षपामेकां क्षमस्व नः ।
नायं विबुद्धो युद्धेन प्रातर्गन्तासि भूपते ॥ ३९६ ॥
एतदाकर्ण्य पौलस्त्यस्ताञ्राजसचिवान्बली ।
चकार सानुगश्छन्नान्घोराभिः शरवृष्टिभिः ॥ ३९७ ॥
ततः श्रुत्वा नरपतिर्दशाननमसंभ्रमः ।
युद्धार्थिनं समायातमुन्ममज्ज जलान्तरात् ॥ ३९८ ॥
स स्तम्भभुजसंभारः प्रांशुः कनकसप्रभः ।
हेमवृक्षसहस्राङ्कः स सुमेरुरिवाबभौ ॥ ३९९ ॥
मदोद्धतः समादाय गदां जाम्बुनदाङ्गदः ।
समभ्यधावत्तेजस्वी राक्षसेन्द्रं क्षितीश्वरः ॥ ४०० ॥
तस्मै प्रहस्तश्चिक्षेप मुशलं ज्वलनाकुलम् ।
जग्राह गदया तच्च सावेगं पृथिवीपतिः ॥ ४०१ ॥
प्रहस्तस्ताडितस्तेन गदया वज्रवेगया ।
वमन्मुखेन रुधिरं पपात भुवि मूर्छितः ॥ ४०२ ॥
ततोऽभूद्[1]दुद्धतं युद्धं नरराक्षसराजयोः ।
मही यच्चरणन्यासैरुन्ममज्ज ममज्ज च ॥ ४०३ ॥
गदाभिघातप्रभवैरश्रान्तं युध्यमानयोः ।
तयोः सावेगनिर्घोषैः प्रलयाभ्रभ्रमोऽभवत् ॥ ४०४ ॥
गदाप्रहारनिष्पिष्टरत्नाभरणवह्निना ।
व्याप्तौ तौ रेजतुर्वीरौ सविद्योता इवाचलौ ॥ ४०५ ॥
ततः क्षितिपतिः क्षिप्रं सर्वप्राणेन तां गदाम् ।
अपातयन्महावेगां राक्षसेन्द्रस्य वक्षसि ॥ ४०६ ॥
रावणस्योरसि दृढे सा पपात द्विधा गता ।
अपमृत्युं धनुर्मात्रं राक्षसो निपसाद च ॥ ४०७ ॥
तं मूर्छितं निपतितं बद्ध्वा जग्राह भूपतिः ।
सुरैः स साधुशब्दाभिः पूजितः पुष्पवृष्टिभिः ॥ ४०८ ॥

---

१. 'दुष्कृतं' शा०.

बन्धनं पवनस्येव समुद्रस्येव शोषणम्।
आकर्षणमिवार्कस्य सुमेरोरिव पातनम्॥ ४०९॥
दशग्रीवस्य दृष्ट्वैव ग्रहणं क्रोधमूर्छिताः।
प्रहस्तमारीचिमुखा योद्धुमभ्याद्रवन्मुहुः॥ ४१०॥
तान्स विद्राव्य तरसा दीप्ताभिः शरवृष्टिभिः।[1]
बद्धं रावणमादाय प्रविवेश निजां पुरीम्॥ ४११॥

इति रावणग्रहणम्॥ १३॥

पौत्रस्य ग्रहणं श्रुत्वा कथ्यमानं सुरैर्दिवि।
कम्पमान इव स्नेहात्पुलस्त्यः स्वयमाययौ॥ ४१२॥
तेनार्थितो नरपतिर्मुनिना ब्रह्मसूनुना।
तत्याज रावणं बन्धात्सख्यं कृत्वाग्निसाक्षिकम्॥ ४१३॥
न विश्वासः प्रभावेऽस्ति दर्पो मानाशतिः परम्।
को जानीते विकाराणां विधेरेव हि संनिधिम्॥ ४१४॥
धनिभ्यो धनिनः सन्ति वादिभ्यः सन्ति वादिनः।
बलिभ्यो बलिनः सन्ति तस्माद्दर्पं विवर्जयेत्॥ ४१५॥
गुणानां संपदां लोके यशसामथ तेजसाम्।
अविच्छिन्नः प्रकर्षोऽयमुपर्युपरि वर्तते॥ ४१६॥

इति रावणमोक्षः॥ १४॥

बलाधिकान्बाधमानः पुनर्भुवि चचार सः।
प्रशाम्यति प्रभावो हि देहेन सह देहिनाम्॥ ४१७॥
स शौर्याभ्यधिकं श्रुत्वा वालिनं वानरेश्वरम्।
तूर्णं जगाम युद्धार्थी किष्किन्धां सचिवैः सह॥ ४१८॥
तं वालिवधसंनद्धं दर्पादुद्धतवादिनम्।
तारानुजोऽवदद्धीरस्तारो वानरयूथपः॥ ४१९॥
संध्यामुपासितुं वाली यातोऽम्बुधिचतुष्टयम्।
क्षणं तिष्ठ पुरस्तस्य दर्पं निक्षिप्य यास्यसि॥ ४२०॥

---

१. 'शस्त्र' शा०.

एता वालिहतानेकवीरकङ्कालमालिताः ।
दिशो बिभ्रति पौलस्त्य कापालिकवधूव्रतम् ॥ ४२१ ॥
मृत्युना यदि ते मैत्री यदि त्वममरो वरात् ।
तथापि वालिनं प्राप्य कथाशेषो भविष्यसि ॥ ४२२ ॥
सोत्कण्ठेनेव कालेन दृष्टश्चेन्न प्रतीक्षसे ।
तदितः स्वेच्छया गच्छ सक्षणो दक्षिणार्णवम् ॥ ४२३ ॥
इति ब्रुवाणं कुपितस्तारं निर्भर्त्स्य रावणः ।
पुष्पकेण ययौ तूर्णं संध्यायां दक्षिणार्णवम् ॥ ४२४ ॥
स तत्र संध्याध्यानस्थं वालिनं मलिनाशयः ।
दृष्ट्वा जिघृक्षन्निःशब्दं पश्चामनुययौ शनैः ॥ ४२५ ॥
लोचने किंचिदुन्मील्य वाली हेमाचलोपमः ।
विलोक्य रावणं पश्चान्न चचाल जपव्रतः ॥ ४२६ ॥
अभिप्रायं स विज्ञाय रावणस्य महाभुजः ।
तं जग्राह तपस्यान्ते सुपर्ण इव पन्नगम् ॥ ४२७ ॥
लम्बबाहुवनं वाली कक्षायां राक्षसेश्वरम् ।
कृत्वा खमुत्पपाताशु नखैरुल्लेखकारिणम् ॥ ४२८ ॥
तमाद्रवन्तं गगने क्रुद्धाः पौलस्त्यमन्त्रिणः ।
वालिवेगानलहताः पेतुर्मेघा इव क्षितौ ॥ ४२९ ॥
स समुद्रत्रये संध्यामर्चयित्वा यथाविधि ।
अश्रान्तः स्वपुरं प्राप कक्षानिक्षिप्तराक्षसः ॥ ४३० ॥
विमुच्य रावणं तत्र वाली स्मितसिताननः ।
उवाच कस्त्वं केनेह विन्यस्तः कथमागतः ॥ ४३१ ॥
सोपहासं निशम्यैतद्वचनं राक्षसेश्वरः ।
श्रमश्वासाकुलतनुः प्रोवाच घूर्णितेक्षणः ॥ ४३२ ॥
अहो बलमसामान्यमहो व्रतगतिः परा ।
तवाप्रतिमसत्त्वस्य येन बद्धोऽस्मि रावणः ॥ ४३३ ॥

१. 'जप' इति भवेत्.

वक्ति तार्क्ष्योपमां कस्ते लज्जेवाविलतुल्यता ।
यदि वा साम्यविरहान्मनसैवोपमीयते ॥ ४३४ ॥
दंशवन्मां समादाय त्वदन्यः को नु दिक्त्रये ।
क्षणेन भ्राम्यति व्यक्तमवधिर्नास्ति तेजसाम् ॥ ४३५ ॥
अहो सुविपुलेऽप्यस्मिन्संसारे विबुधाद्भुते ।
रोमाञ्चकारिचरितो न दृष्टो त्वद्विधो जनः ॥ ४३६ ॥
लज्जा भवेन्मम परं यदि स्यात्त्वत्समोऽपरः ।
एकस्यैव तु शक्तिः कैर्लक्ष्यते ते विधेरिव ॥ ४३७ ॥
अविच्छिन्नधनप्राणं सख्यमस्तु मम त्वया ।
इत्युक्त्वा तेन सौहार्दं स चकाराग्निसाक्षिकम् ॥ ४३८ ॥
मासं वालिगृहे स्थित्वा पूज्यमानो दशाननः ।
जगज्जयाय सचिवैस्तैः समेत्यार्थितो ययौ ॥ ४३९ ॥
एवं त्रैलोक्यजयिनो वालिनो वलशालिना ।
गोष्ठीषु दशकण्ठस्य स्मृतपात्रकृतं यशः ॥ ४४० ॥
सर्गायैव नमस्तस्मै यस्मिन्काले मनोमुषाम् ।
अद्भुतानामनित्यानां परिसंख्या न विद्यते ॥ ४४१ ॥

इति वालिरावणसख्यम् ॥ १५ ॥

तं मर्त्यलोके वीराणां वधायैव कृतक्षणम् ।
ददर्श नारदो मेघारूढः पुष्पकवाहनम् ॥ ४४२ ॥
सोऽब्रवीत्तिष्ठ पौलस्त्य प्रियं मे तव दर्शनम् ।
यत्त्वं सर्वास्ववस्थासु युद्धान्न विरतः क्वचित् ॥ ४४३ ॥
हरिणा दैत्यसंहारे तार्क्ष्येण फणिभक्षणे ।
त्वया जगज्जये चास्मिंस्तोषितोऽहं कुतूहली ॥ ४४४ ॥
किं मिथ्या मर्त्यनिधने प्रयत्नोऽयं तवाधिकः ।
अनिशं येन जागर्ति संक्षयाय स्वयं यमः ॥ ४४५ ॥
जातः प्रजापतिकुले मानुषान्सा वृथावधीः ।
एते हि निहता एव मर्त्या मरणधर्मिणः ॥ ४४६ ॥

पदे पदे सुखोत्सेकदुःखदैन्यभयार्दिताः ।
मूढाः संसारिणः सर्वे धीमतां करुणास्पदम् ॥ ४४७ ॥
यमवक्त्रं विशन्त्येते नदीवेगा इवार्णवम् ।
तस्मिन्नेव जिते सर्वं जगज्जाने त्वया जितम् ॥ ४४८ ॥
नारदेनेत्यभिहितस्तथेत्युक्त्वा दशाननः ।
प्रतस्थे सचिवैः सार्धं जेतुं वैवस्वतं जवात् ॥ ४४९ ॥
शमनं सर्वभूतानामीश्वरं रक्षसां कथम् ।
जेष्यतीत्यद्भुताक्रान्तो नारदोऽपि ययौ पुनः ॥ ४५० ॥
स गत्वा रावणोद्योगं यमाय च न्यवेदयत् ।
तत्क्षणं चार्कसंकाशं पुष्पकं समदृश्यत ॥ ४५१ ॥
प्रविशन्पुष्पकारूढः पौलस्त्यः प्रेतभूमिषु ।
ददर्श जन्मनिर्माणकर्मवर्मावृतं जनम् ।
करपत्रशिलापाततप्तसैकतपीडितम् ॥ ४५२ ॥
निमग्नान्पूयविस्रासृक्सारवैतरणीजले ।
गिरिसंघट्टनिष्पिष्टान्वज्रकण्टकपाटिताम् ॥ ४५३ ॥
तप्ततैलवसाकुम्भक्काथ्यमानार्थविग्रहान् ।
शस्त्रतुण्डखगाकृष्टजिह्वानयननासिकान् ॥ ४५४ ॥
ज्वालास्तम्भपरिष्वङ्गविलीनमलिनाङ्गकान् ।
ताडितानुल्मुकैः शूलमुसलप्रासमुद्गरैः ॥ ४५५ ॥
दृष्ट्वा दुष्कृतिनस्तत्र नरकावर्तमूर्छितान् ।
सुकृतोज्ज्वलदेहांश्च रुचिराभरणस्रजः ॥ ४५६ ॥
दिव्योद्यानगृहाभोगसंभोगसुखभागिनः ।
जगद्वितिमिरं सर्वं तं देशं पुष्पकांशुभिः ॥ ४५७ ॥
प्रभावशक्त्या पौलस्त्यः सर्वानार्तप्रलापिनः ।
उज्जहार हताशेषं किंकरो रौरवान्तरात् ॥ ४५८ ॥
मोक्षिते राक्षसेन्द्रेण निरयात्सर्वतो जने ।
बभूव तुमुलः शब्दः संभृतो यमसद्मनि ॥ ४५९ ॥

ततः शमननिष्ठाभिरनिष्टाभिः शरीरिणाम्।
सेनाभिर्घोररूपाभिर्युद्धं रक्षःपतेरभूत्॥ ४६०॥
तस्यास्त्रवृष्टिभिर्व्योम्नि पुष्पकं शकलीकृतम्।
प्रजापतिवरोदग्रमभून्नवनवं पुनः॥ ४६१॥
दीप्तास्त्रवलयव्याप्तः सानुगो राक्षसेश्वरः।
अस्त्रं पाशुपतं क्रुद्धः संदधे रुधिरोक्षितः॥ ४६२॥
तेनास्त्रेण प्रयातेऽथ सैन्ये सपदि भस्मसात्।
स्वयं विनिर्ययौ मृत्युकालाभ्यां सहितो यमः॥ ४६३॥
तस्मिन्मूर्तेन दण्डेन सह स्यन्दनमास्थिते।
विश्वक्षयभयात्क्षिप्रं चकम्पे भुवनत्रयी॥ ४६४॥
तं दृष्ट्वा रावणामात्याः क्रोधदीप्तं रथे स्थितम्।
निमीलिताक्षाः संत्रासाद्गतसत्त्वा विदुद्रुवुः॥ ४६५॥
ततः प्रवृत्ते संग्रामे यमरावणयोः क्रुधा।
सुरा द्रुहिणरुद्रेन्द्रमुख्यास्तत्प्रेक्षितुं ययुः॥ ४६६॥
सप्तरात्रमभूद्युद्धं निर्विशेषं तयोर्मिथः।
दिव्यास्त्रशस्त्रज्वलनज्वालाजटिलिताम्बरम्॥ ४६७॥
यमस्य रावणशरैश्छाद्यमानतनोर्मुखात्।
रक्ताशोक इवोत्फुल्लः क्रोधवह्निरजायत॥ ४६८॥
तं मृत्युरवदत्कोपाद्विनिष्पिष्य करे करम्।
अनुजानीहि मामेकं रक्षःपातकसंक्षये॥ ४६९॥
त्वमेव वेत्सि यदेता युगान्तेषु मदोत्कटाः।
दंष्ट्राः सुरासुरग्रामरोमन्थशिथिलीकृताः॥ ४७०॥
न तं पश्यामि नागेषु नरेषु त्रिदशेषु वा।
यमदंष्ट्राघटीयन्त्रान्मुक्तो यः स्वास्थ्यमागतः॥ ४७१॥
हिरण्यकशिपुर्वृत्रः शम्बरो नमुचिर्मधुः।
व्यग्रस्य मे जगद्ग्रासक्षणेनैकेन विस्मृताः॥ ४७२॥

एष त्वामुद्यतो बालः कियान्मे क्षणदाचरः ।
स्वयं विसृज्य संरम्भं मया स्पृष्टो न जीवति ॥ ४७३ ॥

इति मृत्युवचः श्रुत्वा विश्वसंयमनो यमः ।
पश्य मे बलमित्युक्त्वा स्वयं रावणमाद्रवत् ॥ ४७४ ॥

तदग्रे[1] मुद्गरो घोरः पाशश्च विपुलत्विषः[2] ।
कम्पमानेषु लोकेषु संनिधानं प्रचक्रतुः ॥ ४७५ ॥

ततः कोपात्समुद्यम्य दण्डं दण्डधरो जवात् ।
अभिद्रुते दशमुखे स्वयं ब्रह्मा समाययौ ॥ ४७६ ॥

सोऽब्रवीन्मद्वराद्दृप्तस्तव वध्यो न रावणः ।
अमोघः सर्वभूतानां कृतो दण्डः क्षयाय च ॥ ४७७ ॥

निहते वा दशमुखे दण्डे वा मोघतां गते ।
असत्यं मामुभयतः स्पृशेत्स्थितिविनाशकृत् ॥ ४७८ ॥

इति साक्षाद्भगवता ब्रह्मणाभिहितो यमः ।
सर्वं तथेति संचिन्त्य सरथोऽन्तरधीयत ॥ ४७९ ॥

लब्धलक्षे दशग्रीवे याते यमजयोर्जिते ।
अधोमुखा नारदेन सह देवा दिवं ययुः ॥ ४८० ॥

इति यमविसर्गः ॥ १६ ॥

ततो जलधिमार्गेण पातालं राक्षसेश्वरः ।
विशालं व्यालकलिलं प्रविश्य सचिवैः सह ॥ ४८१ ॥

जित्वा बलाद्भोगवतीं पुरीं वासुकिपालिताम् ।
गत्वा मणिमयीं दैत्यनगरीं रत्न[3]भासुराम् ।
निवातकवचैः सार्धं वत्सरं युयुधे युधि ॥ ४८२ ॥

तेषां तत्र च संग्रामे तुल्ये तुल्यबलौजसाम् ।
ब्रह्मवाक्यात्कृतं सख्यं प्रीत्यै पावकसाक्षिकम् ॥ ४८३ ॥

---

१. 'तस्याग्रे' शा०. २. 'द्विषः' शा०. ३. 'मणि' शा०.

पूज्यमानः स्थितो वर्षं तेषां वेश्मनि रावणः।
तेभ्यो दुर्नयमायानामेकोनं शतमाप्तवान्[1] ॥ ४८४ ॥
अथाश्मनगरे हत्वा दैत्यानन्यान्सहस्रशः।
प्राप कैलाससंकाशं शुभं वरुणमन्दिरम् ॥ ४८५ ॥
यत्र सा सुरभिर्नाम[2] संज्ञा[3] दिव्योषधिप्रसूः।
स्थिता चन्द्रामृतोत्पत्तेर्जननी क्षीरवारिधेः ॥ ४८६ ॥
तत्रामात्यान्स पप्रच्छ क्व स राजा जलेश्वरः।
युद्धार्थी निर्जितयमः प्राप्तोऽहं रावणः स्वयम् ॥ ४८७ ॥
इति वादिनि सावेगं सानुगे राक्षसेश्वरे।
अभूत्संनाहसंरम्भस्तुरङ्गरथदन्तिनाम् ॥ ४८८ ॥
ततः सलिलनाथस्य रथे वीराः प्रहारिणः।
पुत्राः पौत्राश्च सामात्याः सैन्येन सह निर्ययुः ॥ ४८९ ॥
तेषां युद्धमभूत्खड्गप्रभापटलपल्लवम्।
भिन्नोरुमुक्ताकुसुमं कृत्तवीरशिरःफलम् ॥ ४९० ॥
दारिते वरुणानीके रावणेन प्रमाथिना।
पुष्करप्रमुखा व्योम विविशुर्वरुणात्मजाः ॥ ४९१ ॥
रथिभिः पुष्करैस्तस्य तैर्लङ्काधिपतेरभूत्।
युद्धं विपुलशस्त्रास्त्रज्वालालोलरसातलम् ॥ ४९२ ॥
तेषां महोदरः क्षिप्रं रथात्पृथुपराक्रमः।
तान्ममाथ गिरिस्फारान्गदया रिपुभञ्जदः ॥ ४९३ ॥
रणे वरुणपुत्रेषु भग्नेषु भुजशालिनाम्।
रावणं वरुणामात्यः प्रभासः[4] स्वयमभ्यधात् ॥ ४९४ ॥
अलं युद्धेन पौलस्त्य न स्थितो यादसां पतिः।
गान्धर्वं निखिलं श्रोतुं ब्रह्मलोकमितो गतः ॥ ४९५ ॥

---

१. 'मायानां शतमेकं समाप्तवान्' इति रामायणे. २. 'र्नाभि' क-ख. 'क्षरन्तीं च पयस्तत्र सुरभिं गामवस्थिताम्' इति रामायणे. ३. 'स्वधा' इति भवेत्. ४. 'प्रहासः' इति रामायणे.

श्रुत्वैतद्वरुणं जित्वा तत्पुरं दशकन्धरः ।
वीरश्चचाल पाताले लब्धलक्षः सहानुगः ॥ ४९६ ॥
ततश्चारुतरं हेमरुचिरं रत्नमन्दिरम् ।
हसन्तमिव संसक्तव्यक्तमौक्तिकजालकैः ॥ ४९७ ॥
ददर्श चन्द्रकान्तोरुशेखरं रावणः स्थितम् ।
अपरेणैव रूपेण पाताले स्फटिकाचलम् ॥ ४९८ ॥
कस्येदमिति तेनाशु प्रहस्ते प्रेरिते पुरः[1] ।
प्रविश्य सप्तकक्षाभिः ज्वाला[2]मन्तर्व्यलोकयत् ॥ ४९९ ॥
तन्मध्ये पुरुषं दीप्तं मौलिनं हेममालिनम् ।
तदालोकेन जातेन हासेन महता मुहुः ॥ ५०० ॥
कुर्वाणं धैर्यविध्वंससाध्वसायासकारिणा ।
दृष्ट्वा प्रहस्तो निर्गत्य रावणाय न्यवेदयत् ॥ ५०१ ॥
पुष्पकादवरुह्याथ प्रविश्य दीप्तभूषणम् ।
ददर्श द्वारि पौलस्त्यः पुरुषं मुशलायुधम् ॥ ५०२ ॥
तं दृष्ट्वा जातरोमाञ्चः स साकम्पो व्यचिन्तयत् ।
चिन्ताकुलं स पुरुषः प्रोवाच घननिःस्वनः ॥ ५०३ ॥
युद्धार्थिनं त्वामायातं जानामि जगतां रिपुम् ।
अत्राहं बलिरत्रास्ते केन युद्धं समीहसे ॥ ५०४ ॥
एतद्दशाननः श्रुत्वा कोपकण्टकिताकृतिः ।
बलिना योद्धुमिच्छामीत्युक्त्वैवान्तरमाविशत् ॥ ५०५ ॥
स ददर्श बलिं तत्र पवित्रचरितव्रतम् ।
विभवे भुवनव्यापी वैश्वरूप्यं बभार यः ॥ ५०६ ॥
यस्य त्यागसमुद्भूता श्लाघ्यस्य तनुता श्रियः ।
अर्थिभिः खिन्नशाखस्य चन्दनस्येव शोभते ॥ ५०७ ॥
दानेनातिप्रमाणेन यस्य बद्धस्य विष्णुना ।
विविक्तं त्रिषु लोकेषु भ्रमति स्वेच्छया यशः ॥ ५०८ ॥

---
१. 'पुनः' शा०. २. 'शाला' शा०.

केनान्येन वदान्येन क्रियतामुपमा बलेः ।
त्यागेनात्युन्नतिं नीतो येन स्वल्पोऽपि याचकः ॥ ५०९ ॥
स्पृहणीयैव समरे शूरस्येव विरूपिता ।
तुल्यं(?) संपत्सहस्रेण दातुर्दानोद्भवा विपत् ॥ ५१० ॥
तं दृष्ट्वा तेजसां राशिं प्रगल्भोऽपि दशाननः ।
अभून्निष्प्रतिभः प्राप्य मूर्खो विद्वत्सभामिव ॥ ५११ ॥
तमुत्सङ्गे समारोप्य दूरागमनकारणम् ।
प्रीतिप्रसारितोष्ठाग्रः पप्रच्छ स्वच्छधीर्बलिः ॥ ५१२ ॥
तं रावणोऽवदद्बद्धं श्रुत्वाहं त्वां मुरारिणा ।
शक्तः प्राप्तोऽस्मि मोक्षाय निर्जिताशेषनिर्जरः ॥ ५१३ ॥
दशास्यवचनं श्रुत्वा हासोल्लाससितानन: ।
उवाच रुचिरं कुर्वन्पाताले चन्द्रिकां बलिः ॥ ५१४ ॥
एष द्वारि स्थितः श्यामः किरीटी दीर्घकुण्डलः ।
पुरुषः शाश्वतः श्रीमान्बद्धोऽहं येन लीलया ॥ ५१५ ॥
मधुकैटभमुख्यास्ते हिरण्याक्षपुरोगमाः ।
तस्योदरदरीं सर्वे प्रविष्टाः कालरूपिणः ॥ ५१६ ॥
एष स्रष्टा च संहर्ता विश्वरूपः सनातनः ।
यं मोक्षगामिनः सिद्धा यतयः पर्युपासते ॥ ५१७ ॥
सर्वात्मा भगवानेप प्रत्यक्षोऽपि न दृश्यते ।
प्रकाशबन्धुर्मोहान्धैः सहस्रांशुरिवाम्बरे ॥ ५१८ ॥
तं जेतुं तव संकल्पो हास्यं कस्य न जायते ।
पूर्णेन्दुयाच्ञा रुदिते(?) बालस्येव फलाशया ॥ ५१९ ॥
इत्युक्त्वा बलिना श्रुत्वा ततो निर्गत्य रावणः ।
न तं ददर्श पुरुषं देहस्थमिव मूढधीः ॥ ५२० ॥
स समुन्मज्य पातालात्तेनैवाम्बुधिवर्त्मना ।
शशाङ्कलोकं निःशङ्कः प्रतस्थे जेतुमञ्जसा ॥ ५२१ ॥

इति पातालविजयः ॥ १७ ॥

---

१. वामनोऽप्युरुक्रमतां नीत इति भावः.

व्योम्नि व्रजन्विमानेन मेरुशृङ्गमवाप्य सः।
विमानान्यर्कवर्णानि पश्यन्सुकृतिनां पुरः॥ ५२२॥
पप्रच्छ विस्मितस्तेषां प्रभावं पर्वतं मुनिम्।
स पृष्टो दशकण्ठेन देवर्षिस्तमभाषत॥ ५२३॥
एष सूर्यपथोत्तीर्णः संन्यासी मोक्षमास्थितः।
भासुरः सोमपश्चायं ब्रह्मवादी रथे स्थितः॥ ५२४॥
अयं शक्राधिकैश्वर्यो रणानलहुताकृतिः।
अयं सुवर्णदः श्रीमानेते सुकृतिनः परे॥ ५२५॥
मान्धाता चैव राजर्षिर्विवस्वानिव राजते।
एतदाकर्ण्य पौलस्त्यः स्वर्गमार्गं व्यगाहत॥ ५२६॥
विजेतुं भूपतेस्तत्र तेनाहूतस्य मानिनः।
बभूव सुमहद्युद्धं जम्भेनेव शचीपतेः॥ ५२७॥
तस्मिन्नस्त्रास्त्रसंघट्टघट्टिताशेषदिक्तटे।
संहारो(?)घोरसमरे भुवनानि चकम्पिरे॥ ५२८॥
ततः पाशुपतं राजा क्षीणे दिव्यास्त्रमण्डले।
अस्त्रं जग्राह येनाभूत्त्रिजगत्क्षोभविभ्रमः॥ ५२९॥
तां युद्धभुवमभ्येत्य महर्षिप्रवरौ तयोः।
पुलस्त्यगालवौ सख्यं चक्रतुर्विश्वशान्तये॥ ५३०॥

इति मान्धातृयुद्धम्॥ १८॥

ततो दशसहस्राणि योजनानां मरुत्पथम्।
प्रथमं हंसमालाङ्कं जगामाक्रम्य रावणः॥ ५३१॥
तत्तुल्यमपरं वातस्कन्धमाचक्रमे जवात्।
आग्नेयाः पक्षिणो ब्राह्मा त्रिविधा यत्र वारिदाः॥ ५३२॥
तृतीयं धाम सिद्धानां तुर्यं भूतगणाश्रितम्।
पञ्चमं दिग्द्विपक्षिप्तगङ्गाम्बुहिमशीकरम्॥ ५३३॥
षष्ठं सुपर्णनिलयं सप्तमं मुनिसेवितम्।
अतिक्रम्य दशग्रीवः स्फीतां च व्योमवाहिनीम्॥ ५३४॥

अशीतिं योजनानां तु सहस्राणीन्दुमण्डलम् ।
शतलक्षांशुविषदं भयदं प्राप्य रावणः ॥ ५३५ ॥
पपात सानुगस्तत्र यत्स शीतसमाहतः ।
सा कापि महती शक्तिर्हिमस्य दहनात्मिका ॥ ५३६ ॥
तं प्रहस्तोऽवदद्दन्तवाद्यप्रस्खलिताक्षरः ।
निवर्तस्व दशग्रीव निधनायेह संनिधिः ॥ ५३७ ॥
श्रुत्वैतत्कोपसंतप्तः पौलस्त्यः सोममण्डले ।
चिक्षेप दीप्तान्नाराचान्प्राप्तजीवितसंशयः ॥ ५३८ ॥
ततः स्वयं समभ्येत्य स्वयंभूस्तमभाषत ।
इतः पुत्र निवर्तस्व संरम्भं मा कृथाः परम् ॥ ५३९ ॥
प्राणक्षये स्वरक्षार्थं मन्त्रराजं गृहाण च ।
रौद्रं नामाष्टकशतं विजयो येन लभ्यते ॥ ५४० ॥
शिवः शिवप्रदो लोके भवो भवविनाशनः ।
हरः क्लेशहरो देवः शिवः सर्वार्थसिद्धिदः ॥ ५४१ ॥
विभुः स्वयंभूर्भगवान्भर्गः सर्गलयोदयः ।
शंभुः स्तम्भितजम्भारिभुजस्तम्भो महेश्वरः ॥ ५४२ ॥
सर्वदेवमयो वेत्ता विदितो वेदवादिनाम् ।
योगज्ञो योगिनां ध्येयः परमात्मा सनातनः ॥ ५४३ ॥
भूतकृद्भूतहृद्भूतभर्ता भूतिसिताकृतिः ।
स्तोत्रेणानेन विश्वेशः शंकरः परितुष्यति ॥ ५४४ ॥
इत्युक्त्वा राक्षसेन्द्राय नामाष्टशतकं विधिः ।
दत्त्वा जगाम भगवान्सिद्धर्षिगणवन्दितः ॥ ५४५ ॥

इति सोमलोकगमनम् ॥ १९ ॥

ततः प्रभृति निर्वृत्तो वरदृप्तो दशाननः ।
जहार सुरगन्धर्वनागकिंनरकन्यकाः ॥ ५४६ ॥

---

१. 'धर्म' शा०.

बलाधिकः समादाय कलत्राणि दिवौकसाम् ।
ययौ तत्कर्मणा क्रन्दसंपूरितदिगन्तरः ॥ ५४७ ॥
परदारोत्सुकः पापः परदारापहारकः ।
क्षयं प्रयास्यतीत्यूचुस्तं सुरासुरयोषितः ॥ ५४८ ॥
ततो जगज्जयोद्भूतः सदाभरणविग्रहः ।
संपूर्णविग्रहः प्राप लङ्कां राक्षसकुञ्जरः ॥ ५४९ ॥
अथ शूर्पणखा नाम तत्र लङ्कापतेः स्वसा ।
निपत्य पादयोर्दुःखाद्बाष्पाम्बुवदनावदत् ॥ ५५० ॥
अहो बत महाराज त्रैलोक्यजयिना त्वया ।
उचितं श्लाघनीयं च बन्धुकार्यं महत्कृतम् ॥ ५५१ ॥
सुहृदामुपकाराय बन्धूनामुदयाय च ।
अर्थ्यते विभवः सद्भिर्भोजनं कस्य दुर्लभम् ॥ ५५२ ॥
विश्वप्रसिद्धयशसा भुवनप्रभविष्णुना ।
विभवे संविभागार्हः पतिर्मे निहतस्त्वया ॥ ५५३ ॥
कालेया[1] नाम ये दैत्याः समरे निहतास्त्वया ।
तेषां मध्ये मम पतिर्विद्युज्जिह्वो निपातितः ॥ ५५४ ॥
श्रुत्वैतदप्रियं क्षिप्रं लज्जमानो दशाननः ।
तां समाश्वास्य प्रोवाच राक्षसं क्ष्मां विलोकयन् ॥ ५५५ ॥
भ्राता ममाधिकगुणः प्रियो मातृस्वसुः सुतः ।
पूजयिष्यति मद्वाक्यात्खरः स्वजननीमिव ॥ ५५६ ॥
मयास्य दण्डकारण्ये स्वं राज्यं प्रतिपादितम् ।
निर्देशकारी वश्यश्च तत्रायं ते भविष्यति ॥ ५५७ ॥
याते भर्तरि नारीणां संभोगविभवे गते ।
अयाच्या सुलभा वृत्तिः दुःखशूलापहारिणी ॥ ५५८ ॥
इत्युक्त्वा दण्डकारण्यं ससैन्यं दूषणानुगम् ।
विससर्ज सुरारातिः खरं शूर्पणखां च ताम् ॥ ५५९ ॥

इति दण्डकारण्यप्रदानम् ॥ २० ॥

1. 'कालकेया इति ख्याताः' इति रामायणे.

ततो निकुम्भिलां नाम लङ्कापर्यन्तकाननम् ।
सोऽपश्यच्चैत्ययूपाङ्कं मेघनादकृतैर्मखैः ॥ ५६० ॥
पुत्रं कृष्णाजिनधरं स परिष्वज्य दीक्षितम् ।
शुश्राव तद्व्यवसितं सर्वमौशनसाद्द्विजात् ॥ ५६१ ॥
अग्निष्टोमोऽश्वमेधश्च क्रतुर्बहुसुवर्णकः ।
राजसूयो गोसवश्च वैष्णवश्च सुतेन ते ॥ ५६२ ॥
संप्राप्ता दुर्लभा यज्ञाः पूर्णे माहेश्वरे क्रतौ ।
रणोपकरणं दिव्यं लब्धं रुद्रस्य शासनात् ॥ ५६३ ॥
संप्राप्ता तामसी माया स यज्ञोऽद्य समाप्यते ।
एतदाकर्ण्य पौलस्त्यः पुत्रमूचे स्मिताननः ॥ ५६४ ॥
न शोभनं कृतं वत्स यत्त्वया मम शात्रवः ।
यज्ञेष्वभ्यर्चिता देवाः क्षये येषामहं स्थितः ॥ ५६५ ॥
इत्युक्त्वा सह पुत्रेण राजधानीं विवेश सः ।
चक्रे शत्रुजिता सार्धं सैन्यं संनाहसंभृतम् ॥ ५६६ ॥
विभीषणस्तु ता दृष्ट्वा हृतास्त्रिदशयोषितः ।
उवाच भ्रातरं धीमान्पापाचारपराङ्मुखः ॥ ५६७ ॥
त्रैलोक्यविजयो राजन्परदाराविमर्षिणः ।
क्रतुर्न श्रोत्रियस्येव तवायं न विराजते ॥ ५६८ ॥
निर्दयत्यागसंभोगैः क्षीयन्ते नैव संपदः ।
श्रीलतामूलपरशुः प्राप्तो यावन्न दुर्नयः ॥ ५६९ ॥
श्रुतेन शोभते प्रज्ञा वाणी सत्येन शोभते ।
शमेन शोभते विद्या लक्ष्मीः शीलेन शोभते ॥ ५७० ॥
परित्यज्य कलत्राणि धर्म्याणि त्रिदिवौकसाम् ।
स्वचिन्ता क्रियन्तां तावत्सदाचारानुवर्तिनी ॥ ५७१ ॥
पुष्पोत्कटायास्तनया कन्या कुम्भीनसी बलात् ।
मधुना राक्षसेनैव निशि नीता प्रमाथिना ॥ ५७२ ॥

श्रुत्वैतत्क्रोधसंतप्तः श्वसन्नूचे दशाननः ।
प्रबुद्धः कुम्भकर्णोऽद्य मेघनादः कृतक्षणः ।
गच्छामस्त्रिदशाञ्जेतुं लङ्का संरक्ष्यतां त्वया ॥ ५७३ ॥
इत्युक्त्वा विपुलानीकः पौलस्त्यः सह मन्त्रिभिः ।
निर्ययौ ककुभः कुर्वन्रजोजीमूतलाञ्छनाः ॥ ५७४ ॥
दैत्यैः सुरेन्द्रविद्वेषादनुयातस्तरस्विभिः ।
पूर्वं मधुपुरं गत्वा स ददर्शाग्रजां पुरः ॥ ५७५ ॥
तया पादप्रणामेन भर्तृप्रीत्यार्थितो हि सः ।
तद्वैधव्यानुपाताच्च विरराम मधोर्वधात् ॥ ५७६ ॥
तं स्वर्गविजयोद्योगे कृत्वा सेनापुरःसरम् ।
स कैलासतटीं प्राप्य न्यषीदन्मुक्तवाहनः ॥ ५७७ ॥

इति सेनानिवेशः ॥ २१ ॥

विश्रान्तकटके तस्मिन्स्फाटिके कटके गिरेः ।
शृङ्गं विद्याधरीहर्म्यमारुरोह दशाननः ॥ ५७८ ॥
अथ कर्पूरधवलः श्यामामुखविशेषकः ।
प्राप तारापतिर्व्योम मानसे राजहंसताम् ॥ ५७९ ॥
प्राप ज्योत्स्नाट्टहासेन स्पष्टतां स्फटिकाचलः ।
बभौ चन्द्रोदयोद्भूतसुधाम्भोधिरिवापरः ॥ ५८० ॥
कुसुमामोदमुदिता बभ्रमुर्भ्रमराः परम् ।
तदा विरहिणीसृष्टा मूर्ताः कामाक्षरा इव ॥ ५८१ ॥
पृष्ठे कैलासशृङ्गेषु चन्द्रस्य प्रतिबिम्बितैः ।
बिम्बितैः प्रतिबिम्बैश्च बभूवेन्दुमयं जगत् ॥ ५८२ ॥
घनैर्निशाकरालोकैर्नखोल्लेखसहैरिव ।
घटिताः स्फाटिकेनेव शुभ्राः शुशुभिरे दिशः ॥ ५८३ ॥
चन्द्रांशुमालाधवलैः फुल्लैर्मन्दारपादपैः ।
मुहुर्जहास कैलासः शोभां चन्दनशाखिनाम् ॥ ५८४ ॥

सुराभिसारिकापीनस्तनोत्सङ्गतरङ्गिणः ।
पवनाश्चन्दनामोदप्रमोदसुहृदो ववुः ॥ ५८५ ॥
निशाकरकरैः स्मेरस्मरचामरचारुभिः ।
रेजे द्यौर्वीज्यमानेव स्पर्शशीलिततारका ॥ ५८६ ॥
धम्मिल्लपुष्परचनाव्यग्रसिद्धवधूजने ।
सोत्कण्ठा किंनरीगीतमीलितालिकुलस्वने ॥ ५८७ ॥
व्रजन्विद्याधरीस्वैरनारीनूपुरनादिते ।
ज्योत्स्नाहासिनि कैलासे प्रीतिं प्राप्य दशाननः ॥ ५८८ ॥
सोऽचिन्तयदियं कान्ता कामिनीं कौमुदीं विना ।
करोति हृदि संतापं लुब्धश्रीरिव निष्फला ॥ ५८९ ॥
अस्मिन्नवसरे रम्भा रम्भोरुरभिसारिका ।
आययौ वर्त्मना तेन कान्ता स्वर्गविलासिनी ॥ ५९० ॥
स्मरपुण्यैरसामान्यैर्लावण्यैरेव भूषिता ।
गृहीतरतिनेपथ्या मिथ्यारचितभूषणा ॥ ५९१ ॥
तारा हारांशुविशदा ज्योत्स्नस्वच्छदुगूलिनी ।
मूर्तेव शशिनः स्फीता कीर्तिः कैलासचारिणी ॥ ५९२ ॥
धम्मिल्लकुसुमामोदकृष्टशिञ्जानसंमदैः ।
आवेद्यमाना गमनाचारैरिव मनोभुवः ॥ ५९३ ॥
तां मुखेन्दुद्युतिसुधाधौताखिलदिगन्तराम् ।
जहर्ष रावणो दृष्ट्वा मरौ मन्दाकिनीमिव ॥ ५९४ ॥
स सादरः समुत्थाय पाणौ कमलकोमले ।
आलम्ब्योवाच रभसात्तां नवानन्दकौमुदीम् ॥ ५९५ ॥
स्वयमागमने सुभ्रु कस्यायं तदनुग्रहः ।
कस्य मन्मथसाम्राज्यमौलिर्मूर्ध्नि विराजते ॥ ५९६ ॥
इदं मधुमदाताम्रलोललोचनमाननम् ।
केन दष्टोष्ठसीत्कारतारं धन्येन धीमता ॥ ५९७ ॥

१. 'शोन्मीलि' शा०. २. 'कान्तिः' शा०.

को नाम त्रिजगत्यस्मिन्प्राप्तः स्मरनिधानताम्।
दोर्मृणालीयते यत्ते याति यस्योपदानताम् ॥ ५९८ ॥
कस्य जन्मान्तरे वक्षः खड्गैर्विदलितं युधि।
इयं कुचतटी यस्मिन्याति चन्दनचौरताम् ॥ ५९९ ॥
पूर्णपुण्यपणप्राप्यं संभोगविभवास्पदम्।
कस्ते स्वर्गमिवानर्घं नितम्बमधिरोहति ॥ ६०० ॥
रोमावलीपताकाङ्कं मेखलाकिंकिणीयुतम्।
श्रोणीविमानं कस्येदं सज्जं सुकृतिशालिनः ॥ ६०१ ॥
निवर्तस्व न शक्नोमि त्वां त्यक्तुं चारुलोचने।
अयत्नोपनतां रम्भे सुधां त्यजति कः सुधीः ॥ ६०२ ॥
शक्तिः प्रभावः प्रभुता भोगः संभोगसंपदाम्।
सुदुर्लभानां लाभश्च तीव्रस्य तपसः फलम् ॥ ६०३ ॥
इति तस्य वचः श्रुत्वा बलिनस्तनुमध्यमा।
कम्पमाना तमवदद्वल्लीवानिललोलिता ॥ ६०४ ॥
स्नुषाहं तव धर्मेण लङ्केश्वर विमुञ्च माम्।
प्रभविष्णुरमर्यादं(?)स्थितिलोपोऽपि दुःसहः ॥ ६०५ ॥
य एव विश्रुतः श्रीमान्भ्राता वैश्रवणस्तव।
तस्य पुत्रो गुणनिधिः प्रियो मे नलकूबरः ॥ ६०६ ॥
इदमेतत्कृते सर्वं संभोगार्हं प्रसाधनम्।
सौभाग्यलुब्धाः कामिन्यो मधुरेष्वधिकादराः ॥ ६०७ ॥
कुले महति जातानां सुधियां श्रुतशालिनाम्।
अकीर्तिर्न भवत्येव न च शीलच्युता मतिः ॥ ६०८ ॥
इति ब्रुवाणां रक्षस्तां न मुमोच स्पृहामिव।
प्रबलः कुलजां लज्जां सहते नहि मन्मथः ॥ ६०९ ॥
तां रावणः परित्यज्य भयमीलितलोचनाम्।
चकर्ष स्पर्शरसिकः कम्पमानघनस्तनीम् ॥ ६१० ॥

सा बलाद्बलिना तेन मातङ्गेनेव दूषिता ।
अभूल्लावण्यनलिनीपरिम्लानमुखाम्बुजा ॥ ६११ ॥
ततः सुरतवि[1]स्रस्तकबरीकुसुमच्छदा ।
अधोमुखी वेपमाना खण्डिताधरपल्लवा ॥ ६१२ ॥
स्तनौ नखमुखोच्छिष्टौ गूहमाना मनस्विनी ।
सोच्छ्वासा प्रययौ रम्भा स्वेदधौतानुलेपना ।
सा कुवेरपुरीं गत्वा समेत्य नलकूबरम् ॥ ६१३ ॥
पादयोर्विनिपत्यास्य स्ववृत्तान्तं न्यवेदयत् ।
स दृष्ट्वा दयितां भुक्तां रावणेन प्रमादिना ॥ ६१४ ॥
पीतोज्झिताधरः क्रोधात्प्रजज्वाल विलोकयन् ।
ततः सलिलमादाय पाणिना धनदात्मजः ॥ ६१५ ॥
उपस्पृश्योत्ससर्जोग्रं शापं पापस्य रक्षसः ।
अकामां योषितं कामात्स यदा धर्षयिष्यति ॥ ६१६ ॥
सप्तधा यास्यति शिरस्तदा तस्य न संशयः ।
इति शापं प्रतीहार्यं प्रदत्तानुमतं सुरैः ॥ ६१७ ॥
मुक्तहालाहलो नाग इव तस्थौ विनिश्वसन् ।
घोरं श्रुत्वा दशग्रीवस्तं शापं जीवितापहम् ॥ ६१८ ॥

इति नलकूबरशापः ॥ २२ ॥

ततस्त्रिदिवमासाद्य सहसैन्यैर्दशाननः ।
संनाहव्यग्रगीर्वाणं गणं गहनमाविशत् ॥ ६१९ ॥
[2]क्रुद्धे रावणसैन्येन समन्तात्त्रिदशालये ।
विष्णुः शरणमायातमभाषत शतक्रतुम् ॥ ६२० ॥
[3]तन्नाप्तकालो वध्यो मे वध्योऽपि दशकन्धरः ।
युक्त्या बुध्यस्व देवेश काले हन्तासि तं युधि ॥ ६२१ ॥
इत्युक्ते विष्णुना शक्रः सह [4]सर्वैर्मरुद्गणैः ।
युयुधे युधि संनद्धः पौलस्त्येन प्रहारिणा ॥ ६२२ ॥

---

१. 'विलस्त' शा० शो०. २. 'रुद्धे' इति स्यात्. ३. 'नावास' शा०. ४. 'देवै' शा०.

वस्वादित्याश्विरुद्रेन्दुशस्त्रास्त्रज्वलिते रणे ।
जीमूतव्यूहमलिना विबभुः क्षणदाचराः ॥ ६२३ ॥
समरे दुःसहे तस्मिन्संसारे युधि रक्षसाम् ।
सुमालिना राक्षसेन युयुधे वसुरष्टमः ॥ ६२४ ॥
तौ मिथः शरनिर्घोषहेमज्वालाविभीषणौ ।
[1]दीप्तौषधिवनौ तत्र(?) शिखाविव बभूवतुः ॥ ६२५ ॥
शरैः पूरितगात्रोऽथ वसुर्दीप्तैः सुमालिनः ।
रथमुन्मथ्य विशिखैर्गदां चिक्षेप मूर्धनि ॥ ६२६ ॥
गदानिपातदलिते हते वीरे सुमालिनि ।
वध्यमानेषु रक्षःसु युयुधे रावणात्मजः ॥ ६२७ ॥

इति सुमालिवधः ॥ २३ ॥

मेघनादोऽथ समरे दयितं वज्रिणः सुतम् ।
जित्वा जयन्तं समरे रक्षसा हर्षमादधौ ॥ ६२८ ॥
ततो बभूव तुमुलं युद्धं पौलस्त्यशक्रयोः ।
प्रापुः प्रेक्षकतां यस्मिन्विस्मिताः सासुराः सुराः ॥ ६२९ ॥
कुम्भकर्णोऽपि देवानां शैलशस्त्रास्त्रवृष्टिभिः ।
चकार कदनं घोरं कृतान्तमिव(?) देहिनाम् ॥ ६३० ॥
ततः सर्वैः सुरैः सार्धं रक्षसां त्रिदशेश्वरः ।
संहारं विदधे धीरस्तमसामिव भास्करः ॥ ६३१ ॥
सुरसैन्यविशेषाय क्रुद्धो योद्धुं दशाननः ।
तं वज्रपाणिः सावेगं शरवर्षैरवाकिरत् ॥ ६३२ ॥
ग्रस्तश्चक्रेण पौलस्त्य इति नादे समुत्थिते ।
रथेन घनघोषेण मेघनादः समाययौ ॥ ६३३ ॥
मायातिरोहितः शक्रं स समाच्छाद्य सायकैः ।
उन्ममाथ रथे तस्य विजये च मनोरथम् ॥ ६३४ ॥

---

१. 'निशि दीप्तौषधिवरशिलाविव' शा०.

कुद्धमैरावणारूढं पुरस्तं रावणात्मजः ।
ववन्ध विवुधानीकमध्ये विध्वस्तविक्रमम् ॥ ६३५ ॥
प्रहृष्टस्तं समादाय रणे विद्रवितामरः ।
पित्रा सह ययौ लङ्कामिन्द्रजिद्विपुलैर्बलैः ॥ ६३६ ॥
जित्वा हत्वा रणे शक्रं गते शक्रजिति स्वयम् ।
सह विश्वसृजा सर्वे लङ्कामेव ययुः सुराः ॥ ६३७ ॥
ततः प्रजापतिगिरा मुमोचेन्द्रं जगज्जये ।
बभूव चेन्द्रजिन्नाम्ना विश्रुतो रावणात्मजः ॥ ६३८ ॥
वीरः पितामहवरादमरत्वमवाप च ।
अन्यत्रावसमाप्ताग्निहोमस्य रणसंगमात् ॥ ६३९ ॥
मुक्तस्तेनामरपतिर्भग्नमानोऽतिलज्जितः ।
तस्थौ प्रजापतेरग्रे मूकश्चिरमधोमुखः ॥ ६४० ॥
तमब्रवीत्कमलभूश्चिन्तां मिथ्यैव मा कृथाः ।
शक्र स्वदुर्नयेनैव प्राप्तमेतत्फलं त्वया ॥ ६४१ ॥
एकवर्णवयोरूपाः पुरा सृष्टा मया प्रजाः ।
विशेषायैव तासां च निर्मिता ललना ततः ॥ ६४२ ॥
उच्चित्योच्चित्य भूतानामङ्गेभ्यो रूपमुत्तमम् ।
अहल्या नाम सा कान्ता कृता शशिमुखी मया ॥ ६४३ ॥
स्पृहास्पदं सा लोकस्य तव चाभ्यधिकं सती ।
न्यासीकृता स्वयं हस्ते गौतमस्य मुनेर्मया ॥ ६४४ ॥
चिरादभ्रष्टशीलाया तस्मै सा प्रतिपादिता ।
पत्नी बभूव ययुर्निराशाश्च दिवौकसः ॥ ६४५ ॥
धर्षितायां त्वया त्वस्यां मुनिः कोपानलाकुलः ।
त्वां शापादफलं चक्रे तेन[2] मेषवृषो भवान् ॥ ६४६ ॥
बन्धस्ते शत्रुणा चायं मुनेस्तस्यैव शासनात् ।
अहल्या च शिलारूपा रामसंदर्शनावधिः ॥ ६४७ ॥

---

१. 'पुरस्थं' स्यात्. २. 'येन मेषवृषो' शा०.

सर्वसाधारणं रूपं ततः प्रभृति चाभजत् ।
कदाचिद्गौतमे याते स्नातुं नद्यां यथाविधि ॥ ६४८ ॥
विचित्रतच्चरित्रेभ्यो राज्यमाशङ्क्य नश्वरम् ।
गृहीतमुनिरूपश्च तदाश्रममगाद्द्रुतम् ॥ ६४९ ॥
त्वं प्राप्य गौतममुनेराश्रमद्वारमञ्जसा ।
आहूतवान्मुनिवधूरर्गलं वार्यतामिति ॥ ६५० ॥
अज्ञातकैतवा साथ भार्या साध्वी महामुनेः ।
आश्रमस्था तमोराग्रात्स्वभर्तारमवैक्षत ॥ ६५१ ॥
ततोऽहल्या निजं ज्ञात्वा भर्तारमसमञ्जसम् ।
निरर्गलद्वारमादौ तदज्ञालभसादरा ॥ ६५२ ॥
त्वं प्रविश्यैव तां साध्वीं हृतशीलमहानिधिम् ।
अकार्षीः पापनिरतो भवदुःखमचिन्तयन् ॥ ६५३ ॥
क्षणिकस्य कृते मूढाः सुखस्यैव हि भुञ्जते ।
नरकेष्वक्षयाः पीडाः कामबाणवशीकृताः ॥ ६५४ ॥
ततः स गौतममुनिः स्नानं कृत्वा यथोचितम् ।
आजगामोज्जुहाव स्वां पत्नीं यज्ञार्थकोविदाम् ॥ ६५५ ॥
हे पत्नि वार्यतां क्षिप्रमर्गलं द्वारसंश्रयम् ।
रममाणेति शुश्राव त्वया सह ससंभ्रमा ॥ ६५६ ॥
त्वं ततः शापवित्रस्तः कृत्वा शीलनिधिव्ययम् ।
प्रविष्टो दुलिमेतस्या भ्रामरं रूपमाश्रयन् ॥ ६५७ ॥
ततस्तां निजभर्ता स गौतमस्तमसा वृतः ।
अभाषत कथं पत्नि चकितेवाभिलक्ष्यसे ॥ ६५८ ॥
नून शीलमहारत्नं हृतं केनाप्यसाधुना ।
न चेदीदृग्विधोद्भूतदुःखावस्थासि किं प्रिये ॥ ६५९ ॥
नूनं स निजसाम्राज्यविभ्रंशाशङ्किचेतनः ।
शक्रो वराक एवं मे चकाराग्निविडम्बनात् ॥ ६६० ॥

---

१. 'रक्षणम्' शा०. २. 'योनि' शा०.

भ्रामरं रूपमाश्रित्य प्रविष्टो भगमण्डलम्।
तत्सहस्रभगो भूयाः सर्वाङ्गेषु महाधम ॥ ६६१ ॥
यदा गवाक्षां स्नात्वैव वितस्तासिन्धुसंगमे।
स्नास्यसि त्वं तदा शक्र सहस्रनयनो भव ॥ ६६२ ॥
इत्थं परस्त्रीसङ्गेन प्राप्यते दुःखमव्ययम्।
यतस्ते मुनिशापेन बद्धः सोऽयं विलम्ब्यते ॥ ६६३ ॥
पापः संभजते च त्वां परदारापहारिणम्।
वैष्णवं क्रतुमाराध्य धूतपापः शचीपते ॥ ६६४ ॥
भुक्त्वा राज्यं चिरं कालं न भविष्यति रावणः।
इत्युक्त्वा त्रिदशाधीशः स्थितिं त्रातुं प्रजासृजा।
जगाम सहितो देवैश्चिन्तयन्रावणक्षयम् ॥ ६६५ ॥

इत्याहल्यम् ॥ २४ ॥

ततः कालेन महता रावणः सचिवैः सह।
व्रजन्नवाप विपुलं द्वीपं पश्चिमवारिधेः ॥ ६६६ ॥
ददर्श पुरुषं तत्र निर्धूमज्वलनप्रभम्।
हेमाचलमिव व्याप्तचण्डमार्तण्डतेजसा ॥ ६६७ ॥
युद्धार्थी रावणस्तस्मै दीप्तशस्त्रपरंपराम्।
प्राहिणोन्न चकम्पे च पुरुषो दीप्तविग्रहः ॥ ६६८ ॥
देवदेव तपोयज्ञदानलोकमयाकृतिः।
स विश्वात्मा बभौ तत्र सुरसिद्धनमस्कृतः ॥ ६६९ ॥
मुष्टिना पीडितस्तेन हेलयैव दशाननः।
पपाताञ्जनशैलाभः कृत्तपक्ष इव क्षितौ ॥ ६७० ॥
मूर्छिते पतिते तस्मिन्भगवान्कपिलः क्षणम्।
विवेश पातालतलं विद्युत्पुञ्ज इवाम्बुधिम् ॥ ६७१ ॥
लब्धसंज्ञो दशग्रीवः सचिवेभ्यो निशम्य तम्।
देवं प्रविष्टं पातालं प्रविवेशोग्रखड्गभृत् ॥ ६७२ ॥

१. 'विमलं' इति स्यात्. २. 'क्षणात्' शा०.

तत्राञ्जनसवर्णानां दिव्याभरणवाससाम् ।
दृष्टास्तेन प्रवृत्तानां तिस्रः कोट्यः प्रभावताम् ॥ ६७३ ॥
तुल्यवर्णवलाकारान्दृष्ट्वा तान्कपिलात्मजान् ।
वभूव रावणः क्षिप्रं जातरोमाञ्चकञ्चुकः ॥ ६७४ ॥
ततः स शेषनिर्मोककान्तिस्वच्छोत्तरच्छदे ।
शयानं दिव्यशयने ददर्श पुरुषं परम् ॥ ६७५ ॥
पीतांशुकोपमानेन तेजसा व्याप्तविग्रहम् ।
नाभिपद्मरजःपुञ्जपटेनेवावगुण्ठितम् ॥ ६७६ ॥
तस्याग्रे ललिताकारां कीर्तिसंतानकौमुदीम् ।
ददर्श लक्ष्मीमक्षेण पीयूषकिरणाननाम् ॥ ६७७ ॥
सुतारचामरकरां लीलाकमललाञ्छनाम् ।
शशाङ्कपद्मयोर्लग्नामिव वैरिनिवारणे ॥ ६७८ ॥
नयनग्राहिणीं निद्रामिव दूराद्विलोक्य ताम् ।
सस्माराकुलिताः क्षिप्रं पूर्णमानाशयोऽवदत् ॥ ६७९ ॥
आदातुकामस्तां मोहात्पतङ्गोऽग्निशिखामिव ।
ससर्प सर्पकुटिलां गतिमाश्रित्य राक्षसः ॥ ६८० ॥
तस्य व्यवसितं ज्ञात्वा समुत्सार्यांशुकं मुखात् ।
उन्मील्य नयने विष्णुर्जहासोच्चैर्विलोक्य तम् ॥ ६८१ ॥
ज्वलता तेजसा तस्य छिन्नमूल इव द्रुमः ।
पपात राक्षसपतिर्मोहमूर्छितमानसः ॥ ६८२ ॥
तमुवाच ततो देवः किंचिदागतजीवितम् ।
उत्तिष्ठ राक्षस क्षिप्रं रक्ष्यस्त्वं ब्रह्मणो वरात् ।
सदाचारपरिभ्रष्टो वध्योऽसि न चिरान्मम ॥ ६८३ ॥
एतदाकर्ण्य शनकैर्लब्धसंज्ञो दशाननः ।
सहसोद्गतरोमाञ्चस्तमुवाच कृताञ्जलिः ॥ ६८४ ॥
भगवन्यदि मे मृत्युस्त्वत्करे वेधसा धृतः ।

---

१. 'यशो' क-ख.

तदेकस्मिञ्जगत्यस्मिन्धन्योऽहं यशसां निधिः ॥ ६८५ ॥
इत्युक्त्वा स ददर्शास्य लीनं विश्वात्मनस्तनौ ।
ससुरासुरगन्धर्वं त्रैलोक्यं सचराचरम् ॥ ६८६ ॥
गत्वा ततो दशग्रीवस्तान्प्राप्य सचिवान्निजान् ।
प्रययौ शनकैर्लङ्कामाश्चर्यं तद्विचिन्तयन् ॥ ६८७ ॥

इति महापुरुषदर्शनम् ॥ २५ ॥

इत्युक्तमग्रे रामस्य मुनिना कुम्भयोनिना ।
आकर्ण्य सर्वं स्मृत्वा च तथेत्यूचे विभीषणः ॥ ६८८ ॥
ततः समुद्यतं गन्तुमगस्त्यं राघवोऽब्रवीत् ।
भगवन्भवतः सर्वमस्माभिः श्रुतमद्भुतम् ॥ ६८९ ॥
प्राप्तप्रतापः पौलस्त्यः पुत्रश्चास्य किमुच्यते ।
अहं प्रभावमधिकं तेभ्यो मन्ये हनूमतः ॥ ६९० ॥
अचिन्त्यश्चासकृल्लोके कालः सर्गे प्रजापतिः ।
युद्धे च हनुमानेष चतुर्थो नोपलभ्यते ॥ ६९१ ॥
कस्य शक्तिरिवाश्रान्तमकराकरलङ्घने ।
देवादन्यत्र पवनात्तत्पुत्राद्वा हनूमतः ॥ ६९२ ॥
हतोऽनेन न यद्वाली सुग्रीवहितकारणात् ।
तद्विस्मृतप्रभावोऽयं मन्ये स्वप्न इवाभवत् ॥ ६९३ ॥
इत्युक्तं रघुनाथेन श्रुत्वा कुम्भोद्भवो मुनिः ।
उवाच सत्यमन्तस्थं यत्त्वयोक्तं हनूमति ॥ ६९४ ॥
अञ्जनायामयं जातः क्षेत्रे केसरिणोऽनिलात् ।
शिशुर्बालार्कमादातुमुत्पपात बलाशयात् ॥ ६९५ ॥
एतस्मिन्नेव काले तु राहुः पर्वणि भास्करे ।
सहायातो ददर्शाग्रे कपिं सूर्यग्रहोद्यतम् ॥ ६९६ ॥
तं दृष्ट्वा कुपितो राहुर्गत्वा शक्रं समास्थितम् ।
उवाच बत मिथ्यैव युष्माकं सत्यवादिता ॥ ६९७ ॥

---

१. 'श्रान्ता' क-ख.

शिरश्छित्त्वा कृतो यो मे आसाभ्यासविनोदनम् ।
कथमेतौ च चन्द्रार्कौ त्वयान्यत्र समन्वितौ ॥ ६९८ ॥
सूर्यग्रहे मयाद्यैव पृष्टो राहुस्तदम्बरे ।
येन स्फारशरीरेण प्रायः क्षिप्तो मुखे रविः ॥ ६९९ ॥
इत्युक्तो राहुणा शक्रः स्थितिविप्लवशङ्कितः ।
ययावैरावणारूढः कृत्वा राहुं पुरःसरम् ॥ ७०० ॥
पुरंदरं समाश्रित्य निर्भयं सिंहिकासुतः ।
विस्तार्य वदनं श्वभ्रं सहस्रांशुं समाद्रवत् ॥ ७०१ ॥
तं विलोक्यैव हनुमानभ्यधावज्जिगीषया ।
शक्र शक्रेति चुक्रोश राहुस्तं भयविद्रुतः ॥ ७०२ ॥
न भेतव्यं त्वयेत्युक्त्वा वज्रिणा पवनात्मजः ।
ऐरावणं समादातुं बलाद्बालः समाद्रवत् ॥ ७०३ ॥
हनुं जघान वज्रेण तं कोपात्पाकशासनः ।
येनाद्रौ पतितस्यास्य वामो हनुरभज्यत ॥ ७०४ ॥
पुत्रप्रहारकुपितस्ततो देवः प्रभञ्जनः ।
चकार सर्वथा तानि काष्ठभूतानि भूतकृत् ॥ ७०५ ॥
इति हनुमज्जन्मवर्णनम् ॥ २६ ॥
ततो जगत्क्षयभयाद्देवैरभ्यर्थितः स्वयम् ।
गत्वा वायुप्रसादाय ब्रह्मा पुत्रमजीवयत् ॥ ७०६ ॥
पितामहकरस्पृष्टं तनयं लब्धजीवितम् ।
आसाद्य हृष्टः पवनः स्वस्थश्चक्रे जगत्क्षणात् ॥ ७०७ ॥
ततः प्रजापतिगिरा वरान्पवनसूनवे ।
प्रददुस्त्रिदशाः सर्वे येनायं प्रवरोऽभवत् ॥ ७०८ ॥
हनुमानिति नामास्य कृत्वा वज्रविभेदिनीम् ।
ददौ शतक्रतुर्विद्यां तेजोभावं च भास्करः ॥ ७०९ ॥
अमरत्वं च वरुणः स्वदण्डादभयं यमः ।
निष्कम्पतां गदाघाते स्वायुधेषु च वित्तपः ॥ ७१० ॥

शूलपाशुपतादिभ्योऽप्यभयं भगवान्भवः ।
ब्रह्मास्त्रब्रह्मदण्डाद्यैरवध्यत्वं प्रजापतिः ॥ ७११ ॥
सर्वायुधप्रतीघातं विश्वकर्मास्त्रशस्त्रकृत् ।
इत्येष वरसंपूर्णः पितुर्गेहे व्यवर्धत ॥ ७१२ ॥
ततस्तपोवनं गत्वा मुनीनां वालचापलात् ।
कपिर्विकारमकरोद्धनदादेष निर्भयः ॥ ७१३ ॥
वल्कलाजिनभाण्डेषु कृत्वा पूर्णस्वनेन ते ।
मुनयो विस्मृतवलं चक्रुः क्रोधावशादिमम् ॥ ७१४ ॥
कश्चित्कालं वभूवायं शापाद्विस्मृतविक्रमः ।
तस्माद्वालिवधे बुद्धिर्नास्य स्वप्नेऽप्यजायत ॥ ७१५ ॥
सूर्याद्व्याकरणं साङ्गमुदयादस्तपर्वतम् ।
व्रजन्नवाप्तवानेष वासरेण महामतिः ॥ ७१६ ॥
आश्चर्याणामयं भूमिः सत्त्वानामिव सागरः ।
कोऽस्य शक्तो गुणान्वक्तुं यो न जिह्वासहस्रभृत् ॥ ७१७ ॥
इत्युक्ते मुनयः सर्वे राममामन्त्र्य सानुगम् ।
अगस्त्यप्रमुखा जग्मुः पुण्यं स्वं स्वं तपोवनम् ॥ ७१८ ॥

इति ऋषिप्रयाणम् ॥ २७ ॥

अथापरेऽह्नि काकुत्स्थः साभिषेकोत्सवागतान् ।
रत्नैः संपूज्य भूपालान्विससर्ज निजा दिशः ॥ ७१९ ॥
मैथिलो जनकः श्रीमान्युधिजित्केकयाधिपः ।
प्रमर्दितः काशपतिर्भूपाश्चान्ये सहस्रशः ॥ ७२० ॥
व्रजन्तो राममामन्त्र्य चक्रिरे छत्रचामरैः ।
साट्टहासमिवाशेषे गजवाजिमयं जगत् ॥ ७२१ ॥
आसाद्य पूजामतुलां पुनः प्लवगपुंगवाः ।
सुग्रीवाङ्गदमुख्यास्ते किष्किन्धां प्रययुस्ततः ॥ ७२२ ॥

१. 'जग्मुः' शा०.

असमाक्षसुरास्वादसुहृत्प्रेममहोत्सवः ।
जगाम रामसर्वस्वं हृष्टो लङ्कां विभीषणः ॥ ७२३ ॥
ततः समुद्यतो गन्तुं हनूमान्प्रेमनिर्भरः ।
उवाच राघवं वीरस्तृप्तिमप्राप्य दर्शनम् ॥ ७२४ ॥
त्वत्कथामृतपाथेयः शिखरेषु महीभृताम् ।
चिरं प्रीतिमवाप्स्यामि सुकृतस्मरणात्तव ॥ ७२५ ॥
यशः श्रोष्यामि ते यावद्गीतमप्सरसां गणैः ।
तावत्पुण्यमिदं श्लाघ्यं जीवितं मे भविष्यति ॥ ७२६ ॥
इति ब्रुवाणं प्रणयात्काकुत्स्थः पवनात्मजम् ।
परिष्वज्यादरादूचे बाष्पपूर्णायतेक्षणः ॥ ७२७ ॥
महार्हस्त्रिदशश्लाघ्यः स्थिरो लोके भविष्यति(?) ।
(?) समस्तभवनोद्गीतमायुषो वयसश्च मे ॥ ७२८ ॥
निष्कारणप्रणयिना यत्त्वयोपकृतं सखे ।
कन्यका यौवनमिव स्वाङ्गे जीर्णं तदेव नः ॥ ७२९ ॥
यशोधनस्य विख्यातगुणरत्ननिधेस्तव ।
उपकारफलं तुल्यं न पश्यामि जगत्त्रये ॥ ७३० ॥
इत्युक्त्वा सगुणोदारं स सदा हृदयस्थितम् ।
सौहार्दमिव साकारं हारं कण्ठे न्यवेशयत् ॥ ७३१ ॥
ततः प्रयाते काकुत्स्थः स्वपदं पवनात्मजे ।
हरिराक्षससैन्येन चिरेण धृतिमासवान् ॥ ७३२ ॥

इति नृपकपिरक्षःप्रयाणम् ॥ २८ ॥

ततः सीतामुखाम्भोजमधुपो रघुनन्दनः ।
निनाय मदनोदग्रसंभोगसुभगाः क्षपाः ॥ ७३३ ॥
ज्योत्स्नासिते हर्म्यतले कानने कुसुमस्मिते ।
हारस्मिते [2] तनतटे लेभे स सुकृती रतिम् ॥ ७३४ ॥

---

1. 'पानेषु' शा०. 2. 'स्तनतटे' स्यात्.

अत्रान्तरे व्योममार्गादवतीर्याशु पुष्पकम् ।
विमानोऽप्यवदद्दिव्यवपुषा रघुनन्दनम् ॥ ७३५ ॥
विसृष्टोऽहं रघुपते राज्ञा वैश्रवणेन ते ।
भुजोर्जितस्य क्रियतां मम भोगादनुग्रहः ॥ ७३६ ॥
तमुवाचार्घ्यकुसुमैः संपूज्य रघुनन्दनः ।
स्वैरं हि विहरत्त्वेष समेष्यसि समं स्मृतः ॥ ७३७ ॥
श्रुत्वैतत्पुष्पके पूर्वं प्रयाते स्वेच्छया दिवम् ।
विवेशाशोकवनिकां राघवो जानकीसखः ॥ ७३८ ॥
तत्र लावण्यनलिनीं तां फुल्लकमलाननाम् ।
प्रीतिं रामश्चिरं लेभे नलिनीं च विलोकयन् ॥ ७३९ ॥
स सीतावदनौपम्यप्रीत्या निक्षिप्य लोचने ।
मुहुः शशिनि पद्मेव जगन्मेने प्रियामयम् ॥ ७४० ॥
ससंभोगसुखाम्भोजसनाथीकृतमन्मथः ।
विललास विलासाङ्के शशाङ्कवदनासखः ॥ ७४१ ॥
स कदाचित्प्रियतमामुवाच प्रेमनिर्भरः ।
पिबन्निव दृशा तस्या वदनं मदनामृतम् ॥ ७४२ ॥
आपाण्डुरमुखे सुभ्रु सचन्द्रेव विभावरी ।
दृश्यसेऽभिनवारम्भगर्भाविर्भूतलक्षणा ॥ ७४३ ॥
किमयं ते प्रियं देवि करोतु प्रणयी जनः ।
न दुर्लभं जगत्यस्मित्यत्र ते रमते मतिः ॥ ७४४ ॥
इति प्रियेण प्रणयात्पृष्टा जनकनन्दिनी ।
तमुवाच स्मितमुखी सृजन्तीं चन्द्रिकां पुरः ॥ ७४५ ॥
पुण्यानि मुनिसेव्यानि काननानि त्वया सह ।
चिरं स्मृतानि मे द्रष्टुं क्षणमुत्कण्ठते मनः ॥ ७४६ ॥
इति कान्तावचः श्रुत्वा तां तथेत्यभिधाय च ।
अन्तःपुरचरो रामः कामं निर्वृतिमासवान् ॥ ७४७ ॥

---

१. 'वदनं पश्यन्' शा०.

अथ कक्षान्तरं रामो गत्वान्तःपुरमन्दिरम् ।
नानाकथाभिश्चित्राभिश्चिरं तस्थौ सुहृद्वृतः[1] ॥ ७४८ ॥
विजयो[2] मधुमान्भद्रः कश्यपः पिङ्गलः कुरुः ।
सुराजको वैज्ञदन्तो[3] मागधश्च मनीषिणः ॥ ७४९ ॥
नवैते नन्दसुहृदा रामस्य हृदयप्रियाः ।
परिहासकथाशीलैस्तैः स गोष्ठीरतोऽभवत् ॥ ७५० ॥
ततः कथान्ते पप्रच्छ भद्रं राजा यशःप्रियः ।
पुरे जनपदे वास्मिन्प्रवादः कीदृशो मम ॥ ७५१ ॥
किमाहुर्मे शुभं लोके किमाहुरशुभं जनाः ।
ज्ञात्वा मनोभयं कुर्यान्निर्दोषं गुणसंग्रहम् ॥ ७५२ ॥
गुणदोषं स्फुटं वाच्यं सुहृद्भिः सर्वथा जनः ।
छन्नदोषं गुणं वक्ति यः स मित्रमुखो रिपुः ॥ ७५३ ॥
इत्युक्ते रघुनाथेन भद्रः प्राञ्जलिरब्रवीत् ।
राजन्नानाविधो लोकः परनिन्दास्तुतिव्रतः ॥ ७५४ ॥
शुभाशुभकथां कामं जनः सूर्योऽपि भाषते ।
शक्तिर्दशाननवधे कथमत्यद्भुतं तव ॥ ७५५ ॥
जनः सीतापहारे च शीलशङ्कासहिष्णुताम् ।
अनाश्चर्यद्वयं लोके राघवस्यैव दृश्यते ॥ ७५६ ॥
क्षमा कलत्रदोषे च सेतुबन्धश्च सागरे ।
वयमप्यधुना सर्वे दारदोषान्सहामहे ॥ ७५७ ॥
महाजनानुयायिन्यः प्रायेण सततं प्रजाः ।
इति प्रवादो लोकस्य मिथ्यादोषैकदर्शिनः ।
मिथः कथासु रथ्यासु गृहेपूपवनेषु च ॥ ७५८ ॥
इत्येतदशनिस्पर्शं वचो निपतितं हृदि ।
आकर्ण्य राघवो दुःखाच्चक्रारूढ इवाभवत् ॥ ७५९ ॥

---

१. 'सुहृद्वतः' शा०. २. 'विजयो मधुमत्तश्च काश्यपो मङ्गलः कुलः । सुराजिः कालियो भद्रो दन्तवक्रः सुमागधः ॥' इत्येवं वा० रामायणे. ३. 'राजदन्तो' शा०

स तान्विसृज्य सुहृदश्चिन्तासंतप्तमानसः ।
द्वाःस्थं विसृज्यानुमतानानिनाय निजानुजान् ॥ ७६० ॥
इति जनापवादः ॥ २९ ॥

ततो भरतसौमित्रिशत्रुघ्नास्तूर्णमागताः ।
प्रविश्य रामं ददृशुः प्रणामनतशेखराः ॥ ७६१ ॥
तं बाष्पपूर्णनयनं शोकम्लानमुखाम्बुजम् ।
ते दृष्ट्वा संभ्रमोद्भ्रान्ता बभूवुः कम्पिताशयाः ॥ ७६२ ॥
सहसा हारिते हर्षे वीक्ष्यमाण इवावनौ ।
उपविश्य बभुवुस्ते चिन्ताशान्तमुखत्विषः ॥ ७६३ ॥
चिरं ध्यात्वाप्यपश्यन्तस्ते भ्रातुः शोककारणम् ।
किं वक्ष्यतीति निष्पन्दं पप्रच्छुः स्वमिवाशयम् ॥ ७६४ ॥
तानुवाच ततो रामः शोकसंतप्तमानसः ।
अयं मे हृदये सक्तः शोकशङ्कुरिवापरः ॥ ७६५ ॥
दारापवादसंजातो यत्काकुत्स्थकुलेन वा ।
धर्मो जानाति वैदेहीमन्तरात्मा ममैव या ॥ ७६६ ॥
शीलं न वेत्ति कस्तस्यालोको निर्दोषनिन्दकः ।
अस्मिन्सीतापवादाग्नौ पतितस्य ममाधुना ॥ ७६७ ॥
न जाने तापशमनी विद्यते का प्रतिक्रिया ।
श्रूयते पुरुषस्येह यावत्कीर्तिरविप्लुता ॥ ७६८ ॥
तावत्स जीवति परः श्वासैरायास्यते जनः ।
अकीर्तिमलिनः पुंसः पुत्रपौत्रास्त्रपातिनी ॥ ७६९ ॥
नरकाग्नेः स्थितस्याग्रे धूमलेखेव जायते ।
धिक्तं भ्राम्यति यस्योग्रपापपङ्ककलङ्किता ॥ ७७० ॥
उन्मत्तेव जगत्यस्मिन्नपवादपिशाचिका ।
अपि प्राणाधिका सीता त्यज्यते तृणवन्मया ॥ ७७१ ॥
न तु कीर्तिं सहे लोके शतांशेनापि खण्डिताम् ।
दुःखं वो यदि मद्दुःखे भक्तिर्यदि परा मयि ॥ ७७२ ॥

तद्भवद्भिर्वचः कार्यं देयं प्रतिवचो न मे ।
ईप्सितं प्रतिषेधाय ब्रूयाद्योऽनुनयं मम ॥ ७७३ ॥
शापितः स मयैवाग्रे भुजाभ्यां जीवितेन च ।
सुमन्त्राधिष्ठितं प्रातः सौमित्रे यान्त्रिकं रथम् ॥ ७७४ ॥
सीतामारोप्य गङ्गायाः पारे पारे परित्यज ।
जानकीं विजनेऽरण्ये वाल्मीकेराश्रमे मुनेः ॥ ७७५ ॥
उत्सृज्य तूर्णमागच्छ यदलङ्घ्यं वचो मम ।
अभिप्रायश्च वैदेह्यास्तपोवनविलोकने ॥ ७७६ ॥
तस्मात्तवाप्रियाख्यानवैक्लव्यं न भविष्यति ।
इत्युक्त्वा राघवो रात्रिं निनायाब्दशतोपमाम् ॥ ७७७ ॥
न बाला न प्रकुपितः कुञ्जरेन्द्र इव श्वसन् ।
प्राप्तः सुमन्त्रसंयुक्तं रथमादाय लक्ष्मणः ॥ ७७८ ॥
उवाच सीतामभ्येत्य गूढशोकानलाकुलः ।
अनुजानाति देवस्त्वां तपोवनविलोकने ॥ ७७९ ॥
आदेश इव शीघ्रस्ते पत्युः सज्जीकृतो रथः ।
एतदाकर्ण्य वैदेही हर्षनिर्भरमानसा ॥ ७८० ॥
जग्राहाभरणं भूरि प्रदातुं मुनियोषिताम् ।
ततः समारुह्य रथं व्रजन्ती जनकात्मजा ॥ ७८१ ॥
अभ्यधादनिमित्तेन व्याप्ता शोकेन लक्ष्मणम् ।
अकस्माद्वेचते[1] चित्तं वामं स्फुरति लोचनम् ॥ ७८२ ॥
औत्सुक्यं चाधिकं जातं पतिसंदर्शने मम ।
शून्यां पश्यामि पृथिवीमरतिर्बाधते परम् ॥ ७८३ ॥
सानुजस्य क्षितिपतेः स्वयं शंसन्ति देवताः ।
इत्युक्त्वा लक्ष्मणं सीता रजनीं गोमतीतटे ॥ ७८४ ॥
अतिवाह्य पुनः प्रातः प्रतस्थे रथमाश्रितः (?) ।
ततो गङ्गां समुत्तीर्य नावा कल्लोलमालिनीम् ॥ ७८५ ॥

१. 'द्वेपते' स्यात्.

परं पारं जनकजामवाप्तां लक्ष्मणोऽब्रवीत् ।
अहो ममातिकठिनं जीवितं वज्रनिर्मितम् ॥ ७८६ ॥
धन्यास्ते निधनं येषां स्वाधीनं शोकविप्लवे ।
दृष्टनष्टाः प्रियजनाः सुखिनः स्वल्पजीवितैः ॥ ७८७ ॥
न पश्यन्ति वियोगोऽग्रे यो दुर्विलसितं विधेः (?) ।
अभ्युक्तमात्रं प्राणेषु निपतत्येव यद्विषम् ॥ ७८८ ॥
नृशंसक्रूरचरितं तदहं कर्तुमुद्यमः ।
इति ब्रुवाणं शोकाग्निसंतप्तं साश्रुलोचनम् ॥ ७८९ ॥
पप्रच्छ भ्रातृशापेन तं सीताशोककारणम् ।
अहो मुखपरिम्लानवदनो दैन्यधूसरः ॥ ७९० ॥
सोऽवदत्कृच्छ्रपतितः सीतामुत्कम्पिताशयाम् ।
धिग्मां वचोविषं यस्य सर्पस्येव मुखाच्च्युतम् ॥ ७९१ ॥
घोरां करोति ते मातर्दुःसहं हृदयव्यथाम् ।
मिथ्यापवादः संजातः पुरे जनपदे तव ॥ ७९२ ॥
मातश्छिन्दन्ति मर्माणि हृदये राघवस्य यः ।
गुणदोषविपर्याසविलासरसिकः सदा ॥ ७९३ ॥
स्वच्छन्दवादी लोकोऽयं केन प्रत्याय्यते गिरा ।
परापवादे सततं स्वव्यापारपराङ्मुखः ॥ ७९४ ॥
यथा जनोऽयं वदते न तथा गुणकीर्तने ।
तपोवनेऽस्मिन्वाल्मीकेर्मुनेर्मित्रस्य नः पितुः ॥ ७९५ ॥
जनापवादभीतेन त्यक्तासि जगतीभुजा ।
तदपूर्वतरं श्रुत्वाप्यप्रविष्टो वशानये (?) ॥ ७९६ ॥
किमेतदिति निस्पन्दा विचिन्त्योवाच जानकी ।
अहो नु मम रामेण किं कृतं दुष्कृतं पुरा ॥ ७९७ ॥
निर्दोषैर्यद्गुणोदारैर्धर्मदारैर्वियुज्यते ।
तदाज्ञां कुरु सौमित्रे त्यज मां दुःखभागिनीम् ॥ ७९८ ॥

१. 'पराध' क-ख. २. 'प्रविष्टपिवाशये (?) शा०.

जीवितत्यागशापेन कथं वा योजयामि तम् ।
आर्यपुत्र क्व नु स्मेरकान्तं कमललोचनम् ॥ ७९९ ॥
जनापवादभीरोस्ते द्रक्ष्यामि वदनं पुनः ।
हा नाथ त्वद्विहीनाहं कथं नु विजने वने ॥ ८०० ॥
करोमि करुणासिन्धो दारुणप्राणधारणम् ।
वपुर्मे भक्षतां सिंहयातुधानाविदं वने ।
जनापवादशोकाग्निभाजनं न जनेश्वरः ॥ ८०१ ॥
इति प्रलापिनीं सीतां बाष्पपूरप्लुतस्तनीम् ।
न शशाक परं वक्तुं सौमित्रिः शोकविक्लवः ॥ ८०२ ॥
स तां प्रणम्य प्रययौ दुःखभारस्खलद्गतिः ।
परित्यज्य वने शून्ये सीतां धृतिमिवात्मनः ॥ ८०३ ॥
शरीरशोषणं तीव्रं न कुर्युर्मुनयस्तपः ।
पर्यन्तविरसं सर्वं न स्यात्संसारिणां यदि ॥ ८०४ ॥
स मुहुर्वलितग्रीवः सीतामेकां विलोकयत् ।
निनिन्द[2] पातकस्पष्टमिवात्मानं विनिश्वसन् ॥ ८०५ ॥
[3]दृक्पथादपयातेऽथ लक्ष्मणे जनकात्मजा ।
हा राघवेति चुक्रोश मूर्छिता निपपात यत् ॥ ८०६ ॥
चिरेण संज्ञामासाद्य सा चकार प्रलापिनी ।
निष्पन्दमीनमकरां सचिन्तामिव जाह्नवीम् ॥ ८०७ ॥
शोचन्तीं भुवि विभ्रष्टविद्यां विद्याधरीमिव ।
तां दृष्ट्वा सास्रुनयनास्तापसा विस्मयं ययुः ॥ ८०८ ॥
तामभ्येत्य कृपासिन्धुर्मुनिशिष्यैर्निसेवितः ।
सुतामिव समाश्वास्य शनैर्वाल्मीकिरभ्यधात् ॥ ८०९ ॥
पुत्रि जानामि निर्दोषा त्यक्ता त्वं रघुभूभुजा ।
तापस्यः पालयन्ति त्वां स्वाधीनोऽयं तवाश्रमः ॥ ८१० ॥

१. 'यातुक्रव्याधाना' शा०. २. 'विरक्तपातवः' क-ख. ३. 'दिङ्मुखा' क-ख.

करुणार्द्रमनाः सीतामित्युक्त्वा भगवान्मुनिः।
न्यवेशयत्तापसीभिः सान्त्व्यमाना तपोवने॥ ८११॥

इति सीतापरित्यागः॥ ३०॥

व्रजन्रथेन सौमित्रिः शोकसंतप्तमानसः।
सुमन्तं नेत्रजं वारि वर्षन्मेघ इवाभ्यधात्॥ ८१२॥
दृष्ट्वा प्रवासदुःखस्य महतो धैर्यवारिधेः।
आर्यस्य शोकनैराश्यार्दजर्योऽयं भविष्यति॥ ८१३॥
धिङ्मां निष्करुणं पापमार्यदुःखैकसाक्षिणम्।
त्यक्ता सीता गिरा येन मया श्वभ्रादिवोज्झिता॥ ८१४॥
प्रियसंगमनैराश्यदुःसहव्यसनाकुलम्।
स्वहस्तेनैव हत्वा तां प्रविश्यामि (?) कथं पुरीम्॥ ८१५॥
अपुनःसंगमत्यागपरिभाषणनिष्ठुरः।
सीतां कापालिको द्रष्टुं लक्ष्मणो नापरः क्षमः॥ ८१६॥
नृशंसो मत्समः कोऽस्ति येन सीता विलोकिता।
सहसा निष्प्रतीकारत्यागसंभ्रमकातरा॥ ८१७॥
इति शोचन्तमसकृद्गाढानुशयमूर्छितम्।
उवाच लक्ष्मणं धीमान्सुमन्त्रो मन्त्रिणां वरः॥ ८१८॥
देवस्य गतयश्चित्राः कालः सर्वैकशस्तदा।
एवंविधैव भावानां पर्यन्ते विशरारुता॥ ८१९॥
भवितव्यमिदं सर्वं त्वत्पितुः पुरतो मया।
उक्तं दुर्वाससा साक्षाद्वसिष्ठस्याश्रमे श्रुतम्॥ ८२०॥
इति सौमित्रिमाश्वास्य सुमन्त्रः कौशिकीतटे।
निनाय नयतत्त्वज्ञस्तेनैव सहितः क्षपाम्॥ ८२१॥
अथान्यस्मिन्दिनस्यान्ते प्रविश्य विमनाः पुरीम्।
विपार्त इव सौमित्रिर्भ्रातुर्मन्दिरमाविशत्॥ ८२२॥

---

१. 'दघार्योऽयं' शा०.

स ददर्श प्रियाहीनं राघवं साश्रुलोचनम् ।
नीहारपटलस्पृष्टं भाविहीनमिवोडुपम् ॥ ८२३ ॥
मुहुर्निरीक्षमाणं क्ष्मां सीताचारित्रसाक्षिणीम् ।
मिथ्यापवादसंतप्तं तं प्रविश्यानुजोऽवदत् ॥ ८२४ ॥
देव सीता परित्यक्ता कानने तव शासनात् ।
मा शुचः सर्पकुटिलाः कालस्य गतयः किल ॥ ८२५ ॥
[भावाभवो(?)ऽस्मिन्भूतानामभावश्चश्रवर्तिनाम् ।
अन्तवन्तः स्वभावेन प्रभावविभवादयः ॥ ८२६ ॥
देहिनां सुखसंभोगैर्विभवं(?) वसु जीवितम् ।
कालः पिबति किंजल्कं पुष्पाणामिव षट्पदः ॥ ८२७ ॥
असारसारे संसारे वैरस्योपरता मतिः ।
सुखं दुःखे समुत्खातं विपरीताश्च संपदः ॥ ८२८ ॥
कालपाकपरिज्ञानं सुखं शुष्यति देहिनाम् ।
जराघ्रातं हि पुष्पस्य न पुनर्जायते मधु ॥ ८२९ ॥
भोगा वियोगरोगेण जरया चारु यौवनम् ।
आक्रान्तमन्ते सर्वस्य निधनेन च जीवितम् ॥ ८३० ॥
परावरज्ञो भावानामार्य संसारतत्त्ववित् ।
विवेकालोकविकलं न शोकं कर्तुमर्हसि ॥ ८३१ ॥
मोहः करोति न पदं हृदये विजितात्मनाम् ।
नहि रत्नप्रदीपानां प्रविशत्यन्तरं तमः ॥ ८३२ ॥
एतदेव परं लक्ष्म निधानानां महात्मनाम् ।
यत्कृच्छ्रेषु न सीदन्ति न नृत्यन्ति सुखेषु च ॥ ८३३ ॥
विद्यानां दर्पणं चेतः सत्यस्य वसतिर्मतिः ।
धृतेर्वेश्म विवेकश्च येषां मुह्यन्ति ते कथम् ॥ ८३४ ॥
लक्ष्मणेनेत्यभिहिते निशम्य रघुनन्दनः ।
तमुवाच शुचं त्यक्त्वा सदाचारविचारधीः ॥ ८३५ ॥

---

१. कोष्टकान्तर्गतश्लोकानां स्थानं रिक्तमेव दृश्यते कन्ख-पुस्तकयोः

एवमेतत्समुचितं यथा वदसि लक्ष्मण ।
कालप्रवाहो बलवान्मार्गनाशाय गच्छति ॥ ८३६ ॥
इदं दहति मे चेतः स्थितित्वात्तन्नृपस्य यत् ।
चत्वारो वासरा याताः प्रजाकार्याण्यशृण्वतः ॥ ८३७ ॥
अयमेव नरेन्द्राणां हेतुर्नरकसंचये ।
लम्बन्ते दुष्प्रवेशे यद्द्वारे कार्यार्थिनो जनाः ॥ ८३८ ॥
श्रूयते किल विप्रेभ्यो नृगो नामा महीपतिः ।
गवां कोटीः सहस्राणि पुष्करेषु ददौ पुरा ॥ ८३९ ॥
ब्राह्मणस्याग्निवेशस्य होमधेनुः पयस्विनी ।
सङ्घमध्यगता तेन विप्राय प्रतिपादिता ॥ ८४० ॥
तामन्वेष्टुं स सुचिरं वनेषु नगरेषु च ।
द्विजश्चचार न च तां प्रियां विद्यामिवाप्तवान् ॥ ८४१ ॥
ततः काले कनखले विवत्सां जीर्णविग्रहाम् ।
स तां ददर्श दयितां धेनुं ब्राह्मणवेश्मनि ॥ ८४२ ॥
एह्येहि बहले दूरादित्याहूता द्विजेन सा ।
प्रीत्या हुंकारिणी सास्रा तमेवानुययौ जवात् ॥ ८४३ ॥
प्रतिग्रहाप्तां तां दृष्ट्वा ह्रियमाणां द्विजेन गाम् ।
ब्राह्मणेभ्यः··········द्विवादोऽभूत्तयोस्ततः ॥ ८४४ ॥
नृगेण मह्यं दत्तेयं जातेयं स्वगृहे मम ।
इति प्रवादमुखरौ जग्मतुस्तौ नृगालयम् ॥ ८४५ ॥
सुचिरं स्थितयोस्तत्र विवादे निर्णयार्थिनोः ।
गम्भीरे राजसदने प्रवेशो नाभवत्तयोः ॥ ८४६ ॥
बहुभिर्दिवसैः कृच्छ्रात्क्षुत्क्षामौ प्रापितं नृपम् ।
ऊचतुर्मन्युसंताप]मुद्गिरन्ताविवाक्षरैः ॥ ८४७ ॥

१. 'विवदन्तौ ततोऽन्योन्यं दातारमभिजग्मतुः । तौ राजभवनद्वारि न प्राप्तौ नृगशासनम् । अहोरात्राण्यनेकानि वसन्तौ क्रोधमीयतुः ॥' इति रामायणानुसारेण 'नापतां' इति पाठः स्यात्.

कार्यार्थिनां प्रजानाशे राजन्यसान्न दृश्यसे।
तस्मादहश्यः श्वभ्रेऽस्मिन्कृकलासो भविष्यसि ॥ ८४८ ॥
अष्टादश युगे काले प्रयाते यदुनन्दनः।
वसुदेवात्मजो विष्णुः शापात्त्वां मोक्षयिष्यति ॥ ८४९ ॥
वसिष्ठवंशे भगवान्कुरुवंशप्रवर्तकः।
व्यासः कलियुगे धर्म्यं तदा काव्यं करिष्यति ॥ ८५० ॥
इत्युक्त्वा तौ द्विजौ धेनुं दत्त्वान्यस्मै द्विजाय ताम्।
जग्मतुः शापदष्टश्च पश्चात्तापं ययौ नृगः ॥ ८५१ ॥
सोऽभिषिच्य वसुं पुत्रं श्वभ्रदेशं सुखोचितम्।
जालवल्लीद्रुमैः कृत्वा जगाम कृकलासताम् ॥ ८५२ ॥

इति नृगशापः ॥ ३१ ॥

तस्मात्तूर्णं नृपैः कार्यं कार्यार्थिजनदर्शनम्।
महाजनो दहत्येव यदि द्वारि विलम्बते ॥ ८५३ ॥
इक्ष्वाकूणामभूद्वीरो निमिर्नाम महीपतिः।
यः स्वयं स्वर्गसदृशं वैजयन्तं व्यधात्पुरम् ॥ ८५४ ॥
वसिष्ठस्तेन यज्ञार्थं कृतः कुलगुरुर्मुनिः।
तमुवाचास्मि शक्रेण क्रतौ पूर्वतरं वृतः ॥ ८५५ ॥
मुनिं गौतममभ्यर्च्य स राजा याजकं ततः।
चकार हिमवत्पार्श्वे यज्ञं तीरे महोदधेः ॥ ८५६ ॥
पञ्च वर्षसहस्राणि दीक्षितस्याभवन्मखे।
त्रिदशेन्द्रस्य दीक्षा तु पञ्चवर्षशतान्यभूत् ॥ ८५७ ॥
ततः समाप्ते विधिवत्पूर्वं यज्ञे शतक्रतोः।
यज्ञभूमिं निमेः प्रायाद्वसिष्ठो होत्रकर्मणि ॥ ८५८ ॥
स राजा दर्शनाकाङ्क्षी तत्र यावत्प्रतीक्षते।
प्रौढनिद्रान्वितस्तावद्भूपतिर्न व्यबुद्ध्यत ॥ ८५९ ॥

१. 'राजदर्शना' स्यात्.

तं वसिष्ठः शशापाथ चिरं यस्मान्न दृश्यसे ।
तस्माददृश्यो नृपते देहहीनो भविष्यसि ॥ ८६० ॥
ततः प्रबुद्धस्तच्छापं श्रुत्वोवाच महीपतिः ।
सुप्तः शप्तोऽसि भवता त्वमप्येवं भविष्यसि ॥ ८६१ ॥
शापाद्वसिष्ठभूपालौ मिथः प्राप्तौ विदेहताम् ।
अदृश्यौ वासनात्मानौ वायुभूतौ विचेरतुः ॥ ८६२ ॥

इति वसिष्ठनिमिशापः ॥ ३२ ॥

याचितोऽथ वसिष्ठेन देहार्थं कमलोद्भवः ।
तमूचे गच्छ तेजस्त्वं मैत्रावरुणमाविश ॥ ८६३ ॥
अत्रान्तरे सुधासिन्धुर्मित्रो वरुणसंगतः ।
पुरो ददृशतुः कान्तामुर्वशीं स्वेच्छयागताम् ॥ ८६४ ॥
प्रीता तुल्यं वृता ताभ्यां सा बभाषे सुमध्यमा ।
मित्रेण पूर्वमेवाहं वृता नान्यं भजे प्रियम् ॥ ८६५ ॥
इति ब्रुवाणां वरुणस्तामुवाच सुलोचनाम् ।
तेजःकुम्भे क्षिपाम्यद्य[1] मयि त्वं भावमुत्सृज ॥ ८६६ ॥
अस्तु ते सह मित्रेण प्रीतये रतिसंगमः ।
इत्युक्त्वा स निजं तेजः प्रज्वलज्ज्वलनोपमम् ॥ ८६७ ॥
कुम्भे निक्षिप्य भावं च तस्मिन्व्यसृजदुर्वशी ।
ततस्तमागतं मित्रः प्रकोपाकुलितोऽभ्यधात् ॥ ८६८ ॥
भावमन्यत्र निक्षिप्य किं मां प्राप्तासि पुंश्चलि ।
मनुष्यलोकं चपले किंचित्कालमुपागता ।
त्वं पुरूरवसो राज्ञः कामं भोग्या भविष्यसि ॥ ८६९ ॥

इत्युर्वशीशापः ॥ ३३ ॥

ततः कुम्भवृतात्तस्मात्तेजस्वी तेजसो मुनिः ।
त्रैलोक्यपूज्यो भगवानगस्त्यः प्रागजायत ॥ ८७० ॥

---

१. 'म्येष' शा०.

उर्वशीशापसंक्रान्तमैत्रधाम्ना तु तेजसः ।
वारुणादथ संस्पृष्टोऽप्यपरो मुनिरुद्गतः ॥ ८७१ ॥
वसिष्ठस्तेजसां राशिः स मैत्रावरुणो मुनिः ।
गुरुर्बभूव भगवानिक्ष्वाकूणां परायणम् ॥ ८७२ ॥
मुनयोऽपि निमेर्यज्ञे शरीरं मन्त्रसंस्कृतम् ।
रक्षन्तः कर्मणः पारं प्रययुर्दैवतैः सह ॥ ८७३ ॥
ततः सुराणां वचसा लोचनेषु शरीरिणाम् ।
निमेषवासी सततं बभूव नृपतिर्निमिः ॥ ८७४ ॥
मुनिभिस्तस्य पुत्रार्थं यज्ञान्ते मथितारणिः ।
अजीजनन्मिथिं नाम [[1]जननाज्जननी[2] नृपम् ॥ ८७५ ॥
मिथिना मिथिला नाम] विदेहेषु कृता पुरी ।
निमिर्यत्र विदेहोऽभूद्विदेहास्ते जनाः स्मृताः ॥ ८७६ ॥

इति मैथिलसंभवः ॥ ३४ ॥

एतदाकर्ण्य रामेण कथितो राघवानुजः ।
निर्निद्रामखिलां रात्रिं तमपृच्छत्पुनः पुनः ॥ ८७७ ॥
दीक्षितो गुणवान्वीरो राजा शक्राधिकोऽपि सः ।
क्षमां निमिर्वसिष्ठस्य तस्मान्न कृतवान्वशी ॥ ८७८ ॥
कोपना कातराः क्षुद्रा भवन्ति विभवे खलाः ।
क्षमयैव वि[3]भाव्यन्ते कुलीनाः प्रभविष्णवः ॥ ८७९ ॥
इति सौमित्रिणा पृष्टः काकुत्स्थः पुनरब्रवीत् ।
कोपः समुद्गतो घोरः कस्या[4]चारमपेक्षते ॥ ८८० ॥
न क्षमां क्षमते कोपः साधुतामिव दुर्जनः ।
चण्डालेनेव येनात्मा स्पृष्टो यात्यपवित्रताम् ॥ ८८१ ॥

---

१. कोष्टकान्तर्गतपाठः शारदालिपिपुस्तके नोपलभ्यते. २. 'जननाज्जनकोऽभवत्-' इति रामायणानुसारेण 'जननाज्जनकं' इति पाठो भवेत्. ३. 'व्यभाव्येत' क-ख. ४. 'चारं प्रतीक्षते' शा०.

पुरा ययातिना राज्ञा शप्तेनोशनसा रुषा ।
शक्तेनापि प्रतीकारे शान्तमेव जितात्मना ॥ ८८२ ॥
नहुषस्याभवत्पुत्रो ययातिः पृथिवीपतिः ।
शुक्रात्मजा देवयानी तस्याभूत्प्रथमा वधूः ॥ ८८३ ॥
सुता च दानवेन्द्रस्य शर्मिष्ठा वृषपर्वणः ।
देवयानी यदुं पुत्रं शर्मिष्ठा पूर्वमात्मजम् ॥ ८८४ ॥
सुषुवाते नरपतेस्तयोः पूरुरभूत्प्रियः ।
ततो यदुर्देवयानीं जननीं शिशुरब्रवीत् ॥ ८८५ ॥
द्वेष्यां त्वं भूपते मातरहं च त्वदगौरवात् ।
धन्योऽयं मातृसौभाग्यात्पूरुर्भूपतिवल्लभः ॥ ८८६ ॥
इति पुत्रवचः श्रुत्वा देवयानी भृशं शुचा ।
किरन्ती बाष्पसलिलं सस्मार पितरं सती ॥ ८८७ ॥
स्मृतमात्रस्तया शुक्रः संप्राप्तो ज्ञानलोचनः ।
शुश्राव पुत्र्या कथितं भर्तृद्वेषोद्भवं शुचम् ॥ ८८८ ॥
स सुतावत्सलस्तत्र शशाप नृपतिं रुषा ।
येनासौ यौवनं त्यक्त्वा जराजीर्णोऽभवत्क्षणात् ॥ ८८९ ॥
अतृप्तः कामिनीभोगे दुःखितोऽथ महीपतिः ।
अयाचत यदुं पुत्रं तारुण्यं जरयार्दितः ॥ ८९० ॥
तमब्रवीद्यदुः पूरुं याचस्व दयितं सुतम् ।
भोगभागी हि सहते स्नेहेन क्लेशयातनाम् ॥ ८९१ ॥
इत्युक्ते यदुना राजा तं शशाप रुषा ज्वलन् ।
अराज्यभागिनो जाता वंशे येनास्य यादवाः ॥ ८९२ ॥
ततः पूरुर्ददौ पित्रे जरामादाय यौवनम् ।
विजहार नृपो येन कंचित्कालं प्रियासखः ॥ ८९३ ॥
कालेन तस्मै नृपतिर्निजपुत्राय यौवनम् ।
राज्यं च दत्त्वा सुकृती तपसा प्रययौ दिवम् ॥ ८९४ ॥

एवं शुक्रेण शप्तेऽसौ प्रतिशापं महीपतिः ।
शक्तोऽपि न ददौ तस्मै प्रादात्क्रुद्धो यथा निमिः ॥ ८९५ ॥

इति ययातिशापः ॥ ३५ ॥

रामस्यैवं कथयतस्तारकास्रुकणाकुला ।
सा चैत्ररात्रिरमला सतीवेन्दुमुखी ययौ ॥ ८९६ ॥
ततो रघुपतिः प्रातः कृतकृत्यः सहानुजैः ।
मुनिर्मन्त्रिनृपाकीर्णां प्रविवेश विभुः सभाम् ॥ ८९७ ॥
तं राजभास्करं सर्वे सभासीनं ववन्दिरे ।
यस्योदयेषु निर्दोषा भवन्ति सकला दिशः ॥ ८९८ ॥
ततो नृपाज्ञया तत्र द्वारि कार्यार्थिनं जनम् ।
विचिन्त्य[1] लक्ष्मणः क्षिप्रं प्रविश्योवाच राघवम् ॥ ८९९ ॥
न कश्चिद्दृश्यते देव कार्यार्थी याचकोऽपि वा ।
त्वयि राजनि नास्त्येव विप्लवो दैवमानुषः ॥ ९०० ॥
स राजा राजते राज्ये प्रजानां धर्मपालनात् ।
नो चरन्ति पुरे यस्य दीनाः कार्यार्थिनश्चिरम्[2] ॥ ९०१ ॥
त्वयि शासति निःशेषां पृथिवीं पृथिवीपतौ ।
उपतापोऽस्ति लोकस्य न शारीरो न मानुषः ॥ ९०२ ॥
इति ब्रुवाणः सौमित्रिः पुनः कार्यार्थदर्शने ।
नियुक्तः सादरं राज्ञा दृष्ट्वाभ्येत्यावदत्पुनः[3] ॥ ९०३ ॥
द्वारि देवः स्थितो दीनः प्रहाराभिन्नमस्तकः ।
एकः श्वा वक्तुकामश्च सभादर्शनमिच्छति ॥ ९०४ ॥
इत्युक्ते शासनात्तूर्णं भूपतिः श्वा प्रविश्य सः ।
उवाच कौतुकालोललोके सदसि निर्भयः ॥ ९०५ ॥
भूतानां भूपतेरन्यत्परित्राणं न विद्यते ।
भुजेन धर्मस्तम्भेन भूतधात्रीं बिभर्ति यः ॥ ९०६ ॥

---

१. 'विचित्य' स्यात्. २. 'र्थिनां गिरः' शा०. ३. 'न्मुहुः' शा०.

यशःशशाङ्कशुभ्रस्य प्रतापानलतेजसः ।
धर्मोऽस्मिन्दृश्यते लोके प्रभावाद्भूतभासुरः ॥ ९०७ ॥
इयं ते सर्वसामान्या भूतेष्वभयदा स्थितिः ।
सभायामुत्सहे वक्तुं प्रगल्भः श्वापि नाम यत् ॥ ९०८ ॥
भिक्षुः सर्वार्थसिद्धाख्यो ब्राह्मणावसथे स्थितः ।
तेन दण्डप्रहारेण कृतोऽहं भिन्नमस्तकः ॥ ९०९ ॥
इत्युक्ते सारमेयेन द्वाःस्थेनाहूय तं द्विजम् ।
अनागसि प्रहारस्य हेतुं पप्रच्छ राघवः ॥ ९१० ॥
अदोषः किमयं ब्रह्मन्दण्डेन श्वा हतस्त्वया ।
दयावान्सर्वभूतेषु ब्राह्मणो मैत्र उच्यते ॥ ९११ ॥
वाग्विषो भुजगोत्तीर्णः सर्वच्छेदी परश्वधः ।
भ्रूभङ्गभीमो दहनः क्रोधो मृत्युः शरीरिणः ॥ ९१२ ॥
यज्ञो जपस्तपो दानं सत्यं च सुकृतं कृतम् ।
क्रोधेनाशुचिना स्पृष्टं सर्वं यात्यपवित्रताम् ॥ ९१३ ॥
यस्यात्मा संनिकर्षस्थः क्रोधावेगेन[1] विस्मृतः ।
स कथं परलोकस्थं धर्मं स्मरति दुर्मतिः ॥ ९१४ ॥
स श्वा सदन्तनिष्पेषभीषणः सह्यते न कैः ।
यस्य क्रोधपिशाचेन घोरेणाधिष्ठितं मनः ॥ ९१५ ॥
कालस्यान्यः प्रकारोऽयं क्रुद्धो यस्मिन्प्रयात्यलम् ।
सुहृद्बन्धुः पिता पुत्रः शरीरं चोपहारताम् ॥ ९१६ ॥
पश्यति द्रविणं लुब्धः कामी पश्यति कामिनीम् ।
पश्यति भ्रममुन्मत्तः क्रुद्धः किंचिन्न पश्यति ॥ ९१७ ॥
क्रोधे संनिहितो वह्निः क्रोधे संनिहितं विषम् ।
क्रोधे संनिहितो मृत्युः क्रोधो नरकदैशिकः ॥ ९१८ ॥
इत्युक्ते भूभुजा विप्रः प्रोवाच रचिताञ्जलिः ।
मया क्रोधाभिभूतेन कृतं किंचिदसांप्रतम् ॥ ९१९ ॥

---

१. 'वेशेन' शा०.

भिक्षाकाले व्यतिक्रान्ते क्षुत्क्षामेन क्षुधा मया ।
अयं श्वा मार्गमावृत्य स्थितो दण्डेन ताडितः ॥ ९२० ॥
कृतमेतन्मया पापं शासनीयोऽसि ते नृप ।
भवता कृतदण्डस्य नास्ति मे नरकाद्भयम् ॥ ९२१ ॥
ब्राह्मणेनेत्यभिहिते सामात्या दण्डसंशये ।
ऊचुः कौत्सवसिष्ठात्रिभृग्वाङ्गिरसगौतमाः ॥ ९२२ ॥
विप्रः सूक्ष्मापराधेषु न दण्ड्यो भूभुजा क्वचित् ।
धर्मस्थैरित्यभिहिते सारमेयोऽवदन्नृपम् ॥ ९२३ ॥
प्रतिश्रुतं मे भवता किं कार्यमिति भूपते ।
अनुग्राह्यो विशेषेण दृष्टिपातादहं तव ॥ ९२४ ॥
क्रियतां मद्वचस्तस्माद्द्विजोऽयमभिषिच्यताम् ।
कौलाञ्जरे[1] कौलपत्ये गोब्राह्मणसुरान्प्रति ॥ ९२५ ॥
इत्युक्ते सारमेयेन सोऽभिषिक्तो महीभुजा ।
मातङ्गवरमारुह्य ययौ देवद्विजाधिपः ॥ ९२६ ॥
तस्मिन्प्रमुदिते याते मन्त्रिणः पृथुविस्मयाः ।
वरोपमोऽयं शापोऽस्य दत्त इत्यूचिरे पृथक् ॥ ९२७ ॥
ततः स्मितप्रभापुञ्जशबलाधरपल्लवः ।
उवाच राघवः सर्वं श्वा जानात्येव कारणम् ॥ ९२८ ॥
उक्त्वेति राज्ञा स्पृष्टोऽथ स श्वा जन्मान्तरस्मृतिम् ।
अवदद्विदितानेकसूक्ष्मधर्मार्थसंचयः ॥ ९२९ ॥
अहं कुलपतिः सत्रे धर्मनित्योऽभवं पुरा ।
शुचिर्देवद्विजार्थेषु संविभागी जितेन्द्रियः ॥ ९३० ॥
तथापि तापसीं योनिमापन्नोऽस्म्यधमामिमाम् ।
को जानाति कदा किं मे मतिमोहेन विस्मृतम् ॥ ९३१ ॥
अयं तु पुरुषः क्रूरो ब्रह्मबन्धुः क्रुधा ज्वलन् ।
सस्पृहः कौलपत्येन न जाने किं भविष्यति ॥ ९३२ ॥

---

१. 'कालाञ्जने' क.

गोब्राह्मणसुरार्थेषु स गच्छेदधिकारताम् ।
पापशापसखी यस्य नरकाभिमुखी मतिः ॥ ९३३ ॥
स्पृहां कुर्यादमर्यादः स ब्राह्मणजने घने ।
यस्यावीचौ परिचये सुचिरोपचिता मतिः ॥ ९३४ ॥
जातोत्कण्ठाः प्रतीक्षन्ते यस्योग्रनरकाश्रयः ।
कुर्यात्सुरालये स्वाम्यं स ब्राह्मणधनाधिपः ॥ ९३५ ॥
इत्युक्तस्तेन रामोऽभूद्विस्मयस्मेरलोचनः ।
गत्वाप्यनशनेन श्वा वाराणस्यां व्यपद्यत ॥ ९३६ ॥

इति कौलपतिकम् ॥ ३६ ॥

ततः कदाचिदभ्येत्य मुनयश्च्यवनादयः ।
पाद्यासनादिसत्कारैः पूजिता राममूचिरे ॥ ९३७ ॥
निघ्नता मलिनाचारानसकृत्क्षणदाचरान् ।
त्वया प्रतापनिधिना जगद्वितिमिरं कृतम् ॥ ९३८ ॥
पुत्रो मधोर्दैत्यपतेर्लवणो नाम दुःसहः ।
अधुना बाधते लोकान्रावणस्य स्वसुः सुतः ॥ ९३९ ॥
एकपुत्रावधि प्राप्तं तत्पित्रा त्रिपुरान्तकात् ।
शूलं शूलमिवासह्यं स बिभर्ति दिवौकसाम् ॥ ९४० ॥
शासनादेव रुद्रस्य रौद्रकर्मा जगज्जयी ।
स शूलरहितो वध्यः सशूलः क्षयकृद्विषाम् ॥ ९४१ ॥
दिक्प्रतीची कृता तेन मुनिशून्यतपोवना ।
स कालः सर्वभूतानां प्रमाणमधुना भवान् ॥ ९४२ ॥
एतन्मुनिवचः श्रुत्वा रामो विरचिताञ्जलिः ।
करोमि भवतामिष्टमित्युक्त्वा विससर्ज तान् ॥ ९४३ ॥
ततो ययाचे शत्रुघ्नः काकुत्स्थं पृथुविक्रमः ।
लवणस्य वधारम्भे शासनं शत्रुशासनः ॥ ९४४ ॥

---

१. 'धनापहृत्' शा०.

स रामेणाभ्यनुज्ञातो लवणाधिष्ठिते पुरे ।
अभिषिक्तश्च विधिवत्प्रतस्थे रथिनां वरः ॥ ९४५ ॥
दीप्तं तस्मै ददौ रामः सायकं ब्रह्मनिर्मितम् ।
बभूवुस्तत्प्रभापुञ्जैः कृशानुकपिशा दिशः ॥ ९४६ ॥
शूलेन रहितो वध्यः स दैत्य इति संविदा ।
सैन्यस्याग्रे जगामैकः शत्रुघ्नः शक्रविक्रमः ॥ ९४७ ॥
स व्रजन्रजनीमेकां वाल्मीकेराश्रमे मुनेः ।
उवाच विहितातिथ्यस्तेन वन्यफलाम्बुभिः ॥ ९४८ ॥
तत्र यूपाङ्कितां भूमिं विलोक्य भरतानुजः ।
मुनिं पप्रच्छ कस्यैषा यज्ञभूर्भगवन्निति ॥ ९४९ ॥
सोऽब्रवीत्पूर्वपुरुषो बभूवेक्ष्वाकुभूभुजाम् ।
सुदासो यस्य सौदासः पुत्रोऽमित्रमहाशनिः ॥ ९५० ॥
स बालो मृगयाशीलः कानने सिंहरूपिणौ ।
ददर्श राक्षसौ याभ्यां गहनं निर्मृगं कृतम् ॥ ९५१ ॥
एकस्ततो हतस्तेन सायकेनाभवद्व्यसुः ।
तत्कोपादपरं रक्षः प्रदध्यौ तत्प्रतिक्रियाम् ॥ ९५२ ॥
अथ कालेन सौदासोऽप्यश्वमेधं महाक्रतुम् ।
आजहार वसिष्ठेन कृतकृत्यः पुरोधसा ॥ ९५३ ॥
ततः स राक्षसोऽभ्येत्य यज्ञस्यान्ते नरेश्वरम् ।
वसिष्ठरूपी मायावी ययाचे मांसभोजनम् ॥ ९५४ ॥
तथेत्युक्ते नरेन्द्रेण सूदरूपोऽपि राक्षसः ।
मानुष्यमांसं संस्कृत्य तस्थौ भोज्यगृहे पुरः ॥ ९५५ ॥
उपनीतं तदशनं राज्ञा राक्षससंस्कृतम् ।
दृष्ट्वा वसिष्ठः कुपितस्तस्मै शापमवासृजत् ॥ ९५६ ॥
राजन्द्वादशवर्षाणि पुरुषादो भविष्यसि ।
तच्छ्रुत्वा सोऽपि शापाम्बु कोपाज्जग्राह पाणिना ॥ ९५७ ॥

मदयन्ती तमवदद्भार्या क्रुद्धं महीपतिम् ।
मुनिर्वसिष्ठः पूज्योऽयमस्माकं कुलदैवतः ॥ ९५८ ॥
ततः पत्नीगिरा राजा तोयं जग्राह पादयोः ।
निर्धौतपादो येनासौ ययौ कल्माषपादताम् ॥ ९५९ ॥
तस्येयं यज्ञवसुधा सौदासस्य महीपतेः ।
कथयित्वैव वाल्मीकिर्विरराम मुनीश्वरः ॥ ९६० ॥

इति सौदासस्योपाख्यानम् ॥ ३७ ॥

तस्मिन्नवसरे तत्र पुण्ये मुनितपोवने ।
असूत सीता यमजौ कुमारावश्विनाविव ॥ ९६१ ॥
ततः शिष्यैः प्रियाख्यानादाहूतः करुणानिधिः ।
वाल्मीकिर्विदधे रक्षां कुशैर्बालकयोस्तयोः ॥ ९६२ ॥
तौ रक्षता कुशलवैस्तेन तेजस्विना वने ।
शिशू कुशलवावेव दिव्यरूपौ बभूवतुः ॥ ९६३ ॥
रामस्य तनयौ जातौ श्रुत्वा प्रमदनिर्भरः ।
निशां निनाय शत्रुघ्नः श्यामां प्रावृट्पयोधरैः ॥ ९६४ ॥
प्रभाते मुनिमामन्त्र्य स गत्वा सप्तभिर्दिनैः ।
अनयद्यमुनातीरे च्यवनस्याश्रमे निशाम् ॥ ९६५ ॥
कथान्ते च्यवनं तत्र स पप्रच्छ कुतूहलात् ।
दैत्यः स भूतभयकृल्लवणः किंपराक्रमः ॥ ९६६ ॥
इति पृष्टो मुनिस्तेन बभाषे भृगुनन्दनः ।
लवणस्याद्भुतं कर्म घोरं वक्तुं न पार्यते ॥ ९६७ ॥
यौवनाश्वः पुरा राजा मान्धाता पृथिवीं वशे ।
कृत्वा पराक्रमोदारश्चक्रे शक्रासने स्पृहाम् ॥ ९६८ ॥
तं जेतुमुद्यतं वीरं सुरलोकं सुरेश्वरः ।
उवाच पृथिवी पूर्णा न जिता भूपते त्वया ॥ ९६९ ॥

---

१. 'मुद्यतो' शा०.

अजित्वैव महीं जाता किं ते स्वर्गजये मतिः ।
अभग्नशासनस्याज्ञां लवणः कुरुते न ते ॥ ९७० ॥
एतदाकर्ण्य मान्धाता ह्रिया क्षिप्रमधोमुखः ।
निरुत्तरो ययौ जेतुं लवणं दानवं भुवि ॥ ९७१ ॥
ततो युद्धमभूद्घोरं चिरं दैत्यनरेन्द्रयोः ।
अभूतां सर्वभूतानां येन संत्रासविस्मयौ ॥ ९७२ ॥
प्रहस्य लवणेनाथ प्रदीप्तं शूलमोजसा ।
क्षिप्तं क्षितिपतिं चक्रे क्षणेन युधि भस्मसात् ॥ ९७३ ॥
निर्दग्धे भूपतौ तस्मिन्सभृत्यबलवाहने ।
शूलं तत्कृतकृत्यस्य ययौ दैत्यपतेः करम् ॥ ९७४ ॥
तस्मात्स शूलरहितो वध्यो युद्धेषु नान्यथा ।
श्वो हन्तासि तमित्युक्त्वा संजहार गिरं मुनिः ॥ ९७५ ॥
ततः प्रभाते शत्रुघ्नो गत्वा लवणकाननम् ।
वहन्तं प्राणिनां भारं तं ददर्शागतं चिरात् ॥ ९७६ ॥
आहूतस्तेन लवणः कोपादुत्पाट्य पादपम् ।
गर्जत्पर्जन्यनिर्घोषमभ्यधावद्भुजोर्जितम् ॥ ९७७ ॥
क्षिप्तं तेन जवाद्वृक्षं शत्रुघ्नः पत्रिभिर्दृढैः ।
चकार पञ्चतां घोरैर्देहिदेहमिवान्तकः ॥ ९७८ ॥
वृक्षेषु क्षीयमाणेषु क्षिप्तेषु बहुशः शनैः ।
शत्रुघ्नं मूर्ध्नि चिक्षेप लवणस्तरुमाततम् ॥ ९७९ ॥
वेगादभिहतस्तेन वज्रेणेव सुराचलः ।
विकीर्णहेमकवचः पपात भरतानुजः ॥ ९८० ॥
तदभून्मूर्छिते तस्मिन्हाहाकारो दिवौकसाम् ।
संदेहदोलाकुलितं मुनीनां चाभवन्मनः ॥ ९८१ ॥
हतं विज्ञाय शत्रुघ्नं न दैत्यः शूलमग्रहीत् ।
नश्यतामवलेपो हि मणिमन्त्रौषधादिषु ॥ ९८२ ॥

लब्धसंज्ञोऽथ शत्रुघ्नः क्रूरमाकृष्य कार्मुकम् ।
वितीर्णं रघुनाथेन तं दीप्तं संदधे शरम् ॥ ९८३ ॥
प्रादुर्भूते शरे तस्मिञ्ज्वालालीढनभस्तले ।
बभूव सर्वभूतानां मोहः प्रलयसूचकः ॥ ९८४ ॥
ततः पितामहं सिद्धसुरगन्धर्वकिंनराः ।
ऊचुर्लोकक्षये सृष्टः शरो न लवणक्षये ॥ ९८५ ॥
प्रजापतिस्तानवदन्मधुकैटभयोर्वधे ।
मुरारिणा निर्मितोऽयं दुरितापहरः शरः ॥ ९८६ ॥
पश्यन्तु दारिततनुं शरेणानेन दानवम् ।
भवन्तो विगतायासा नास्ति वः सायकाद्भयम् ॥ ९८७ ॥
इत्युक्ते पद्मगर्भेण स्वस्थे त्रिदशमण्डले ।
शत्रुघ्नेनावृतो द्वारि शूलं न प्राप दानवः ॥ ९८८ ॥
ततः स सायकः स्फारं निर्भिद्योरःस्थलं जवात् ।
लवणस्य प्रविश्य क्ष्मां पुनः शत्रुघ्नमाययौ ॥ ९८९ ॥

इति लवणवधः ॥ ३८ ॥

लवणे निहिते शूलं रुद्रस्यैव करं ययौ ।
सुरसिद्धर्षिगन्धर्वाः शत्रुघ्नश्चाभ्यपूजयन् ॥ ९९० ॥
स तद्वरात्पुरीं तत्र मथुरां नाम निर्ममे ।
यमुनावेणिकां कान्तां हेमजालनितम्बिनीम् ॥ ९९१ ॥
शूरसेने जनपदे निर्दिष्टा रुचिरा पुरी ।
अर्धचन्द्रायुताकारा सा तोरणवती बभौ ॥ ९९२ ॥
ततो द्वादशभिर्वर्षैः काकुत्स्थालोकनोत्सुकः ।
शत्रुघ्नः प्रययौ सैन्यैरयोध्यां विपुलैर्वृतः ॥ ९९३ ॥
स व्रजन्रजनीमेकां वाल्मीकेराश्रमे वसन् ।
शुश्राव रामचरितं गीयमानपदं सुरैः ॥ ९९४ ॥
निशि तेनामृतेनेव पूरिताश्रवणं चिरम् ।

त्रिदिवस्थमिवात्मानं स मेने हर्षनिर्भरः ॥ ९९५ ॥

इति मथुराप्रवेशः ॥ ३९ ॥

गत्वा ततः कतिपयैर्वासरैर्भरतानुजः ।
अयोध्यां राघवं द्रष्टुं प्रविवेश नृपालयम् ॥ ९९६ ॥
प्रणम्य राघवं तत्र चरणालीनशेखरः ।
प्रीत्या तेन परिष्वक्तो यथावृत्तं जगाद सः ॥ ९९७ ॥
स्थित्वा तत्र प्रियतरैः पूज्यमानो महीभुजा ।
कालेन मथुरामेव जगाम भ्रातुराज्ञया ॥ ९९८ ॥
ततः कदाचिदत्यन्तापूर्वदुःखार्दितो द्विजः ।
स्कन्धे गृहीत्वा पृथुकं राजद्वारमुपाययौ ॥ ९९९ ॥
सोऽवदत्पुत्रशोकेन महता पीडिताशयः ।
अहो बतायं वृद्धस्य जीवितं क्व गतः सुतः ॥ १००० ॥
न मया दुष्कृतं किंचित्कृतं धर्मानुवर्तिना ।
व्यसुं पश्यामि च शिशुं कस्येदं कर्मणः फलम् ॥ १००१ ॥
नाकालमृत्युर्न व्याधिर्न दुर्भिक्षं न तस्कराः ।
भवन्ति सत्त्वसंपन्ने धर्मनित्ये महीपतौ ॥ १००२ ॥
अकालमृत्युर्दुर्भिक्षः प्रभवः करुणध्वनिः ।
न श्रूयते जनपदे नृपाणां पुण्यकर्मणाम् ॥ १००३ ॥
क्रियाहीना द्विजन्मानः स्वैरिण्यः कुलयोषितः ।
भवन्ति राज्ञि दुर्वृत्ते जनाश्चाकालमृत्यवः ॥ १००४ ॥
असम्यक्पालिता राज्ञा दुःसहक्लेशभागिनी ।
अकालनिधनाक्रान्ता हा प्रजे क्व गमिष्यसि ॥ १००५ ॥
राजा पापानि कुरुते दुर्बलः पीड्यते जनः ।
अपथ्यमपरो भुङ्क्ते शीलेनायास्यतेऽपरः ॥ १००६ ॥
कुराज्ये जीवितं नास्ति सुखं वरमराजकम् ।
विधवैव वरं नारी न तु कापुरुषाश्रया ॥ १००७ ॥

---

१. 'लीने' शा०.

जीर्णो जीवाम्यहं वृद्धः पञ्चवर्षः शिशुर्मृतः।
अहो नु राजदोषेण कष्टमापतितं मम ॥ १००८ ॥
मृते सुते न जीवामि ब्राह्मणी निधनोद्यता।
अहो पापस्य नृपतेर्ब्रह्महत्यापरम्परा ॥ १००९ ॥
एतदाकर्ण्य काकुत्स्थः क्षिप्रं संक्रान्ततद्व्यथः।
केदार इव केदारजलेनापूरितोऽभवत् ॥ १०१० ॥
स सभायां समानाय्य सामात्यं मुनिमण्डलम्।
न शशाक क्षणं वक्तुं दुःखसंतापचिन्तया ॥ १०११ ॥
ततो वसिष्ठजाबालिकौत्सगौतमनारदाः।
मार्कण्डेयात्रिमौद्गल्या वामदेवपुरोगमाः ॥ १०१२ ॥
भृगुप्रभृतयश्चान्ये सकात्यायनकाश्यपाः।
तस्थुर्दुःखाकुले राज्ञि चित्रन्यस्ता इवाचलाः ॥ १०१३ ॥
कारणं बालनिधने तेषु पृष्टेषु भूभुजा।
तमभाषत देवर्षिः क्षणं संचिन्त्य नारदः ॥ १०१४ ॥
पुरा कृतयुगे राजन्नेकवर्णं समक्रियम्।
मृत्युहीनमनायासमभूद्ब्रह्ममयं जगत् ॥ १०१५ ॥
ततस्त्रेतायुगे ब्रह्मक्षत्रं समतपोबलम्।
वैश्यशूद्रोपकरणं बभूवावधिजीवितम् ॥ १०१६ ॥
अनृताख्यं ततः पादमधर्मो निदधे परम्।
त्रिपाद्बभूव धर्मश्च रागद्वेषाकुले जने ॥ १०१७ ॥
अधर्मस्य ततः पादो द्वितीयः समपद्यत।
तेन द्वापरसंज्ञोऽसौ युगोऽधर्मस्तदा द्विपात् ॥ १०१८ ॥
तस्मिन्युगे प्रवृत्ते तु वैश्यानां शनकैस्तपः।
तपो नास्त्येव शूद्रस्य नोपदेशं न च व्रतम् ॥ १०१९ ॥
जुहोति शूद्रो यद्वाहं शूद्रो यत्कुरुते तपः।
गुरुर्भवति शूद्रो यत्तत्पूर्णं लक्षणं कलेः ॥ १०२० ॥

जनः शूद्रप्रधानोऽयं ब्राह्मणः शूद्रसेवकः ।
विमूढाः शूद्रशिष्याश्च कलौ प्रबलविप्लवे ॥ १०२१ ॥
विषयान्ते च तीव्रस्ते शूद्रस्तपसि वर्तते ।
तेन पापविपाकेन ब्राह्मणस्य मृतः सुतः ॥ १०२२ ॥
[[1]तस्मादन्विष्य राजेन्द्र स्वयं कुरु यथोचितम् ।
चतुर्भागहरो राजा प्रजानां पुण्यपापयोः ॥ १०२३ ॥
नारदेनेत्यभिहिते रामः सौमित्रिमब्रवीत् ।
तैलद्रोण्यां शिशोरस्य संनिधानं विधीयताम् ॥ १०२४ ॥]
इत्युक्त्वा पुष्पकं नाम स्मृतमात्रमुपस्थितम् ।
आरुह्य प्रययौ व्योम्ना खड्गबाणधनुर्धरः ॥ १०२५ ॥
स प्रतीचीं दिशं पूर्वमवलोक्योत्तरां ततः ।
पूर्वां च न जने किंचिद्ददर्श कुकृतं स्थितेः ॥ १०२६ ॥
गत्वाथ दक्षिणामाशां गिरेरुत्तरपार्श्वतः ।
ददर्श पङ्कजरजःपुञ्जपिञ्जरितं सरः ॥ १०२७ ॥
तत्रापश्यत्तपः क्षामं लम्बमानमधोमुखम् ।
पुरुषं तीव्रनिर्बन्धं साकारमिव दुर्ग्रहम् ॥ १०२८ ॥
तमुवाच ततो रामः कस्त्वमुग्रतपोनिधिः ।
ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वा सत्यमुच्यताम् ॥ १०२९ ॥
सत्यमेवामृतं लोके तपः सत्ये प्रतिष्ठितम् ।
व्रतं हि सत्योच्छिष्टानां कायक्लेशाय केवलम् ॥ १०३० ॥
इति पृष्टः स रामेण प्रोवाच व्रतनिश्चलः ।
अधोमुखेन वपुषा वैपरीत्यं वदन्निव ॥ १०३१ ॥
सशरीरो दिवं गन्तुं तपसा कृतनिश्चयः ।
शूद्रोऽहं शम्बुको नाम प्रार्थये सुतरां विभो ॥ १०३२ ॥

---

१. कोष्टकान्तर्गताः श्लोकाः क-ख-पुस्तकयोर्नोपलभ्याः. शारदालिपिपुस्तके लिखिताः.

एतदाकर्ण्य काकुत्स्थः कुपितस्तस्य विक्लवात्।
शिरश्चिच्छेद खड्गेन मूलं दुःखतरोरिव॥ १०३३॥
तत्र शक्रादयः प्रीत्या त्रिदशाः पुष्पवर्षिणः।
ऊचुर्वरं गृहाणेति वरार्हं रघुनन्दनम्॥ १०३४॥
सोऽवदद्वरदा यूयं यदि मे पुण्यभागिनः।
तदसौ ब्राह्मणस्यैव पुत्रः प्राप्नोतु जीवितम्॥ १०३५॥
इत्युक्ते सत्त्वनिधिना रामेण त्रिदिवौकसः।
तमूचुस्त्यज संतापं संप्राप्तं तेन जीवितम्॥ १०३६॥
यदैव कृत्तं भवता शिरः शूद्रतपस्विनः।
सह त्वज्जयशब्देन तदैव शिशुरुत्थितः॥ १०३७॥
अगस्त्यस्याश्रमं राम गच्छामस्तत्र नस्त्वया।
नेत्रपात्रामृतस्यन्दी भविष्यति समागमः॥ १०३८॥
दीप्ता समाप्तिरद्यैव कुम्भयोनेस्तपोवनी।
स हि द्वादशभिर्वर्षैरुत्थितोऽन्तर्जलान्मुनिः॥ १०३९॥
इत्युक्त्वा तेषु यातेषु व्रजन्रामो व्यलोकयत्।
काननं कुसुमामोदमत्तालिवलयाकुलम्॥ १०४०॥

इति शम्बुकवधः॥ ४०॥

तत्रालयविवादेन संजातकलहौ मिथः।
गृध्रोलूकौ समभ्येत्य वृद्धौ राघवमूचतुः॥ १०४१॥
इन्द्रस्त्वं परमैश्वर्यात्सोमस्त्वममृतप्रदः।
पावकः पापदहनाद्दण्ड्यानां शासनाद्यमः॥ १०४२॥
सर्वदेवमयो देवो विष्णुस्त्वं सर्वतोमुखः।
अस्मिन्विवादसंदेहे प्रमाणं भूपते भवान्।
ममालयं हरत्येष हरत्येष ममालयम्॥ १०४३॥
इति तद्वचनं श्रुत्वा रामः पप्रच्छ तौ पृथक्।
वसतोरालये कालः प्रयातो युवयोः कियान्॥ १०४४॥
अथ गृध्रोऽवदद्भूमिर्मनुष्यैरूर्ध्वबाहुभिः।

व्याप्ता यदाभून्निलयस्तदा प्रभृति मे प्रभुः ॥ १०४५ ॥
उलूकोऽप्यवदद्वृक्षैर्यदाभूद्भूमिरावृता ।
तदा प्रभृति मे राजन्नालयोऽयमनावृतः ॥ १०४६ ॥
एतत्तयोर्वचः श्रुत्वा वृद्धामात्यैः सह स्थितः ।
विचार्य राघवः क्षिप्रं स्थितिज्ञः स्वयमभ्यधात् ॥ १०४७ ॥
सर्गेऽस्मिन्पद्मनाभस्य नाभिपद्ममुखाकृतेः (?) ।
विष्णुः स्वाङ्गमलोत्पन्नौ जघान मधुकैटभौ ॥ १०४८ ॥
तन्मेदसा मेदिनी भूरभूत्पूर्वं द्रुमावृता ।
पश्चान्मनुष्यैः संपूर्णा तस्माद्गृध्रः पराजितः ॥ १०४९ ॥
इत्युक्ते कुपिते रामे वागुवाचाशरीरिणी ।
त्वद्दर्शनान्तःशापोऽस्य गृध्रस्याद्य क्षयं गतः ॥ १०५० ॥
नृपतिर्ब्रह्मदत्तोऽयं मासमालोक्य भोजने ।
गौतमेन पुरा शप्तः प्रयातो गृध्रतामिमाम् ॥ १०५१ ॥
एतदाकर्ण्य विरतप्रकोपे रघुनन्दने ।
गृध्ररूपं परित्यज्य ब्रह्मदत्तो दिवं ययौ ॥ १०५२ ॥

इति गृध्रोलूकिकम् ॥ ४१ ॥

अथागस्त्यं समभ्येत्य पूजयित्वा ययुः सुराः ।
रामोऽपि प्राप्य सानन्दस्तं ववन्दे कृताञ्जलिः ॥ १०५३ ॥
तस्मै मुनिवरः पूजां प्रीतः कृत्वा नृपोचिताम् ।
तरुणार्कप्रभादीप्तं दिव्यमाभरणं ददौ ।
तं राघवोऽब्रवीन्नायमुचितो नः प्रतिग्रहः ॥ १०५४ ॥
शासनं च तवालङ्घ्यं भगवन्युक्तमुच्यताम् ।
इत्युक्ते रघुनाथेन कुम्भयोनिरभाषत ॥ १०५५ ॥
अराजके पुरा सर्गे तेजोभागैर्दिवौकसाम् ।
क्षुतात्स्वयंभुवा सृष्टः क्षुप इत्यभवन्नृपः ॥ १०५६ ॥

शक्रांशो [1]प्रभुता राज्ञो वरुणांशः [2]स्वरूपतः।
धनदांशी [3]धनादानदाने [4]दण्डे यमांशतः॥ १०५७॥
तस्मादैन्द्रेण भागेन रत्नान्यर्हन्ति पार्थिवाः।
इत्युक्तो मुनिना रामो गृहीत्वा तदभाषत॥ १०५८॥
इदमाभरणं दिव्यं [5]पुरे मूर्तमिवाद्भुतम्।
[6]सूर्यप्रभं कुतः कान्तं कस्यैतदभवत्पुरा॥ १०५९॥
इति पृष्टो मुनिवरः काकुत्स्थेन तमब्रवीत्।
श्रूयतामिदमाश्चर्यं स्वयमालोकितं मया॥ १०६०॥
पुराहं निद्रितखगे पुष्पिते निर्जने वने।
चित्ररथ इव निःशब्दे फलाढ्ये शतयोजने॥ १०६१॥
भ्रान्त्वा मनोहरं स्वच्छमुत्फुल्लकमलोद्भवम्।
असंस्पृष्टमनाघ्रातमपश्यं कौतुकाकुलः॥ १०६२॥
अदूरे सरसस्तस्माद्दृष्टः स्पष्टः शवो मया।
अनष्टचारुरूपत्वात्स जीव इव कान्तिमान्॥ १०६३॥
[8]अतोऽहं विस्मयात्तत्र मुहूर्तं निश्चलः स्थितः।
अवश्यं रत्नरुचिरं विमानं हंससंयुतम्॥ १०६४॥
तस्मिन्विमाने पुरुषः श्रीमानप्सरसां गणैः।
सेवितो गीतवाद्येन मया दृष्टः शशिप्रभः॥ १०६५॥
अवरुह्य विमानाग्राच्चारुकेयूरकुण्डलः।
विलोलहारः शनकैः प्रययौ स शवान्तिकम्॥ १०६६॥
यथाकामं ततो भुक्त्वा मांसं तस्यातिपीवरम्।
सलिलं सरसि स्पृष्ट्वा सोऽविशत्खं विमानगः॥ १०६७॥
पश्चादेत्य मया पृष्टः को भवान्दीप्तविग्रहः।
आहारो गर्हितः किं ते श्रुत्वैतत्सोऽ[9]प्युवाच माम्॥ १०६८॥

---

१. 'भूपतेराज्ञा' क-ख. २. 'सुरूपता' शा०. ३. 'दया' शा०. ४. 'दण्डो' स्यात्. ५. 'परं' स्यात्. ६. 'सूत' क-ख, ७. 'त्पलम्' क-ख. ८. 'ततो' क. ९. 'भ्युवाच' क.

अहं विदर्भराजस्य सुदेवस्य यशोनिधिः ।
पुत्रः श्वेत इति ख्यातः सुरथश्च ममानुजः ॥ १०६९ ॥
भुक्त्वा वर्षसहस्राणि राज्यं निहतकण्टकम् ।
अभिषिच्यानुजं काले यातोऽहं तपसे वनम् ॥ १०७० ॥
त्रीणि वर्षसहस्राणि कृत्वाहं कानने तपः ।
यातोऽथ ब्रह्मसदनं ब्रह्मर्षिगणसेवितम् ॥ १०७१ ॥
संजातक्षुत्पिपासेन पृष्टस्तत्राशनं मया ।
ब्रह्मावदत्तवाहारः कायोऽयं पीवरो निजः ॥ १०७२ ॥
आश्रमे न त्वया दत्तं राजन्भोजनमर्थिने ।
शरीरं पूरितं चेदं तद्भक्षय यथारुचि ॥ १०७३ ॥
दत्तमासाद्यते सर्वमदत्तं लभ्यते कुतः ।
भोगबीजमनुप्तं हि कर्मक्षेत्रे न जायते ॥ १०७४ ॥
लोकेऽस्मिन्नित्यतृप्तेऽस्मिन्क्षुधा शुष्यसि भूपते ।
भोजनार्थी क्षुधाक्रान्तो यतिस्ते विमुखो गतः ॥ १०७५ ॥
कालेनाभ्येत्य कारुण्यादगस्त्यस्तपसां निधिः ।
स्वमांसाशनबीभत्सात्कृच्छ्रात्त्वां तारयिष्यति ॥ १०७६ ॥
इत्युक्तोऽहं भगवता स्वयं कमलयोनिना ।
इदं पूर्वशरीरं तद्भक्षयामि नवं सदा ॥ १०७७ ॥
सत्त्वं मयाद्य भगवन्दृष्टः किल्बिषसंक्षयात् ।
दिव्यं मे प्रतिगृह्णेदं भूषणं दुःखमुद्धर ॥ १०७८ ॥
श्रुत्वाहमेतत्तेनोक्तं[1] करुणाकूणिताशयः ।
स्नेहादकरवं तस्य भूषणानां प्रतिग्रहम् ॥ १०७९ ॥
विनष्टपूर्वदेहोऽथ दिव्येन वपुषान्वितः ।
विमानेन ययौ राजा श्वेतः पुण्यार्जितां दिवम् ॥ १०८० ॥
तदेतद्भूषणं तस्मान्मया प्राप्तं महीपते ।
त्वमेवास्योचितं धाम प्रकाशस्येव भास्करः ॥ १०८१ ॥

इति श्वेतोपाख्यानम् ॥ ४२ ॥

---

१. 'क्त्वैवं' क.

अगस्त्येनेति कथितं श्रुत्वा रामोऽब्रवीत्पुनः।
निर्मृगं तद्वनं कस्माद्भगवन्वर्जितं जनैः॥ १०८२॥
कौतुकादिति रामेण पृष्टस्तमवदन्मुनिः।
इक्ष्वाकोरभवद्दण्डः पुत्रः पुत्रशतानुगः॥ १०८३॥
दुराचारं विदित्वा तं विन्ध्यगह्वरभूमिषु।
पिता भूमिपतिश्चक्रे निर्जिताशेषभूपतिः॥ १०८४॥
स तत्र मधुमत्ताख्यं कृत्वा स्वर्गोपमं पुरम्।
पुरोहितं चोशनसं प्रजाकार्यरतोऽभवत्॥ १०८५॥
ततः कदाचित्कुसुमोल्लासहासविकासिनि।
मधौ मधुकरालापविनिवारितसंयमे॥ १०८६॥
वलानिलचलत्फुल्ललताहूतमनोभवे।
राजा चचार रुचिरे भार्गवाश्रमकानने॥ १०८७॥
तत्र कन्यामसामान्यलावण्यनलिनीं नवाम्।
ददर्श रतिसादृश्यलज्जया मलिनीकृताम्॥ १०८८॥
शुक्रात्मजां तामरजां राजा राजीवलोचनाम्।
विलोक्य मन्मथाविष्टो ययाचे रतिसंगमम्॥ १०८९॥
सावदद्गुरुपुत्री ते न गम्याहं महीपते।
रूपलुब्धः क्षयोत्सङ्गं पतङ्ग इव मा गमः॥ १०९०॥
इति ब्रुवाणामरजां राजा रागरजोवृतः।
उवाच निर्जने लब्धां कथं त्वां त्यक्तुमुत्सहे॥ १०९१॥
जाने त्वां पितुरायत्तां किंतु प्राणपणो मम।
कार्याकार्यविचारोऽस्ति कस्य जीवितसंशये॥ १०९२॥
सरस्फारानिलोद्भूतं मानसं स्तम्भ्यते कथम्।
अदभ्रश्वभ्रविभ्रष्टं कः पयो धर्तुमीश्वरः॥ १०९३॥
इत्युक्त्वा तां बलात्कन्यां विधूतकरपङ्कजाम्।
नलिनीमिव मातङ्गो दूषयित्वा जगाम सः॥ १०९४॥

---

१. 'चकार' क-ख. २. 'लुब्धो' शा०.

अथाश्रमं समभ्येत्य शुक्रः पुत्रीमधोमुखीम् ।
ददर्श साश्रुनयनामरजां रजसा प्लुताम् ॥ १०९५ ॥
शुक्रशापात्पपाताथ पुरे दण्डस्य भूपते ।
पांशुवृष्टिर्यया दग्धः स सराष्ट्रः क्षयं ययौ ॥ १०९६ ॥
उदभूद्दण्डकारण्यं दण्डशापाज्जनोज्झितम् ।
अरजायाः पदं तत्र पित्रादिष्टमभूत्सरः ॥ १०९७ ॥

इति दण्डशापः ॥ ४३ ॥

इत्याश्चर्यकथां श्रुत्वा पूजितः कुम्भयोनिना ।
प्रभाते तं समामन्त्र्य राघवः स्वपुरीं ययौ ॥ १०९८ ॥
राजधानीं प्रविश्याथ सभाभवनमेत्य सः ।
रत्नासनस्थितो द्वाःस्थं दिदेशानुजदर्शने ॥ १०९९ ॥
ततः प्रविश्य सोत्कण्ठौ नृपौ भरतलक्ष्मणौ ।
प्रणम्य ब्राह्मणशिशोर्जीविताप्तिमूचतुः ॥ ११०० ॥
तौ कथान्ते रघुपतिर्बभाषे यशसां निधिः ।
राजसूयसमारम्भे वर्तते मे मनोरथः ॥ ११०१ ॥
अशेषविजयप्राज्यं राज्यं तदभिधीयते ।
यज्ञोपकरणे यस्मिन्प्रवृद्धा धनसंपदः ॥ ११०२ ॥
सुकृतोद्यानवल्लीभिः किमेताभिर्विभूतिभिः ।
यशोभिः पुष्पिता दिक्षु राजसूयोज्ज्वलैर्न या ॥ ११०३ ॥
श्रुत्वैतद्भरतो धीमान्राममूचे कृताञ्जलिः ।
अर्हस्त्वमेव भूपाल राजसूयस्य कोऽपरः ॥ ११०४ ॥
यज्ञानां प्रवरश्चासौ भवानिव महीभुजाम् ।
अन्ते तु राजसूयस्य भवत्येव जगत्क्षयः ॥ ११०५ ॥
सोमस्य राज्ञः संपूर्णे राजसूये सुधानिधेः ।
क्षयोऽभूज्ज्योतिषां घोरः संग्रामे तारकामये ॥ ११०६ ॥
वरुणस्यापि निर्वृत्ते तस्मिन्यज्ञे जलौकसाम् ।
दारुणः सर्वलोकानां संहारः संगरेऽभवत् ॥ ११०७ ॥

शतक्रतोरपि पुरा यस्मिन्यज्ञे महीयसि।
देवासुरमभूद्युद्धं चिरं विश्वक्षयक्षमम् ॥ ११०८ ॥
यज्ञान्ते सर्वभूतानां हरिश्चन्द्रस्य भूपतेः।
बभूवाडीवके युद्धे स्थावराणां च संक्षयः ॥ ११०९ ॥
तस्मात्त्वं पृथिवीपाल सर्वसत्त्वहिते रतः।
त्रैलोक्यायासदं यज्ञं तं कथं कर्तुमर्हसि ॥ १११० ॥
भरतेनेत्यभिहिते प्रशशंस सुहृन्नृपः।
अभयं सर्वभूतानां यज्ञः क्रतुशताधिकः ॥ ११११ ॥
ततो जगाद सौमित्रिः प्रणतः पृथिवीपतिम्।
राजसूयसमो राजन्नश्वमेधो महामखः ॥ १११२ ॥
बभूव विश्वविजयी वृत्रो नाम महासुरः।
शतयोजनविस्तीर्णो घनस्तद्द्विगुणोन्नतः ॥ १११३ ॥
विष्णुनाप्यायतबलस्तं शक्रस्तपसि स्थितम्।
तदाविष्टेन वज्रेण जघान घनविक्रमम् ॥ १११४ ॥
आलिलिङ्ग ततः शक्रं ब्रह्महत्या पिशाचिका।
अदृश्यः सर्वभूतानामाक्रान्तः सोऽभवद्यथा[1] ॥ १११५ ॥
ततो विष्णुगिरा देवाः शक्रं किल्बिषशान्तये।
अश्वमेधे कृतोद्योगास्तं गत्वा चक्रिरे स्फुटम् ॥ १११६ ॥
संपूर्णे विधिवत्तस्मिन्नश्वमेधे शतक्रतोः।
सुरैश्चतुर्धा विन्यस्ता ब्रह्महत्या मुमोच तम् ॥ १११७ ॥
जलस्थिता विशत्येव सा तत्राशुचिकारणम्[2]।
वृक्षेषु च स्थिता वृक्षच्छेत्तारं यातु पर्वसु ॥ १११८ ॥
रजस्वलासु नारीषु स्थित्वा विशति तद्गतम्।
स्थिता चतुर्थेनांशेन सा ब्राह्मणवधे स्वयम् ॥ १११९ ॥

---

१. 'व्यथा' स्यात्. २. चतुर्मास्थां पूर्णोदनदीषु इत्यर्थः.

भागैश्चतुर्भिरायातं तस्यां देवैः सुरेश्वरः ।
प्रभावादश्वमेधस्य पुनः स्वपदमाययौ ॥ ११२० ॥

इति वृत्रोपाख्यानम् ॥ ४४ ॥

कथितं लक्ष्मणेनैतदाकर्ण्य रघुनन्दनः ।
उवाच हर्षपेयूषं स्मृतकान्त्या सृजन्निव ॥ ११२१ ॥
सत्यमेतद्यदेवोक्तं सुमित्रानन्दन त्वया ।
अश्वमेधसमं लोके विद्यते न हि पावनम् ॥ ११२२ ॥
श्रूयते किल पुत्रोऽभूत्कर्दमस्य प्रजापतेः ।
इडो नाम क्षितिपतिर्वाह्लीकेषु यशोनिधिः ॥ ११२३ ॥
स विश्वविजयो राजा प्रजासंरक्षणव्रतः ।
सोमवत्सर्वभूतानां बभूव प्रियदर्शनः ॥ ११२४ ॥
ततः कदाचित्पुष्पेषुमित्रे चैत्यमहोत्सवे ।
स सैन्यकानने राजा चचार मृगयारसात् ॥ ११२५ ॥
नानाकुसुमसंछन्ननवकाननकौतुकात् ।
स स्कन्दजन्मवसुधां रौक्मं शरवणं ययौ ॥ ११२६ ॥
श्रीकण्ठस्तत्र भगवाञ्शेखरेन्दुप्रभामृतैः ।
जीवयन्निव पुष्पेषुं विजहार सतीसखः ॥ ११२७ ॥
स्वैरिणः शासनात्तत्र देवस्य गिरिजापतेः ।
स्त्रीत्वं प्रापुर्गणाः सर्वे खगवृक्षमृगैः सह ॥ ११२८ ॥
सर्वभूतगणे तत्र स्त्रीभूते सचराचरे ।
विललास विलासाङ्कः शशाङ्काभरणो भवः ॥ ११२९ ॥
तं देशं भूपतिः प्राप्य सभृत्यबलवाहनः ।
सहसा विस्मितमयः स्त्रीरूपः समपद्यत ॥ ११३० ॥
स रुद्रशासनं ज्ञात्वा तमेव शरणं गतः ।
उपोषितश्चिरं स्तोत्रजपध्यानरतोऽभवत् ॥ ११३१ ॥

१. 'स्पृश' क.

तमुवाच ततो देवः प्रहस्य गिरिजापतिः ।
पुरुषत्वं विना राजन्यदभीष्टं तदुच्यताम् ॥ ११३२ ॥
एतदाकर्ण्य भूपालः किंचिद्भग्नमनोरथः ।
प्रत्याख्यातो भगवता भवानीं शरणं ययौ ॥ ११३३ ॥
मासं भविष्यसि वधूः पुमान्मासं भविष्यसि ।
मासि मासि निजं रूपमतीतं न स्मरिष्यसि ॥ ११३४ ॥
इति देव्या वचः श्रुत्वा स्त्रीभूतैः सहितोऽनुगैः ।
स गत्वान्यवनं दिव्यं ददर्श रुचिरं सरः ॥ ११३५ ॥
तस्येशशासनात्त्यक्ततनोरिव मनोभुवः ।
अभूदुच्चकुचाभोगजघनाभरणं वपुः ॥ ११३६ ॥
सा नूपुररवाकृष्टकलहंसाकुला शनैः ।
चचार सरसस्तीरे श्रीरिवाम्भोरुहोदरात् ॥ ११३७ ॥
ततः सोमसुतः श्रीमान्विपुले तपसि स्थितः ।
बुधो रूपनिधिः कान्तां तामपश्यत्सुलोचनाम् ॥ ११३८ ॥
आताम्रपाणिनलिनां चरणारुणितावनिम् ।
दृष्ट्वा जहर्ष बिम्बोष्ठीं स तां रागमयीमिव ॥ ११३९ ॥
ततः स्मरशरासारपातपक्षानिलैरिव ।
न बभूव धृतेः पात्रं बुधः प्रोद्भूतमानसः ॥ ११४० ॥
अथाङ्गना तदनुगाः स जगाद प्रियं वचः ।
किं नार्यः शैलकटके वासोऽस्मिन्नभिधीयते ॥ ११४१ ॥
एष निर्झरझाङ्काररम्यपुष्पफलोचितः ।
देशः किंपुरुषैस्तत्र क्रियतां प्रियसंगमः ॥ ११४२ ॥
इति तस्य गिरा शैलतटे किंपुरुषाश्रिते ।
किं नार्य इति तेनोक्ताः किंनार्यस्ता ययुः स्त्रियः ॥ ११४३ ॥
ततः स तासु यातासु कान्तां तामेत्य सादरः ।
उवाच नवलावण्यपण्यविक्रीतमानसः ॥ ११४४ ॥

आनन्दस्यन्दिनी कान्तिरियं तव सितस्मिते।
विभाति व्याहता[1] लोके कीर्तिं मन्ये मनोभुवः॥ ११४५॥
तस्य कीर्णसुधासिन्धोरिन्दोः शर्वशिरोमणेः।
स्मरमित्रस्य पुत्रोऽहं बुधः सुभ्रु भजस्व माम्॥ ११४६॥
एतदाकर्ण्य मधुरं सा बुधस्य सुमध्यमा।
मन्मथेन वशं नीता तथेति प्रत्यपद्यत॥ ११४७॥
सौभाग्यभामिनी तेन रममाणा घनस्तनी।
सा मेने माधवं मासं नीतं क्षणमिव क्षणात्॥ ११४८॥
मासावसाने शयनादुत्क्षिप्ता सहसैव सा।
बभूव विस्मृतातीतस्त्रीभावः स महीपतिः॥ ११४९॥
सोऽपृच्छद्बुधमभ्येत्य राजाहं मृगयारसात्।
प्रविष्टः कानने सैन्यं न जाने तत्क मे गतम्॥ ११५०॥
सैन्यहीनः क्व गच्छामि वनेऽस्मिन्निवसाम्यहम्।
राज्यं ममानुजो वीरः शशिबिन्दुः करिष्यति॥ ११५१॥
इत्युक्ते भूभुजा तेन बुधस्तं प्रत्यभाषत।
शिलावर्षेण गहने भृत्यास्तत्र निसूदिताः॥ ११५२॥
त्वया सुप्तेन न ज्ञाता भविष्यन्त्यपरेषु नः।
कंचित्कालं प्रतीक्षस्व वनेऽस्मिन्पूजितो मया॥ ११५३॥
बुधेनेति ब्रुवाणेन स कुर्वन्विबुधाः कथाः।
मासे प्रयाते कान्तैव साभूद्विस्मृतपौरुषा॥ ११५४॥
अथ मासं सिषेवे सा बुधं निधुवनैषिणी।
मासं च पुरुषो भूत्वा चक्रे पौराणिकाः कथाः॥ ११५५॥
ततः सा नवमे मासि पूर्णे पूर्णेन्दुसुन्दरम्।
असूत सूर्यसंकाशं पुरूरवसमात्मजम्॥ ११५६॥
तं जातमात्रं निक्षिप्य पुत्रं चन्द्रगृहे बुधः।
चकार भूपतेश्चिन्तां स्त्रीभावविनिवृत्तये॥ ११५७॥

---

१. 'व्याहतां' स्यात्.

स समानाय्य संवर्तच्यवनप्रमुखान्मुनीन् ।
रुद्रप्रसादनोपाये क्रियां तां तामचिन्तयत् ॥ ११५८ ॥
स्वेच्छागतः पिता राज्ञा कर्दमोऽथ प्रजापतिः ।
तानुवाचाश्वमेधेन तुष्टोऽस्त्येव महेश्वरः ॥ ११५९ ॥
ततो बुधाश्रमे तस्मिन्संपूर्णे नृपतेः क्रतौ ।
तुतोष शर्वस्तद्वाक्यात्पुरुषश्चाभवन्नृपः ॥ ११६० ॥
प्रतिष्ठानपुरे जातस्तत्पुत्रोऽभूत्पुरूरवाः ।
तस्मान्नास्त्यश्वमेधस्य प्रभावे सदृशः क्रतुः ॥ ११६१ ॥
राघवेनेत्यभिहिते हृष्टौ भरतलक्ष्मणौ ।
अश्वमेधसमारम्भे जातोत्कण्ठौ ननन्दतुः ॥ ११६२ ॥

इतीडापुरुषीयम् ॥ ४५ ॥

ततः समाययुः सर्वे मुनयो विनयावनेः ।
यज्ञारम्भे नरपतेर्ब्रह्मलोकाद्दिवो भुवः ॥ ११६३ ॥
उत्सृष्टे लक्ष्मणोदारे हये लक्ष्मणरक्षिते ।
आहूते सारगैर्दूतैः सुग्रीवे सविभीषणे ॥ ११६४ ॥
रामशासनमानेन प्राप्तेष्वखिलराजसु ।
गोमत्यां नैमिषतटे कृते यज्ञनिवेशने ॥ ११६५ ॥
राशिभिर्हेमरत्नानां पूरिते गिरिसंनिभैः ।
पृथक्पृथग्मुनिवरैर्वाटेष्वध्यासितेषु च ॥ ११६६ ॥
अवर्ततातिशक्रस्य राज्ञो यज्ञः सदोचितः ।
नानार्थिसार्थसंपूर्णसर्वाशाकल्पपादपः ॥ ११६७ ॥
सोमं स्वप्नेऽपि नायाति दूरे वरुणशक्रयोः ।
सा श्रीः कुतः कुवेरस्य यज्ञे रामस्य याभवत् ॥ ११६८ ॥
तत्र हेममयी सीता कुशलैः शिल्पिभिः कृता ।
शुशुभे राघवप्रीत्या वनात्स्वयमिवागता ॥ ११६९ ॥
तस्थौ शिष्यैर्वृतस्तत्र वाल्मीकिस्तेजसां निधिः ।
द्रष्टुं मुनिसभां प्राप्तः साक्षादिव प्रजापतिः ॥ ११७० ॥

मुनेस्तस्याज्ञया तत्र कुमारौ कान्तविग्रहौ ।
गन्धर्वाविव लोकेषु श्रवणामृतवर्षिणौ ॥ ११७१ ॥
गातुं रामयशः प्राप्तौ कैलासादिव किंनरौ ।
मूर्तौ पुष्पाकरस्येव मासौ षट्पदनादितौ ॥ ११७२ ॥
वीणावेणुस्वनेनैव मीलितं मूर्छनाजुषा ।
कलकण्ठौ कुशलवौ रामायणमगायताम् ॥ ११७३ ॥
उद्गीतश्रवणाश्चर्यविस्मयालोलमौलयः ।
क्षीबा इवाभवन्सर्वे पूर्णमानानना जनाः ॥ ११७४ ॥
राघवः सानुजो भूपा मुनयः कपिराक्षसाः ।
चित्रन्यस्ता इव बभुः काव्ये गीते च विस्मिताः ॥ ११७५ ॥
तौ वीक्ष्य विस्मयालोललोके सदसि सर्वतः ।
बभूवानन्दसंकल्पमयो जल्पः परस्परम् ॥ ११७६ ॥
अहो गीतमहो काव्यमहो रूपं कुमारयोः ।
न विद्मस्त्रिदिवे ब्रह्मभुवने वा ययोर्यथा ॥ ११७७ ॥
रामस्य सदृशावेतौ दर्पणे बिम्बिता इव ।
जटावल्कलमात्रेण वैलक्षण्यमुपागतौ ॥ ११७८ ॥
रामस्य तनयावेव यदि विद्याधराविमौ ।
तत्किं विद्याधरोत्सङ्गे श्रुतोऽस्माभिर्न भूपतेः ॥ ११७९ ॥
इति तेषां कथयतां रामस्य चरितं सदा ।
कर्मान्तरेषु यज्ञेषु सर्गबन्धमगायताम् ॥ ११८० ॥
न तौ जगृहतुर्दत्तं बहु हेम महीभुजा ।
धने पतति न स्निग्धा दृष्टिरुन्नतजन्मनाम् ॥ ११८१ ॥
केनेदं विहितं काव्यमिति पृष्टौ महीभुजा ।
वाल्मीकिना कृतमिति प्रणतौ तौ तमूचतुः ॥ ११८२ ॥
ततस्तौ तनयौ ज्ञात्वा चक्षुषा हृदयेन च ।
राघवः साश्रुनयनः प्रोवाच दयितां स्मरन् ॥ ११८३ ॥

हनुमत्प्रमुखाः सर्वे वाल्मीकिं तपसां निधिम्।
विज्ञापयन्तु वचसा मम निर्घृणचेतसः॥ ११८४॥
निर्दोषां भगवञ्ज्ञाने जानकीं जनसंभवात्।
अपवादान्मया त्यक्ता कीर्तिलुब्धेन केवलम्॥ ११८५॥
सा ते सदसि पूर्णेऽस्मिन्नेकीभूते जगन्मये।
करोतु शपथं सीता प्रत्ययं यात्वयं जनः॥ ११८६॥
वचनं राघवस्यैतद्वाल्मीकेस्ते न्यवेदयन्।
वाल्मीकिरपि तत्सर्वं तथेति प्रत्यपद्यत॥ ११८७॥
ततः प्राप्ते मुनिमये व्याप्ते सदसि राजभिः।
जानक्याः शपथं द्रष्टुमेकीभूतोऽभवज्जनः॥ ११८८॥
अदृश्यत ततः सीता सास्रा किंचिदधोमुखी।
सरस्वतीव ब्रह्माणं वाल्मीकिमनुगामिनी॥ ११८९॥
ह्रिया मुहुः करोत्सृष्टकषायायतलोचना।
दृष्ट्वा हेममयीं पत्नीमिव संजातमत्सरा॥ ११९०॥
पूज्यमाना मुनिवरैरिक्ष्वाकुकुलपावनी।
भूभृत्समागमे तस्मिन्गङ्गेवाकुलतां गता॥ ११९१॥
ततो हालाहलाशब्दस्तां दृष्ट्वा सास्रुलोचनाम्।
बभूव सर्वभूतानां साधुवादपुरःसरः॥ ११९२॥
जनमध्यमथासाद्य वाल्मीकिरवदन्मुनिः।
इयं सीता सती राम प्रत्ययं गन्तुमागता।
नभस्तटीव पङ्केन लिप्ता वितथवादिभिः॥ ११९३॥
यदि राम महीपाल मुनयो सुनयो वयम्।
असत्यं यदि नास्मासु तत्सीता शीलशालिनी॥ ११९४॥
इमौ ते तनयौ राम कामपुष्पाकराविव।
मनस्तत्रैव नेत्रे च वयं धर्मश्च साक्षिणः॥ ११९५॥
इत्युक्ते मुनिना तत्र कृतासनपरिग्रहे।

---

१. 'न्मुनये' शा०.

देवगन्धर्वसिद्धानां बभूव गगने रवः ॥ ११९६ ॥
ततो जगाद काकुत्स्थः शृण्वतां सर्वदेहिनाम् ।
जानाम्यपापां वैदेहीं जानामि यमजौ सुतौ ॥ ११९७ ॥
न ममाप्रत्ययो देव्या मनोवृत्तिरिवात्मनः ।
करोतु शपथं सीता जनवादः प्रमृज्यताम् ॥ ११९८ ॥
कुले जन्म यशः शुभ्रं कुलमानोन्नतं मनः ।
अपवादभयान्नित्यं हृदये शोकशङ्कवः ॥ ११९९ ॥
इत्युक्ते रघुनाथेन जानकी रचिताञ्जलिः ।
उवाचाधोमुखी हर्षं वीक्षमाने(णे)व हारितम् ॥ १२०० ॥
यथा मे राघवादन्यो न संकल्पेन दैवतम् ।
तेन सत्येन विवरं भूतधात्री ददातु मे ॥ १२०१ ॥
मनोनयनवाक्चेष्टास्वप्नैरव्यभिचारिणी ।
यद्यहं रघुनाथस्य तन्मे रन्ध्रं ददातु भूः ॥ १२०२ ॥
इत्युक्ते रघुनाथस्य पत्न्या तूर्णं महीतलात् ।
उदतिष्ठद्धृतं मूर्ध्ना भुजगैः काञ्चनासनम् ॥ १२०३ ॥
उपविष्टा ततस्तस्मिन्वसुधा सर्वसाक्षिणी ।
आदाय पाणिना सीतां पातालमविशत्पुनः ॥ १२०४ ॥
अदर्शनं प्रयातायां तस्यां सर्वे सभास्थिताः ।
बभूवुर्मोहविवशाः पुष्पवृष्टिः पपात च ॥ १२०५ ॥

इति वसुधाप्रवेशः ॥ ४६ ॥

अथ दुःखाग्निसंतप्तः काकुत्स्थः साश्रुलोचनः ।
शून्यं जगन्मन्यमानस्तनुहीन इवाभवत् ॥ १२०६ ॥
स कोपादवदद्देवी मही सीतां प्रयच्छतु ।
श्वश्रूर्ममैषा न रुषा जीवितं हन्तुमर्हति ॥ १२०७ ॥
ममापि विवरं भूमिर्ददातु दयितार्थिनः ।
पत्नीं वा भूमिरहितं करोमि जगदन्यथा ॥ १२०८ ॥

इत्युक्त्वा धनुषि क्रोधाद्बाणेषु च ददौ दृशम् ।
वसुधाभेदसंनद्धं ब्रह्मा तमवदद्दिवः ॥ १२०९ ॥
न कर्तुमर्हसि वृथा संतापं रघुनन्दन ।
भवं सरस्व वक्तुं मे न युक्तं जनसंनिधौ ॥ १२१० ॥
इत्युक्त्वान्तर्हिते व्योम्नि सह देवैः प्रजासृजि ।
भूतलादुद्गता वाणी प्रोच्चचाराशरीरिणी ॥ १२११ ॥
श्रमं मिथ्यैव काकुत्स्थ मा कृथा मैथिलीकृते ।
आयासः केवलं मुष्ट्या गगनग्रहणग्रहः ॥ १२१२ ॥
सा पितॄणां स्वधा नित्यं सुधा तृप्तिर्दिवौकसाम् ।
विष्णोर्वक्षसि सा लक्ष्मीः सिद्धानां मूर्ध्नि सा स्थिता॥१२१३॥
तद्दर्शनरसः कोऽपि यदि ते न निवर्तते ।
तदेतौ तद्वपुर्जातौ पुत्रौ पश्यामृतोपमौ ॥ १२१४ ॥
एतदाकर्ण्य नृपतिर्वीरः संस्तम्भ्य विक्रमम् ।
पुत्रौ गृहीत्वा यज्ञान्ते हेमपूर्णां महीं ददौ ॥ १२१५ ॥
पुनर्यज्ञशतैरिष्ट्वा दत्त्वा च विपुलं वसु ।
प्रशान्तोपप्लवे राज्ये स रराज जनेश्वरः ॥ १२१६ ॥

इत्यश्वमेधः ॥ ४७ ॥

अथ रामाज्ञया गत्वा भरतो मातुलान्तिकम् ।
गन्धर्वनगरे वीरान्गन्धर्वान्युधि दुर्मदान् ॥ १२१७ ॥
त्रिकोटिसंख्यानुन्मथ्य कालास्त्रेण प्रमाथिना ।
गान्धारविषयं चक्रे नगरीभ्यां विभूषितम् ॥ १२१८ ॥
भरतस्तत्र विदधे स्वपुत्रौ तक्षपुष्कलौ ।
तयोः पुर्योर्महीपालौ कृत्वा च स्वपुरीं ययौ ॥ १२१९ ॥
प्राप्य तक्षशिलां तक्षः पुष्करः पुष्करावतीम् ।
इक्ष्वाकुकुलतुल्येन यशसा तौ विरेजतुः ॥ १२२० ॥

इति गान्धारविषयः ॥ ४८ ॥

१. 'भावं' शा०. २. 'पुष्ट्या' क-ख.

ततः पुरीद्वयं रामश्चक्रे लक्ष्मणपुत्रयोः ।
अङ्गदस्य च वीरस्य चन्द्रकेतोश्च भूपतेः ॥ १२२१ ॥
अङ्गदस्याङ्गदीयाख्या साभूद्भूमिपतेः पुरी ।
चन्द्रवत्यभिधा चन्द्रकेतोरप्यपराभवत् ॥ १२२२ ॥

इति लक्ष्मणपुत्राभिषेकः ॥ ४९ ॥

ततः कदाचिदभ्येत्य कालस्तापसविग्रहः ।
विवेश वेश्म रामस्य लक्ष्मणेन निवेदितः ॥ १२२३ ॥
रामेण पूजितः सोऽथ कृतासनपरिग्रहः ।
अवदन्निर्जने किंचिद्वक्तुकामोऽस्मि भूपते ॥ १२२४ ॥
अस्मिन्यः प्रविशेन्मन्त्रे स वध्य इति संविदा ।
लक्ष्मणेनेत्यभिहिते तयोः स्वैरमभूत्कथा ॥ १२२५ ॥
ततो जगाद भूपालं तपसा प्रश्रयात्पुनः ।
विसृष्टोऽहं भगवता स्वयं कमलजन्मना ॥ १२२६ ॥
यः स ते नाभिजाज्जातः पद्मनाभसरोरुहात् ।
कृतकृत्यं जगत्कार्ये त्वामाह स चतुर्मुखः ॥ १२२७ ॥
कैटभारे जगद्भारं हरता रक्षितं त्वया ।
विलुण्ठ्यमानं रक्षोभिर्देवानां विशदं यशः ॥ १२२८ ॥
एकादशसहस्राणि वर्षाणां राज्यमूर्जितम् ।
कृतं तद्वैष्णवं धाम निजमासाद्यते न किम् ॥ १२२९ ॥
शक्तिर्विश्वपरित्राणे विश्वनिर्माणशालिनी ।
सुरकार्यैकनिरता न त्वया रहितस्य मे ॥ १२३० ॥
प्रजापतेरिति वचस्तुभ्यमावेदितं मया ।
कालोऽहं पूर्वतनयस्तव मायासमुद्भवः ॥ १२३१ ॥
एतत्कालवचः श्रुत्वा प्रहस्योवाच राघवः ।
यदाहं भगवान्ब्रह्मा पुत्र सर्वं करोमि तत् ॥ १२३२ ॥

इति कालवाक्यम् ॥ ५० ॥

एवं तयोः कथयतोर्दुर्वासाः कोपनो मुनिः ।
अभ्येत्य भूपतिर्द्वारं तूर्णं लक्ष्मणमभ्यधात् ॥ १२३३ ॥
राघवं द्रष्टुमिच्छामि कार्यमात्यन्तिकं मम ।
श्रुत्वैतदूचे सौमित्रिर्व्यग्रः क्षितिपतिर्मुने ॥ १२३४ ॥
भवान्मुहूर्तं क्षमतामित्युक्ते लक्ष्मणेन सः ।
उवाचादर्शने राज्ञः पुरं सर्वं दहाम्यहम् ॥ १२३५ ॥
एतदाकर्ण्य सौमित्रिर्निश्चित्यात्मवधं धिया ।
मुनेरागमनं तूर्णं काकुत्स्थाय न्यवेदयत् ॥ १२३६ ॥
विसृज्य कालं भूपालस्तं ददर्शादरान्मुनिम् ।
पूजितस्तेन विधिना स मुनिस्तमभाषत ॥ १२३७ ॥
सहस्रं राम वर्षाणां प्रयातं भोजनस्य मे ।
तूर्णं त्वत्तस्तदिच्छामि यथायुक्तं विधीयताम् ॥ १२३८ ॥
उक्त्वेत्यत्रिसुतः सिद्धमुपनीतं महीभुजा ।
पवित्रमन्नं भुक्त्वैव जगामाभिमतां दिशम् ॥ १२३९ ॥
ततः सौमित्रिमालोक्य दुःखसंतप्तमानसः ।
क्षणं रघुपतिर्दैन्यान्नोचे किंचिदवाङ्मुखः ॥ १२४० ॥
तं लक्ष्मणोऽवददेव प्रतिज्ञां मा वृथा कृथाः ।
जहि मां स्नेहमुत्सृज्य लोके सत्यव्रतो ह्यसि ॥ १२४१ ॥
स्नेहानुबद्धो मिथ्यैव सर्वत्रायं शरीरिणाम् ।
एवंरूपैव कालस्य निःसारतरला गतिः ॥ १२४२ ॥
लक्ष्मणेनेत्यभिहिते वसिष्ठप्रमुखैर्नृपः ।
विचार्य सत्यसंदेहं(?) सास्रुस्तत्याज लक्ष्मणम् ॥ १२४३ ॥
लक्ष्मणः सरयूं गत्वा निरुद्धसकलेन्द्रियः ।
चिन्तयद्वैष्णवं धाम निरुच्छ्वासोऽभवत्क्षणात् ॥ १२४४ ॥
तं गृहीत्वा स्वयं शक्रः सानुगस्त्रिदिवं ययौ ।
रामोऽपि तद्विरहितः शून्या मेने दिशो दश ॥ १२४५ ॥

इति लक्ष्मणत्यागः ॥ ५१ ॥

अथ निश्चित्य मुनिभिर्महाप्रस्थानमात्मनः ।
रामः कुशं कुशावत्यां तनयं विदधे नृपम् ॥ १२४६ ॥
अभिषिच्य लवं धीरः श्रावस्त्यां वसुधाधिपम् ।
शत्रुघ्नं शीघ्रगैर्दूतैरानिनाय सहानुगम् ॥ १२४७ ॥
सुबाहुः शत्रुघाती च शत्रुघ्नतनयौ नृपौ ।
बभूवतुः पितुर्वाक्यान्मथुराविदिशाधिपौ ॥ १२४८ ॥
नृपस्ततः समादाय काषायवसनं व्रतम् ।
उवाचानुव्रतारम्भौ वायुपुत्रविभीषणौ ॥ १२४९ ॥
पृथिव्यां प्रथिता यावन्मत्कथा विचरिष्यति ।
युवयोर्यशसा सार्धं तावदायुर्भविष्यति ॥ १२५० ॥
इत्युक्त्वा राघवः सास्रुः प्रणयाद्विनिवर्त्य तौ ।
मौनी कुशान्समादाय निर्ययौ गलितग्रहः ॥ १२५१ ॥
सव्ये पार्श्वे बभूवास्य मूर्ता भूः श्रीश्च दक्षिणे ।
वेदाः सर्वे द्विजाकाराः सावित्री च स्वरूपिणी ॥ १२५२ ॥
ओंकारोऽथ वषट्कारो मुनयः कुलभूधराः ।
सान्तःपुराः प्रकृतयः पौरजानपदैः सह ॥ १२५३ ॥
सुग्रीवप्रमुखास्तेऽपि कृतकृत्याः प्लवंगमाः ।
अनुजग्मुः प्रजानाथं भूतैः सह चराचरैः ॥ १२५४ ॥
सरयूपुलिनं प्राप्ते शनै रामे प्रजापतिः ।
अदृश्यत सुरैः सार्धं विमानोद्भासिताम्बरैः ॥ १२५५ ॥
सोऽब्रवीद्भूपते दिष्ट्या पदं प्राप्तोऽसि शाश्वतम् ।
भगवन्प्रविश व्यक्तां स्वाधीनां वैष्णवीं तनुम् ॥ १२५६ ॥
इत्युक्ते ब्रह्मणा रामो वैष्णवीं तनुमाश्रितः ।
तमभाषत कल्प्यन्तां लोका मदनुयायिनः ॥ १२५७ ॥
ततः संतानका नाम लोका ब्रह्मविनिर्मिताः ।
बभूवुः सर्वभूतानां रघुनाथानुगामिनाम् ॥ १२५८ ॥

१. 'यायिनाम्' शा०.

रामे स्वपदमारूढे ते जनाः सरयूजले ।
त्यक्तमोहाः प्रभालोलैर्विमानैस्त्रिदिवं ययुः ॥ १२५९ ॥
सुग्रीवप्रमुखाः सर्वे त्रिदशांशाः प्लवङ्गमाः ।
तां तां मूर्तिं समाश्रित्य स्वं स्वं धाम प्रपेदिरे ॥ १२६० ॥
शून्या वर्षशतान्यासीदयोध्या रामवर्जिता ।
न यावदृषभो नाम बभूव भुवि भूपतिः ॥ १२६१ ॥
कर्णे कृताश्च हृदये निहिताश्च सद्भि-
मूर्ध्ना धृताश्च मणयो रुचिरा इवैते ।
रामस्य चारुचरितामृतदुग्धसिन्धो-
रानन्दचन्द्रजनकस्य गुणा जयन्ति ॥ १२६२ ॥
इति दुरितविरामः कीर्तिकान्ताभिरामः
सुजनहृदयरामः कोऽप्यभूद्यः स रामः ।
प्रकृतमनुसरामः पापपाशं तरामः
सुकृतभुवि चरामस्तस्य नाम स्मरामः ॥ १२६३ ॥

इति स्वर्गारोहणम् ॥ ५२ ॥

इति क्षेमेन्द्रविरचिते रामायणकथासारे उत्तरकाण्डः समाप्तः ।

---

भोगार्हे नवयौवनेऽपि विपिने चीराम्बरो राघव-
स्तत्राप्यस्य परेण दारहरणं क्लेशस्तदन्वेषणे ।
संप्राप्तापि जनापवादरजसा त्यक्ता पुनर्जानकी
सर्वं दुःखमयं तदस्तु भवतां श्लाघ्यो विवेकोदयः ॥ १ ॥
स वः पुनातु वाल्मीकेः सूक्तामृतमहोदधिः ।
ओंकार इव वर्णानां कवीनां प्रथमो मुनिः ॥ २ ॥
कश्मीरेष्वभवत्सिन्धुजन्मा चन्द्र इवापरः ।
प्रकाशेन्द्रः स्थिरा यस्य पृथ्व्यस्य कीर्तिकौमुदी ॥ ३ ॥
सदा दानार्द्रहस्तेन महता भद्रमूर्तिना ।
साधु कुञ्जरिता येन प्राप्ता कीर्तिपताकिना ॥ ४ ॥

विद्वज्जनसपर्यासपर्यासस्वजनोत्सवः।
कथासारसुधासारं क्षेमेन्द्रस्तत्सुतो व्यधात्॥ ५॥
मुक्तात्मना रणत्तारहारनूपुरमेखला।
विलासलासिका यस्य वदनं भाति भारती॥ ६॥
लोभाभिमानमलिनानि धनानि नित्यं
कान्ताकटाक्षचटुलानि च जीवितानि।
ज्ञात्वेति चन्द्रधवलानि यशांसि येन
काव्यैः स्थिराणि भुवनेषु निवेशितानि॥ ७॥
आमोदयन्ति सरसान्यतिकोमलानि
विप्रेण रामयशसा प्रणयार्थितानि।
येनानिशं प्रणयभूषणतां जनस्य
नीतानि काव्यकुसुमान्यसितानि तानि॥ ८॥
गुणागुणतया भान्ति येषु वस्तेषु विस्मयः।
निर्गुणेषु गुणानेव ये वदन्ति जयन्ति ते॥ ९॥

इति क्षेमेन्द्रविरचिता रामायणमञ्जरी समाप्ता।

---

१. 'कस्तेषु' स्यात्.